दितालक्ता । भूजोर्थग्रहणाद्धर्दिद्धिंकमोतस्य वृत्तान्तंनुस्यंकमेकमेणीति द्वितीया ॥ १३८ ॥

**ममैवशोकेनविदीर्णवक्षसा त्वयाविचित्राङ्गिवि पद्यतेयदि । तदाऽस्मिदैवेनहतोपिहाहतः स्फुटं यतस्तेशिशवःपरासवः ॥ १४० ॥**

ममेति । हेविचित्राङ्गिसुन्दरगात्रिममैवशोकेनदुःखेनविदीर्णवक्षसा स्फुटितहृदययात्वयायदिविपद्यतेम्रियतेतदातर्हिहाखेदेअहंदैवेनहतोऽपिपुनर्हतोस्मियतःस्फुटंनिश्चितन्तेइतिअतिनयेवाऽल्पीयांसः शिशवोबालकाः परासवोमृताभवेयुर्मांविनात्वत्तोपितेषांजीवनंसंभाव्यतेतवमरणेसतितेपिमरिष्यन्तीतिपिष्टपेषणमेवदैवेनकृतंभवतीतिभावः । एकशोकेनेतिपाठः ॥ १४० ॥

**तथाऽपिहाहाविरहात्क्षुधाकुलाः कुलायकूलेषुवि लुठ्यतेषुते । चिरेणलब्धाबहुभिर्मनोरथैर्गताःक्ष णेनास्फुटितेक्षणाभम ॥ १४१ ॥**

तवेति । हाहेतिखेदेहेप्रियेममतेबालकाबहुभिर्मनोरथैश्चिरेणबहुकालेनलब्धाःसन्तःक्षणेनगतामृतप्रायाइत्यर्थः । किंभूताःक्षुधाकुलास्तथाऽतिबाल्यादस्फुटितेक्षणाअप्रकाशितनेत्राः । किंकृत्वातथापिअपिशब्दान्ममापिविरहात्तेषु प्रसिद्धेषुकुलायकूलेषुस्वकृतेषुनीडतटेषुविलुठ्यलुठित्वा । पूर्वश्लोकार्थानुवादः ॥ १४१ ॥

**सुताःकमाहूयचिरायचुङ्कृतैर्विधायकंप्राणिमुखा निकंप्रति । कथासुशिष्यध्वमितिप्रमील्यसः स्नु तस्यसेकाद्बुबुधेनृपास्नुणः ॥ १४२ ॥**

इतिप्रियांप्रत्युक्त्वासान्प्रत्याह । सुताइति । हेसुताःपुत्राजनमांमाञ्चविनाचुङ्कृतैःशिशुपक्षिसूक्ष्मशब्दविशेषैश्चिरायकमाहूयाऽऽकार्यभक्ष्यंयाचयिष्यथंकंप्रतिकंप्राणिचलानिसुखानिविधायगोष्ठीःकथयिष्यथाऽपितुनकमपिप्रतितत्र्भयोर्मृतत्वाद्शिशुपक्षिणामियंजातिः । एवंसतिपरंपूर्वंकथासुशिष्यध्वंकथाशेषीभवध्वमित्युक्त्वासहंसःप्रमील्यमूर्छांप्राप्यस्नुतस्यक्षरतया

द्गलितस्यनृपाश्रुणोनृपनेत्रवाष्पस्यसेकात्सेचनाद्धेतोर्बुधे । अन्ययाचनंयगोष्ठी करणंचकथेरुक्तिर्नतुहंसस्यवचः । आहूयविधायेत्येतदन्तंशोकवशात्खण्डोक्तिः । करुणारसबोधकगोष्ठीषुविषयेचतुराभविष्ययेतिपितरंमातरं चविनायुक्तान्वत्कुमारिकःशिक्षयेदितिवाक्यशेषोवा । शिष्यध्वमितिक र्मकर्तरिप्राग्नकालेलोटत्तङ् । एवमङ्गमपिक्रियासुशिष्ये„ इत्युत्तरंचार्थापत्तेयम् ॥ १४२ ॥

इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयाऽवनिपालः । रूपमदर्शिधृतोसियदर्थं गच्छयथेच्छमथाऽभिधाय ॥ १४३ ॥

इत्थमिति । अवनिपालोराजादीनेषुदयालुस्तस्यभावस्तत्तातयेत्यभिधायोक्त्वेत्थंपूर्वोक्तप्रकारेणविलपन्तंविलापंकुर्वन्तममुंहंसममुञ्चदत्यजत् । इतिकिंहेहंसयदर्थंधृतोसितद्रूपमदर्शिदृष्टम् । अथात:परस्त्वंयथेच्छं स्वेच्छयागच्छयदर्थंधृतोसीत्यादिनाचिरस्तुषणोस्याहिपरिहृतम् । एषहि पक्षीरयालुर्विदयालुः । दोधकंवृत्तम् ॥ १४३ ॥

आनन्दजाश्रुभिरनुस्त्रियमाणमार्गान् प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान् । चक्रेसचक्रनिभचङ्क्रमणच्छलेन नीराजनांजनयतांनिजबान्धवानाम् ॥ १४४ ॥

आनन्देति । सहंसश्चक्रनिभंचक्राकारंचङ्क्रमणंभ्रमणंतस्यच्छलेनव्याजेननीराजनामारार्तिकंजनयतांकुर्वतांनिजबान्धवानांस्वीयमित्राणांप्राक् स्वग्रहणसमयेशोकेननिर्गमितान्नेत्रपयःप्रवाहान्बाष्पप्रवाहान्स्वस्यमुक्तिसमयेआनन्दजाश्रुभिरानन्दजनितबाष्पैरनुस्त्रियमाणमार्गान् अनुगम्यमानमार्गांश्चक्रे । नृतेहंसेकरुदुर्मुक्तेजहसुरित्यर्थः । बहुमुक्तंपक्षिणांवेष्टयित्वापक्षिणोभ्रमन्तिरुदन्तिचेतिपक्षिजातिः । अन्यस्यापिकारागृहादिबद्धस्य विमुक्तस्यानन्दाश्रुसहितैर्बान्धवैर्नीराजनाक्रियते । चङ्क्रमणमितिक्रमेगंतिकौटिल्येयङ्ङन्ताद्भावेल्युट् । वलयाकारापिगतिःकुटिलैव । चक्रोचिचेति चकारादन्यत्रापियङ्लुक् । सर्वसर्गसमाप्तिश्लोकेष्वानन्दपदप्रयोगादानन्द

दायकमिदं काव्यम् । वसन्ततिलकावृत्तम् ॥ १४४ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः ॥ १४५ ॥

श्रीहर्षमिति । श्रीहीरनामा पिता मामल्लदेवी माता च यं श्रीहर्षनामानं पुत्रं सुषुवे । किंभूतः श्रीहीरः कविराजानां राजिः पङ्क्तिस्तस्या मुकुटानामलङ्काररूपो हीरो हीराख्यं रत्नं किंभूतं जितेन्द्रियचयं जित इन्द्रियचय इन्द्रियसमूहो येन तस्य श्रीहर्षस्य चिन्तामणिमन्त्रस्य चिन्तनमनुध्यानं जपादिकं तस्य फले शृङ्गारभङ्ग्या शृङ्गाररचनाविशेषेण चारुणि रमणीये शृङ्गाररसप्रधाने नैषधीयं नलसंबन्धि चरितं चरित्रं यस्मिन्नेवंविधे महाकाव्येऽयमादिः प्रथमः सर्गो गतः समाप्तः ॥ चिन्तामणिमन्त्रचिन्तनसामर्थ्यादेवंविधं काव्यं कृतमिति भावः शार्दूलविक्रीडितं वृत्तम् नैषधीयेति वृद्धाः ॥ अन्ये चालङ्कारा अत्र नोक्ताः ॥ लघुग्रन्थगौरवभयात्ते सुधिया ग्रन्थान्तरात् ज्ञातव्याः ॥ १४५ ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे प्रथमः सर्गः समाप्तः ॥ १ ॥

# ॥ अथ नैषधीयचरिते ॥

## ॥ द्वितीयः सर्गः प्रारभ्यते ॥

अधिगत्यजगत्यधीश्वरादथ मुक्तिंपुरुषोत्तमात्ततः ॥ वचसामपिगोचरोनयःसतमानन्दमविन्दतद्विजः ॥ १ ॥

हंसमुखेनभैमीवर्णनार्थंद्वितीयंसर्गमारभते । अधिगत्येति । अथनो चनानन्तरंसद्विजोहंसस्तमानन्दंलोकोत्तरंहर्षमविन्दतलेभे ॥ तंकंयआनन्दोवचसामपिगोचरोविषयोनवर्णयितुमशक्यइत्यर्थः ॥ किंकृत्वाततस्तस्माज्जगत्यापृथ्व्याअधीश्वरात्स्वामिनः पुरुषोत्तमात्पुरुषश्रेष्ठान्नलाद्मुक्तिंमोचनमधिगत्यप्राप्य ॥ यथाद्विजोब्राह्मणोजगतिलोकेऽधीश्वरात्सर्वोत्कृष्टात्पुरुषोत्तमाच्छ्रीविष्णोः सकाशात्तत्प्रसादान्मुक्तिं मुक्तिसाधनंसंसारमोचकंज्ञानंप्राप्यवागगोचरमपिशब्दाद्मनसोऽप्यगोचरमानन्दंब्रह्मस्वरूपंप्राप्नोति ॥ यतोवाचोनिवर्तन्त„इतिआनन्दंब्रह्मणोरूपम्"इतिश्रुतेश्चान्योऽपिइति । जगतीजगतिच्छन्दोविशेषेपिक्षितावपि । दन्तविप्राण्डजाद्विजाइत्यमरः । नर्निर्द्धारणइतिनिषेधात्षष्ठीसमासोन । पुरुषेषूत्तमइतिनिर्द्धारणसप्तमीसमासएवस्वरेविशेषदर्शनात् । लाभार्थोविदिःस्वरितेम्मुचादिः । सर्गेऽस्मिन्अन्तेतियावद्वैतालीयंछन्दः ॥ १ ॥

अधुनीतखगःसनैकधातनुमुत्फुल्लतनूरुहीकृताम् । करयन्त्रणदन्तुरान्तरेव्यलिखच्चञ्चुपुटेनपक्षती ॥ २ ॥

अधुनीतइति ॥ सखगोहंसस्तनुंशरीरंनैकधाऽनेकप्रकारमधुनीतऽकम्पयत् । किंभूतांतनुमुत्फुल्लामिविकसितानितनूरुहाणिरोमाणियस्यांसाअनुत्फुल्लतनूरुहाउत्फुल्लतनूरुहीकृतातताम् । तथाचञ्चुपुटेनपक्षतीपक्ष

मूलेऽप्यलिखत्समीचकार ॥ किंभूते पक्षतीकरयन्त्रणेन नलहस्तनियमनेन धारणेन दन्तुरं निम्नोन्नतम न्तरं मध्यं ययोस्ते । तत्फुल्लसंफुल्लयोरुपसंख्यानमिति साधुः फुल्लीकृते इति च्विः दन्तुरं दन्तुरमतदन्तुरम् ॥ अत्र तूक्ततत्व मात्रम् । पक्षावित्तिरितितिः ॥ २ ॥

अयमेकतमेनपक्षते रधिमध्योर्ध्वगजङ्घमङ्घ्रिणा । स्खलनक्षणएवशिश्रिये द्रुतकण्डूयितमौलिरालयम् ॥ ३ ॥

अयमिति ॥ अयंहंसः स्खलनक्षणएवमोचनसमयएवआलयंनीडंशिश्रियेऽभजत् । किंभूतः पक्षतेः पक्षमूलस्याधिमध्यंमध्यऊर्ध्वगोर्ध्वगामिनीजङ्घायस्मिन्कर्मणितद्यथातथाएकतमेन एकेनाङ्घ्रिणाचरणेनद्रुतंशीघ्रंकण्डूयितोमौलिर्मस्तकंयेनहंसजातिः । एकतमेनेतिस्वार्थेऽपितमबाद्यपइतिवचनात्तमप् ॥ ३ ॥

सगरुद्वनदुर्गदुर्ग्रहान्कटुकीटान्दशतःसतः क्वचित् । नुनुदेतनुकण्डुपण्डितः पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥

सइति । सहंसः पटुकीटाद्यपनयनेसमर्थंचञ्चूपुटंतस्यकोटिरग्रभागस्तेनकुट्टनानितैः कीटान्तनुकण्डुतन्वीस्वल्पाकण्डुर्येभ्यः क्रियायांयथाभवतितथानुनुदेस्फोटयामास । किंभूतः पण्डितः कण्डूपनयनेकुशलः किंभूतान्गरुद्वनंपक्षवृन्दंतत्तल्लक्षणंदुर्गंतत्रदुर्ग्रहान् धर्तुमशक्यानतएवकटूतीव्रपीडाकारिणयथातथादशतःखादतः । तथाक्वचित्निर्द्धारयितुमशक्येशरीरदेशेसतोविद्यमानान् । अन्योपिपर्वतदुर्गाद्दुर्ग्रहानुपद्रवकारकान्मारयेन्नुदति । नुनुद इतिस्वरितेत्त्वादात्मनेपदम् ॥ ४ ॥

अयमेत्यतडागनीडजैर्लघुपर्यव्रियताऽथशङ्कितैः ॥ उदडीयतवैकृतात्करग्रहजादस्यविकस्वरस्वरैः ५

अयमिति । अयंहंसस्तडागस्यनीडजाः पक्षिणस्तैरेत्यागत्यलघुशीघ्रंपर्यव्रियतवेष्टितः । अथानन्तरमस्यकरग्रहजान्नलस्यहस्तग्रहणाज्जाताद्वैकृताद्विकाराच्छङ्कितैश्चतैस्तएवविकस्वरस्वरैरुच्चस्वरैः पक्षिभिरुदडीय

तरुह्रीनमेषापिपक्षिजातिः । वैकतदन्तुरपक्षत्वात् । तीर्थादौकरग्रह णार्थैकैश्चित्कंकणपरितोवेष्ट्यतेअथवालिग्रहणात्कलहादेः शङ्कितैरुच्चैः स्वरैर्गम्यते । लघुक्षिप्रमित्यमरः । वैकतात्स्वार्थेऽण् । स्येशभासेतिवर चिविकस्वरः ॥ ५ ॥

वहतोबहुशैवलक्ष्मतान्धृतरुद्राक्षमधुव्रतंखगः ॥
सनलस्यकरंययौपुनःसरसःकोकनदभ्रमादिव ६

वहतइति । सखगोहंसःसरसःसकाशान्नलस्यकरंपुनर्ययौ । कस्मा दिवकोकनदभ्रमादिवरक्तोत्पलभ्रान्तेरिव । सरसःपल्वलस्यकोकनदभ्र मादिवेतिवा । नलकरस्यरक्तत्वात्कोकनदभ्रान्तिः । रक्तोत्पलंवहंसानां प्रियमित्युत्प्रेक्षा।किंभूतस्यनलस्यसरसश्चबहूनिशिवसंवन्धीनिलक्ष्माणित्रि पुण्ड्रादीनियस्यतस्यभावस्ततातांवहतोधारयतःशिवेभक्तियेषांतेशैवास्त त्संवन्धीनिवा सरःपक्षेबहूनिशैवलानियस्यांसाबहुशैवलाक्ष्मापृथ्वीयस्मिं स्तस्यभावस्ततातांवहतोधारयतःशिवंकल्याणंतत्संवन्धीनिशुभसूचकानि लक्ष्माणिसामुद्रिकोक्तानिमत्स्यादीनियस्येतिवा । किंभूतंकरंधृतरुद्राक्षा णांमधुतुल्यंसमीचीनंव्रतंनियमोयेनशैवत्वात् । धृतारुद्राक्षाएवमधुव्र ताभ्रमरायेनेतिवा । रुद्राक्षधारणंनियमेनकरोतिनत्वन्यचिद्धारणेनियमो नेतिमपीनत्वम् । कोकनदमपिरुद्राक्षवद्दृश्यभ्रमरयुक्तंनवनन्तइत्यप मारुद्रस्याक्षमाःकर्मसंवन्ध्यासनाश्चतान्धुनोतिकम्पयतिरुद्राक्षमधुतश्चतद्व्र तंचधृतंतद्येनेतिवाशिवद्रोहिपराभवकारिणमित्यर्थः । अनेनपीनत्वस्य शङ्काऽपिनिरस्ता । रवणांरुद्रशब्दोधृतारुद्येस्तेधृतरुतःसशब्दाद्रु रोऽग्नि स्तद्वद्वीक्षिपिङ्गलानिनेत्राणियेषान्तेराक्षा एवंभूताभ्रमरायत्रेतिवा अर्था त्कोकनदंविशेषणम् । रुशब्दोग्निवाचीआगमशास्त्रे तथा रः पावकेचवी व्ह्नेचेतिविश्वः । शैवेत्यत्रतस्येदंभक्तिरितिवाण् । रुदितिसंपदादित्वात्क्वि प्राक्षाइतिबहुव्रीहीसक्थ्यक्ष्णोरितिषच् । रुद्राक्षमान्धुनोतीतिदीर्घान्ता त्क्विप्वेतिक्विप् । व्रतविशेषणत्वादनपुंसकत्वाद्ध्रस्वत्वम् ॥ ६ ॥

पतगश्चिरकाललालनादतिविस्रम्भमवापितोनुसः
अतुलंविदधेकुतूहलंभुजमेतस्यभजन्महीभुजः ७

पतगइति । एतस्यमहीभुजोराज्ञोभुजंभजदाश्रयन्पतगोहंसोऽतुलमनु

पमंकुतूहलंविदधेचकार। पुनरागमनकौतूहलेहेतुःनुवितर्के चिरकाललालनात्सान्त्वनादतिविस्रम्भमतिविश्वासमवापितःप्रापितइव। अनुपश्चादेतस्यभुजंभजन्निति वा। सन्निति पाठेऽवापितःसन्। अन्योपिबहुकालपोषितोविश्वासंप्राप्तःस्वामिनंस्वगुणेनकुतुकिनंकरोति॥ ७॥

नृपमानसमिष्टमानसः सनिमज्जत्कुतुकामृतोर्मिषु॥ अवलम्बितकर्णशष्कुलीकलशीकंरचयन्नवोचत॥ ८॥

नृपेति। इष्टंमानसंसरोयस्यसहंसोऽवोचतोवाच। किंकुर्वन्कुतुकामृतोर्मिषुकौतूहललक्षणामृततरङ्गेषुनिमज्जद्ब्रुडद्नृपमानसंनलान्तःकरणंयत्रावलम्बितेकर्णशष्कुल्यावेवकलश्यौयेनैवंविधंरचयन्सावधानंकुर्वन्नित्यर्थः। राज्ञोमनःस्ववचनश्रवणोत्सुकंकुर्वन्नुवाचेतिभावः। अन्योपिकश्चिन्निमज्जंस्तत्रत्यस्यकलशमवलम्बनन्दत्ते। कर्णाकारोखाद्यविशेषःशष्कुली नृपमनसंप्राप्तादित्वाद्दण्। मानसंसरसिस्वान्ते „ अकलंयस्त्रोषःस्यात्पीयूषेसलिलइतिविश्वः॥ कलशीकंनद्यृतश्चेतिकपूनकपीतिह्रस्वनिषेधः॥ ८॥

मृगयानविगीयतेनृपैरपिधर्मागममर्मपारगैः॥ स्मरसुन्दरमांयदत्यजस्तवधर्मःसदयोदयोज्ज्वलः॥ ९॥

किमवोचदित्याह। मृगयेति। धर्मागमाधर्मशास्त्राणितेषांमर्मरहस्यंतस्यपारङ्गच्छन्तीति एवंभूतैरपिनृपैराजभिर्मन्वादिभिर्मृगयापापर्द्धिर्नविगीयतेननिंद्यतेऽपितुक्रियतएव। एवंसत्यपिहेस्मरवत्सुन्दरत्वंमांयदत्यजः सतवदयोदयोज्ज्वलोधर्मोदयायाउदयेनउत्पत्त्योज्ज्वलःशोभमानःसदयःसकृपःशुभावहोयिथिर्यस्योपकरिष्यमाणस्वात् तथादयोज्ज्वलइतिवा दयोदयेनसहवर्त्तमानोऽतएवोज्ज्वलइतिवा मन्मोचनेदयांविनाऽन्यत्कारणंनास्तीत्यर्थः। स्मरेतिभिन्नम्। हेसुन्दरत्वंस्मरविचारयवाक्यार्थःकर्म। नृपैःक्रियमाणामृगयाधर्मागममर्मपारगैरपिननिन्द्यतेइतिवा। पारगैरितिअन्तात्यन्ताध्वेतिडः॥ ९॥

अबलस्वकुलाशिनोझषान् निजनीडद्रुमपीडिनः खगान् ॥ अनवद्यतृणार्दिनोमृगान्मृगयाघाय नभूभृतांघ्नताम् ॥ १० ॥

मृगयायाञ्चनिन्दनेकारणमाह । अबलेति । मृगयाभूभुजामघायपापायनभवति । कथमित्यतआह । किंभूतानांभूभुजामबलंनिर्बलंस्वकुलंयत्तदश्नन्तिएवंशीलान्झषान् मीनान्घ्नतांमारयतांतथानिजाःस्वीयायेनीडद्रुमानिवासस्थानवृक्षास्तान्पीडयन्तिएवंशीलान्खगान्पक्षिणःघ्नतां तथाऽनवद्यंनिर्मलंतृणंतदर्दन्तिपीडयन्तिएवंशीलान्मृगान्घ्नताम्‚ अन्तःसंज्ञाभवन्त्येतेसुखदुःखसमन्विता„ इत्यादिस्मृतेस्तरुणतृणादेरपिप्राणित्वात्तद्वधस्तुदोषायपरंदुष्टनिग्रहोराज्ञांधर्मएवेतिभावः । अबलान्बलिनोभक्षयन्तीतिमत्स्यानांजातिस्वभावः ॥ अनवद्येत्यवद्यपर्यायेतिज्ञापु । पद्माद्दद्रुद्रोहिणत्पुरुषोवा । पूर्वश्लोकेमृगयादोषाऽभावेस्मृतिप्रमाणमुक्त्वाऽत्रयुक्तिमप्यवदत् ॥ १० ॥

यदवादिषमप्रियंतव प्रियमाधायनुनुत्सुरस्मितत् । कृतमातपसञ्ज्वरंतरो रभिवृष्ट्यामृतमंशुमानिव ॥ ११ ॥

यदिति ॥ हेराजन्नहंतवयदप्रियंनिन्दाद्यऽवादिषमुक्तवानस्मि प्रियमाधायकृत्वातदप्रियंनुनुत्सुर्निराकर्तुमिच्छुरस्मि । तत्रदृष्टान्तमाह अंशुमान् सूर्यस्तरोर्वृक्षस्यातपेनकृतंसञ्ज्वरंपीडामस्तंजलमभिवृष्ट्याभितोवर्षित्वायथानुदतीत्यर्थः । अनेनदृष्टान्तेनातिशयितंप्रियंकरिष्यामीतिसूच्यते ॥११॥

उपनम्रमयाचितंहितंपरिहर्तुंनतवापिसाम्प्रतम् ॥ करकल्पजनान्तराद्विधेःशुचिलः प्राप्यपिसाहिप्रतिग्रहः ॥ १२ ॥

उपेति । अयाचितमप्रार्थितमुपनम्रमुपस्थितंहितंप्रियंपरिहर्तुंत्यक्तुंतवापिसार्वभौमस्यापिनसाम्प्रतंनयुक्तम् । हियतःकरकल्पमीषद्वचनात्करःकरोजनान्तरमन्योजनोनम्रयथाःकरकल्पजनान्तरंयस्यएवंविधाच्छुचितोनिर्मलाच्छोभनाद्विधेर्दैवात्सम्प्रतिग्रहस्त्वयाऽप्राप्यप्राप्तः । सर्वंहिशुभंदैवात्प्राप्य

तेयद्वैवयग्राज्ञयलितत्केनापिनिराकर्त्तुंनशक्येतेथारेणाहिदीयतेयद्वाविधिर्दैव स्यहस्तभूताज्जनान्तरादेऽतादृशःप्रतिग्रहोराज्ञोदोषायन,,अयाचिताहृतं ग्राह्यमपिदुष्कृतकर्मण,,इतियाज्ञवल्क्यः ॥ १२ ॥

पतगेनमयाजगत्पते रुपकृत्यैतवकिंप्रभूयते ॥ इ तिवेद्मिनतुत्यजन्तिमां तदपिप्रत्युपकर्त्तुमर्त्तयः

खगर्वंपरिहरति ॥ पतगेनेति । पतगेनपक्षिणामयाजगत्पतेर्भुवनाधि पतेस्तवनलस्योपकृत्यैउपकारायप्रभूयतेकिंसमर्थेनभूयतेऽपितुनेतियद्यपि वेद्मिजानामितदपितथापिप्रत्युपकर्त्तुंप्रत्युपकारार्थमर्त्तयःकथमस्योपक रोमीतिउत्कपठादराः पीडावामांनतुनैवत्यजन्तिअसमर्थमपिप्रेरयन्ती त्यर्थः ॥ १३ ॥

अचिरादुपकर्त्तुराचरेदथवाऽऽत्मौपयिकीमुपक्रि यां ॥ पृथुरित्थमथाणुरस्तुसान विशेषेविदुषामि हग्रहः ॥ १४ ॥

उपकर्त्तुंशक्यतेनवेतिविचारोमास्तुकिंतुउपकर्त्तुःप्रत्युपकर्त्तव्यमेवेतिवि धिरस्तीत्याह ॥ अचिरादिति । अथवापक्षान्तरेयःपुरुषःकश्चनोपकर्त्तुरुप कारकस्यात्मौपयिकीमात्मोपायभूतामात्मोपायादागतां वाआत्मोपायसा ध्यामित्यर्थः। एवंभूतामुपक्रियामुपकारमचिराज्झटित्याऽचरेत्कुर्याज्जी वनस्यसत्वरगत्वरत्वादचिरादित्युक्तम् । इत्थंविधोसतिसाचोपक्रिया पृथुर्महती अथवाअणुरल्पावाऽस्तुतिष्ठतुइहइति विशेषेमहत्त्वाल्पत्व लक्षणेविदुषांज्ञातॄणांग्रहोनिर्बन्धोनास्ति उपकारस्यमहत्वात्स्वौद्धत्यपरि हारएवतात्पर्यम् । उपायएवौपयिकीतिविनयादिषुउपायाद्ध्रस्वत्वंचेति पाठात्स्वार्थेठक्तिदन्ताततआगतइतिअण्णन्तत्वाद्दीपूह्रस्वत्वम् । युक्तमौपयिकंलभ्यमित्यमरः ॥ १४ ॥

भवितानविचारचारुचेन्नदपिश्रव्यमिदंमदीरित म्। खगवागियमित्यतोपिकिंनमुदं धास्यतिकी रगीरिव ॥ १५ ॥

वचनप्रसङ्गार्थमाह । भवितेति । यद्यपिइदंमदीरितंमद्वचनंविचारचा

रविचारविषयेमीमांसासहंचेन्नभवितामविष्यति अहंलोकोत्तरमुपकारं करिष्यामीतिसत्यमेवतथापित्वंमिथ्याचेन्मन्यसेतथापिमदीयंवचःअथ्यंअ वणाहंभवत्येव। विचारचारुचेकथंअथ्यमित्याशङ्कायामाह । इयंख गवाक्पक्षिणोवाक्पत्नीमनुष्यवाचावदतीतिअतोपिहेतोर्मेवचःकिंमुदंस न्तोषंनधास्यतिनकरिष्यतिअपितुकरिष्यत्येवेष्टसाधनत्वात् । अपिरे वार्थः। केवशुकवागिव। अथ्यमहार्थेऽघोयदितियत्। सार्वधातुकार्धधातु कयोरितिगुणः। धातोस्तन्निमित्तस्यैवेतिवान्तादेशः ॥ १५ ॥

सजयत्यरिसार्थसार्थकी कृतनामाकिलभीमभूप
तिः । यमवाप्यविदर्भभूःप्रभुं हसतिद्यामपिश
क्रभर्तृकाम् ॥ १६ ॥

तदेवाह॥ सइति ॥ किलप्रसिद्धौसभीमसंज्ञकोभूपतीराजाजयतिसर्वो त्कर्षेणवर्तते । किंभूतोऽरिसार्थैवैरिसमूहेसार्थंकीकृतमन्वर्थीकृतंनामस्व संज्ञायेन बिभ्यत्यस्माद्वैरिणइतिमत्वान्येइतिभीमः भीमादयोपादानइ तिसाधुत्वम्। सकोविदर्भभूर्विराट्भूर्यंप्रभुंपतिमवाप्यशक्रभर्तृकामपीन्द्रप तिकामपिद्यांस्विवंहसतितत्तुल्याभवतीत्यर्थः। शङ्कृतेतपस्विन्योपीतिश क्रस्तद्भर्तृकाद्यौरहंतुभीमभर्तृकेतिहासहेतुः । भयतेजेतुस्तितिवा । त स्मात्कोपिनबिभेतीतिवा । अर्थेनसहवर्त्तमानंसार्थकंतेनसहेतितुल्ययो ग,,इतिबहुव्रीहिः । वोपसर्जनस्येतिसमासः । शेषाद्विभाषेतिकप् । त तश्च्विः । शक्रभर्तृकांनद्यृतश्चेतिकप् ॥ १६ ॥

दमनादमनाक्प्रसेदुष स्तनयांतथ्यगिरस्तपोध
नात्। वरमापसदिष्टविष्टपत्रितयानन्यसदृग्गुणो
दयाम् ॥ १७ ॥

भैम्यालोकोत्तरेगुणोत्कर्षेमिथ्यात्वनिरासार्थंपुराणप्रसिद्धमितिहासंसू चयन्नाह ॥ दमनादिति । हेराजन्सभीमोदमनादेतन्नाम्नस्तपोधनादृषेर्व रदानसमर्थाद्मनागऽत्यर्थं प्रसेदुषःप्रसन्नात्तथ्यगिरोऽप्रतारकादेवंभूता त्तनयांवरंकन्यालक्षणमभीप्सितमापप्राप्तवान् । किंभूतांदिष्टःकालोविष्टपं भुवनमनयोस्त्रिऽतयेकालत्रयेभुवनत्रयेचाऽनन्यसदृगन्यसदृशोनभवतिएवं

भूतः सौन्दर्यौदार्यादिगुणोदयो यस्यां तां भूतभविष्यद्वर्त्तमानकाले लोकत्रयेपीदृक्सौन्दर्यादिगुणवती कापि नास्तीति भावः। दिष्टस्तेनैव मुनिना दृष्टो विष्टपत्रितयेऽनन्यसदृशो गुणोदयो यस्यैतामिति वा। कालो दिष्ट इत्यमरः। दमनात्सहितपि दमः संज्ञायामिति ल्युः। प्रसेदुषः प्रसदेरनिटो भाषायां सदवसश्रुवश्चेति क्वसुः। अनन्यसदृक्सर्वनाम्नोऽपृतिमात्र इति पुंवद्भावः॥ १७॥

भुवनत्रयसुभ्रुवामसौ दमयन्तीकमनीयतामदम्।
उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां
न्यदधे ॥ १८ ॥

भुवनेति। यतो यस्मात्कारणाद्सौ भीमतनया भुवनत्रये सुभ्रुवः सौन्दर्यवत्यस्तासां कमनीयतया यो मदः सौन्दर्येण यो गर्वस्तं तनुश्रिया शरीरसौन्दर्येण दमयन्ती खण्डयन्ती शमयन्तीति वा उदियायोत्पन्ना। ततस्तस्मात्कारणाद्दमयन्तीति अभिधां सार्थकं नाम दधे बभार। भूसुधूभ्रस्जिभ्यश्छन्दसीति भ्रुविसाधितस्य सुभ्रुवशब्दस्य बाहुलकाद्भाषायां प्रयोगः। अणावकर्मकादिति कर्त्रभिप्राये क्रियाफले यत्परस्मैपदं विहितं न्यैवनपाद्म्येत्यादिना निषेधाद्णावकर्मकत्वे च तत्रैव चित्तवत्कर्तृकत्वाभावात्परस्मैपदाप्राप्ते निषेधाशङ्काया अभावात्कर्त्रभिप्रायेयथाप्राप्तं परस्मैपदं भवत्येवेति दमयन्तीत्यत्र शतायुज्यते॥ १८॥

श्रियमेव परं धराधिपाद्गुणसिन्धोरुदितामवैहि
ताम्। व्यवधावपि वा विधोः कलां मृडचूडानि
लयां न वेदकः॥ १९॥

श्रियमिति। हे राजन् त्वं तां भैमीं श्रियमेव लक्ष्मीमेवावेहि जानीहि परमयं विशेषः गुणसिन्धोर्गुणसमुद्राद्धराधिपात्पृथ्वीपतेरुदितामुत्पन्नां लक्ष्मीसमुद्रादुत्पन्ना इयन्तु गुणसमुद्रादिति विशेषः। अप्रसिद्धस्य ज्ञापनं क्रियते न तु प्रसिद्धस्येत्याह वा प्रसिद्धौ। व्यवधिर्व्यवधानं तस्यां सत्यामपि मृडो महादेवस्तस्य चूडा मौलिः सा निलयः स्थानं यस्याः सा तां विधोश्चन्द्रस्य कलां को न वेद जानाति अपि तु सर्वोपि वेद ईश्वरस्याऽप्रत्यक्षत्वेऽपि तन्मौलिस्थितां चन्द्रकलां सर्वोपि वेत्ति तथा व्यवधानेपि त्वमपि तां वेत्सीति भावः। इणो लोटि हेरपित्वाद्

णाभावस्यादित्वभावादेत्येधत्यूठ्स्विति वृद्ध्यभावेनाद्गुणः । आङ्प्रश्लेषेपि ओमाङोश्चेतिपररूपप्राप्तेरवेहीत्येवरूपम् ॥ १९ ॥

चिकुरप्रकराजयन्तिते विदुषीमूर्द्धनिसाविभर्त्ति
यान् । पशुनाप्यपुरस्कृतेनतत्तुलनामिच्छतुचा
मरेणकः ॥ २० ॥

चिकुरेति । हेराजंस्तेचिकुरप्रकराःकेशसमूहाजयन्तिसर्वोत्कर्षेणवर्त्तन्ते । तेकेसाविदुषीपण्डितासैमीयान्चिकुरप्रकरान् मूर्धनिमस्तकेआविभर्त्तिधारयतिआभरणंकरोतीतिवा । चामरेणसाम्येसतिसर्वोत्कर्षःकथमित्यत आह । पशुनाचमरसंज्ञकेनापिअपुरस्कृतेनपश्चात्कृतेनचामरेणतत्तुलनांतेषांकेशानांतुलनांसाम्यंकःइच्छतुनकोपिचमराणांहीनस्थानधारणात्तुलनानास्ति । अथचयत्रायेमस्तकेध्रियन्तेपूज्यन्तेतेषांपुच्छेनापिअपूजितेनाऽत्रासहसाम्यंकोभिलष्येत् । अतस्तत्केशानांसर्वोत्कर्षता । विदुषीविदेःशतुर्वसुः । उगितश्चेतिङीप् । वसोःसंप्रसारणम् । तुलनाण्यासेतियुच् । संज्ञापूर्वकविधेरनित्यत्वाल्लघूपधगुणाभावः ॥ २० ॥

स्वदृशोर्जनयन्तिसान्त्वनां खुरकण्डूयनकैतवा-
न्मृगाः । जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षण
शोभयाभयात् ॥ २१ ॥

स्वदृशोरिति । हेराजन्मृगाःखुरेणकण्डूयनंकण्डूयनकंतदेवकैतवंव्याजस्तस्मात्स्वदृशोः स्वनेत्रयोःसान्त्वनामाश्वासनंजनयन्तिकुर्वन्ति । यतस्तस्याभैम्याअखर्वेक्षणशोभयाविशालनेत्रशोभयाजितयोःपराभूतयोरतएवभयाद्भियोदयत्प्रमीलयोर्जायमानतन्द्रीकयोः । लुब्धोऽप्रेक्षायथाकेनचिज्जितंभीतमन्यमपिकश्चित्करपरामर्शादिनासान्त्वयतितथामृगाअपिस्वनेत्रेसान्त्वयन्ति । तंद्रीप्रमीलेत्यमरः । सर्वाङ्कस्वश्चवासनच्छलिचं । उदयदितिइण्गतौ ॥ २१ ॥

अपिलोकयुगंदृशावपि श्रुतदृष्टारमणीगुणाअ
पि । श्रुतिगामितयादमस्वसुर्व्यतिभातेसुतरा
न्धरापते ॥ २२ ॥

अपीतिहेधरापते पृथ्वीपते दमस्वसुर्भैम्याः लोकयुगमपि मातृकुलपितृकुललक्षणं श्रुतिगामितया लोकाकर्णनविषयत्वेन जगत्प्रसिद्धत्वेन सुतरां व्यतिभाते परस्परोत्कर्षेण विनिमयेन वा भासत इत्यर्थः । इदं भैमीमातृकुलमिति जगद्विख्यातत्वं तेन भैमीपितृकुलस्य शोभनम्तद्वद्भैमीमातृकुलेनाङ्गीकृतमितिविनिमयः। भैमीसंबन्धेन पितृकुलवन्मातृकुलं मातृकुलवच्च पितृकुलं शोभते सादृश्यन्तु तात्पर्यार्थः । तच्च सादृश्यं श्रुतिगामितया विशेष्यते । तच्च श्रुतिगामित्वलक्षणं सादृश्यं मातृकुलस्य पितृकुलापेक्षया पितृकुलस्य च मातृकुलापेक्षया न तु दृगाद्यपेक्षया । एवं दृगादीनामपि सजातीयापेक्षयैव श्रुतिगामित्वलक्षणं सादृश्यमङ्गीकरणीयं न तु लोकयुगाद्यपेक्षया । तथा दमस्वसुर्दृशावपि नेत्रे अपि श्रुतिगामितयाऽऽकर्णदेशविशालत्वेनातिसुतरां विनिमयेन भाते शोभेते इति दक्षिणनयनस्य श्रुतिगामित्वेन या शोभा तां वामं नयनमङ्गीकरोति वामनयनस्य श्रुतिगामित्वेन या शोभा तान्दक्षिणं नयनमङ्गीकरोतीत्यत्रापि विनिमयः श्रुतिगामित्वेन दक्षिणं वाममिव वामं दक्षिणमिवेत्यत्रापि सादृश्य एव तात्पर्यं ज्ञेयम् । तथा दमस्वसुः संबन्धिनः श्रुतदृष्टाः श्रुताः पुराणादौ दृष्टाः कासुचित्सुन्दरीषु च कासुचित्स्त्रीष्वेव श्रुताः कासुचिद्दृष्टा रमणीगुणाः स्त्रीगुणाः श्रुतिगामितया लोकाकर्णनविषयत्वेन व्यतिभाते विनिमयेन शोभन्त इति बहुवचनम् । पुराणादावन्यस्त्रीसमवाये श्रुता ये कासुचिद्दृष्टास्ते भैम्यामेव श्रूयन्त इति श्रुतानां दृष्टानां च स्त्रीगुणानां दमस्वसुः संबन्धिनां सर्वेषां श्रुतिगामित्वं विद्यते ततः श्रुतानां स्त्रीगुणानां दमस्वसुः संबन्धिनां यच्छ्रुतिगामितया शोभनं तद्दृष्टैरङ्गीकृतम् । एवं दृष्टानां शोभनं तच्छ्रुतैरङ्गीकृतमित्यत्रापि यथाकथंचिद्विनिमयः । यथा श्रुता भैमीसंबन्धिनः श्रुतिगामितया शोभन्ते तथा दृष्टा अपि भैमीसंबन्धिनः श्रुतिगामितया शोभन्त इत्यत्रापि सादृश्य एव तात्पर्यम् । श्रुतदृष्टा अपि सर्वे गुणा भैम्यां विद्यन्त इति भावः । सामुद्रिकशास्त्रे श्रुतानां पद्मिन्यादौ दृष्टानामिति वा यथाकथंचिज्ज्ञेयम् । विस्तरभयान्न लिख्यते ॥ श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणीति विश्वः । गामी गम्यादिरावश्यके ताच्छील्ये वा णिनिः । त्वतलोरिति पुंवत् । व्यतिपूर्वस्य भातेः कर्तरि कर्मव्यतिहार इत्यात्मनेपदम् । द्विवचने सवर्णदीर्घत्वे कृते बहुवचने चात्मनेपदे झन्त इति झस्यादादेशे शब्लुक्

टेरेत्वम् । सर्वत्रवचनश्लेषः ॥ २२ ॥

नलिनंमलिनंविवृण्वती पृषतीमस्पृशतीतदीक्षणे । अपिखञ्जनमञ्जनाञ्चितेविदधातेरुचिगर्वदुर्विधम् ॥ २३ ॥

नलिनमिति ॥ तदीक्षणेभैमीनेत्रेपृषतीमञ्जनशलाकामस्पृशतीअप्राप्तेअञ्जमानत्रु जितेसतीनलिनंकमलंमलिनंस्वकान्त्यादूषितंविदधातेकुर्वाते । किंभूतेतदीक्षणेविवृण्वतीआत्मानंप्रकाशयन्तीप्रसारयन्तीऋजुरीत्याविलोकमानेअञ्जनाञ्चितेअञ्जनपूरितेसाञ्जनेसतीतदीक्षणेखञ्जनमपिखञ्जरीटमपिरुचिगर्वेणकान्तिमदेनदुर्विधंदरिद्रंविदधाते । अवतंसीकृतंकमलंकटाक्षावलोकनप्रसृतयास्वकान्त्यामलिनंश्यामंविवृण्वतीकुर्वतीतयापृषतींहरिणीमस्पृशतीनेत्रविषयेऽगणयन्तीएवंविधेभैमीनेत्रेकज्जलाञ्चितेखञ्जनमितिपूर्ववत् । अञ्जनपूजनात्पूर्वंस्वकान्त्याकमलंजितंहरिणीनेत्रयोस्तुभैमीनेत्रशोभासम्भावनापिनास्ति । अञ्जनपूजनानन्तरंखञ्जनस्यचञ्चत्वसदृशेनान्यस्येतिगर्वस्तद्रहितंकुर्वातइत्यर्थंइतिवारुचिकान्तिविषयेदर्पेणरहितमितिवारुचीतिभिन्नंपदंखञ्जनोहिशुक्लकृष्णोऽतिचलोऽतिचञ्चलश्चातस्तेनसाम्यसंभावनायांकज्जलदानानन्तरंतदधिककान्तित्वात्सोपिजितइतिभावः । नलिनंस्वगतंश्यामंगुणंविलोकनवशाद्विवृण्वतीप्रकाशयन्तीमलिनंरुचिगर्वदुर्विधंविदधातइतिवा । नलिनंश्यामंमलिनंनीलोत्पलंरुचिगर्वदुर्विधंविदधातेइतिवा । सविलासवीक्षणाद्वायाःपूर्वमेवनीलोत्पलंजितमित्यर्थः । तथाअसंकुचन्तीसती पृषतींहरिणींरुचिगर्वदुर्विधांविदधातेनिर्निमेषत्ववेलायामपिताभ्यांहरिणीजिताकिंपुनः कटाक्षविक्षेपवेलायामितिवा । अस्मिन्पक्षेदुर्विधादुर्विधश्चेतिनपुंसकमनपुंसकेनेतिपुंनपुंसकवद्भावौ । अज्यतेनेनेत्यञ्जनम्तेनपूजितेइत्यनेनल्युडन्तस्याञ्जूव्यक्तिम्रक्षणेष्वितिधातोरर्थानुसारेण दृशोस्निग्धनीलरक्तसितवर्णकान्तिचाञ्चल्ययोगःसूचितः । तथाचमलिनादिषुमध्येक्वचित्कस्यचिद्गुणस्याद्दृशोस्तुपूर्वोक्तगुणसद्भावात्ताभ्यांनलिनादीनिजितानीतिभावः । मलिनंदूषितेकृष्णेइतिविश्वः । अञ्चितेअञ्चेःपूजायामितिइटिनाञ्चेःपूजायामितिनलोपनिषेधः । अञ्जनाञ्जितेइतिपाठेऽञ्जसीतिचौरादिकस्याञ्जय

तेर्निःश्वासजन्मेनभासितेइत्यर्थः ॥ २३ ॥

छाधरं किल बिम्बनामकं फलमस्मादितिभव्यमन्वयम् । लभतेऽधरबिम्बइत्यदःपदमस्यारदनच्छदवदत् ॥ २४ ॥

अधरमिति । हेराजन्नेतस्यादमयन्त्यारदनच्छदमधरमोष्टंवददिदम्छदधरबिम्बइतिअदःपदमेतत्पदंसुयन्तोयंशब्दः । इत्यतोहेतोर्भव्यंसमीचीनमन्वयंसंबन्धंलभतेप्राप्नोति । इतिकिंकिलयस्माद्बिम्बनामकंफलमस्मादोष्टादधरंहीनंबिम्बापेक्षयाऽप्यधिकरक्तत्वाद् एतस्याम्ना ऽधरंबिम्बंबिम्बसंज्ञकंफलंयस्माद्धरबिम्बइतिबहुव्रीहिः । नतुअधरस्वबिम्बमिति अन्यासांतुअधरोबिम्बमिवेतिसत्पुरुषःकर्मधारयः । एतस्यास्तुबहुव्रीहौ अर्थःशब्दतयभव्य इवभैम्यधरोजितबिम्बइतिभावः ॥ २४ ॥

हृतसारमिवेन्दुमण्डलंदमयन्तीवदनायवेधसा । कृतमध्यबिलंविलोक्यते धृतगम्भीरखनीखनीलिमा ॥ २५ ॥

हृतेति ॥ इन्दुमण्डलंचन्द्रबिम्बंवेधसाब्रह्मणादमयन्तीवदनायभैमीमुखंनिर्मातुंहृतसारमिवगृहीतश्रेष्ठभागमिवकृतं मध्येबिलंछिद्रंयस्यएवंभूतंविलोक्यतेदृश्यतेतर्क्यतइत्यर्थः । कलङ्केनहृतसारत्वमुत्प्रेक्षितम् । किंभूतंधृतोगम्भीरखन्यांनिम्नगर्ते परभागेस्थितस्यखस्याकाशस्यनीलिमा येनयत्कलङ्कोनभवतिकिंतुअयमाकाशनीलिमा । भैमीमुखनिष्कलङ्कंचन्द्रसारतुल्यमितिभावः । वदनायक्रियार्थोपपदस्येतिचतुर्थी । खनीतिकृदिकारादक्तिनइतिङीप् ॥ २५ ॥

धृतलाञ्छनगोमयाञ्चनं विधुमालेपनपाण्डुरं विधिः । भ्रमयत्युचितंविदर्भजाननतोराजननीराजनवर्द्धमानकम् ॥ २६ ॥

प्रकाराान्तरेणभैमीमुखस्यचन्द्राधिक्यमाह । धृतेति । ब्रह्माप्राप्यचन्द्रोत्पात्यसितत्वोस्मेताधिविधिर्ब्रह्मायिधुंचन्द्र मुचितंयोग्यंविदर्भजाभैमीतस्याआननतस्यानीराजनार्थमारात्तिकार्थवर्द्धमानकमिवबर्द्धमानकंशरावं

त्रमयति । किंभूतंविधुंभूतंलाञ्छनमेवकलङ्करूपवगोमयाञ्जनंगोमयपूज नंयेनतथाआलेपनंपिष्टोदकम् । अल्पनाइतिलोकेप्रसिद्धंतेनपाण्डुरंयस्य स्तन्मुखसादृश्यंप्राप्येतिभावः । गोमयलिप्तेभूम्यादौपिष्टेनशरावेणादृ ष्टिदोषनिरासार्थंनीराजनाक्रियतइतिलोकाचारः ॥ शरावोवर्धमानकइ त्यमरः ॥ २६ ॥

सुषमाविषयेपरीक्षणेनिखिलं पद्ममभाजितन्मु
खात् । अधुनापिनभङ्गलक्षणं सलिलोन्मज्जन
मुज्झति स्फुटम् ॥ २७ ॥

सुषमेति । कमलस्यशोभाधिकाभैमीवदनस्येतिसुषमाविषयेपरीक्षणे दिव्येनशोधनेनिखिलंसमस्तंपद्मंपद्मजातंतन्मुखाद्भैमीमुखात् अभाजि पराजयंप्राप्तंयतः भङ्गलक्षणंपराजयचिह्नंसलिलोन्मज्जनंजलादुन्मज्जनमू र्ध्वंभवनमद्यापिनोज्झतिस्फुटंव्यक्तमेवनत्यजतिस्फुटमुत्प्रेक्षेवा । जलो न्मज्जनंतस्यस्वाभाविकंभङ्गलक्षणत्वेनोत्प्रेक्षितंस्फुटंविकसितमितिपद्म विशेषणंवा । जलदिव्येधनुर्द्धरमुक्तंबाणमादाययावदन्योधावन्नागच्छति तावद्यःसलिलेनिमग्नएवतिष्ठतिसविजयते । यस्तुततःपूर्वमेवोन्मज्जति सपराजयतइतिभावः । सुषमापरमाशोभेत्यमरः । सुविदुर्निभ्यइतिष त्वम् । अभाजीतिकर्मकर्तरिचिण् । भञ्जेश्चचिणीतिनलोपः ॥ २७ ॥

धनुषीरतिपञ्चबाणयोरुदितेविश्वजयायतद्भ्रु
वौ । नलिकेनतदुच्चनासिके त्वयिनालीकविमु
क्तिकामयोः ॥ २८ ॥

धनुषीइति । तद्भ्रुवौभैमीभ्रुवौविश्वजयायत्रैलोक्यजयायरतिपञ्चबा णयोर्धनुषीमउदितेप्रादुर्भूतेनेतिकाक्वायोजनीयम् । गुइतिपाठेवितर्के । तथातस्याभैम्याउच्चनासिकेरन्ध्रद्वयोपलक्षितेनासिकेत्वयिविषयेनालीकौ नलिकाप्रेर्यलघुशरौतयोर्विमुक्तिकामयोर्मोक्षाभिलाषिणोरतिकामयोर्नलि केधराधारनल्यौनभवतोऽपितुनलिकेएवअतस्याञ्च नातिदूरतःसर्वोपिक्षा माधीनोभवतीतिभावः । नालीकःशरशल्ययोरितिविश्वः । विश्वजयायतुम र्थादितिचतुर्थी । रतिकामयोरितिनलिकाभिर्भिन्नाधिकरण्योगः ॥ २८ ॥

म् । स्मरयौवनयोःखलुद्वयोःप्लवकुंभौभवतःकुचावुभौ ॥ ३१ ॥

अपीति । तस्याःकुचौस्तनौतद्वपुषिप्रसर्पतोःप्लवमानयोःक्रीडतोर्द्वयोः स्मरयौवनयोःकामतारुण्ययोःप्लवकुम्भौप्लवनार्थंकुम्भौतरणकुम्भौभवतः खलुउत्प्रेक्षायाम् । किंभूतेतद्वपुषिकान्तिभरैःकान्तिप्रवाहैरगाधतामतलस्पर्शत्वंगमितेपि प्रापितेपिअगाधेह्युदकेक्रीडाऽनुचितातत्रापिक्रीडतोरितिद्योतनार्थमपिशब्दः । पूर्वापेक्षयापिरम्यत्वेत्यर्थइतिवा । अगाधेह्युदकेक्रीडतोर्द्वयोर्घटद्वयेनभाव्यम् । यद्यपिद्विवचनेनैवद्वयोरुभाविति च लभ्यतेतथापिसदासहवासित्वपरस्परमिलितत्वप्रदर्शनार्थमुक्तमित्यवगन्तव्यम् ॥ ३१ ॥

कलशे निजहेतुदण्डजः किमुचक्रभ्रमिकारितागुणः । सतदुच्चकुचौभवन्प्रभासरचक्रभ्रमिमातनोतियत् ॥ ३२ ॥

कलशइति । न्यायशास्त्रे समवायिकारणमसमवायिकारणंनिमित्तकारणंचेति । यत्समवेतमेवकार्यमुत्पद्यतेतत्समवायिकारणं यथामृत्पिण्डोघटस्य । तत्रपूर्वश्लोकेकुम्भत्वारोपणेनतदुभयसाम्यमसहमानःकविःप्रभागुणाधिक्यप्रतिपादनेनतयोरुत्कृष्टतामारोपयितुंस्वमनुरोपापूर्वामुक्तिमस्मिन्प्रणीतवान् । असंभाव्यवस्तुदर्शनेपरसंमतिप्रश्नेकिमुशब्दः । हेराजन्चक्रभ्रमंकरोतिएवंशीलश्चक्रभ्रमकारीतस्यभावश्चक्रभ्रमकारितालक्षणोगुणःस्वभावःकलशेघटेदृश्यतेसनिजस्यस्वस्यघटस्यहेतुर्निमित्तकारणंदण्डस्तस्माज्जातःकिमु । समवायिकारणगुणाःकार्यगुणमारभतेनत्विनिमित्तगुणोऽत्रनिमित्तगुणःकार्यगुणमारभतइतिअसंभाव्यमेतत्त्वयाक्वचिद्दृष्टमितिप्रश्नार्थः किमु । नयादृष्टःकुत्रेत्यपेक्षायामाह । यद्यस्मात्सकलशस्तस्याभैम्याउच्चकुचौभवदुच्चत्वमतांप्रपद्यमानःप्रभासरेणदीप्तिसमूहेनचक्रभ्रमंकुलालचक्रभ्रमणमर्थंद्रष्टुःकरोतिसुन्दरवस्तुदर्शनेनद्रष्टुर्भ्रमणंभवति । सूर्याद्यालोकावलोकनवत् । अथचसतदुच्चकुचौभवन्दीप्तिसमूहेनचक्रस्यलोकसमूहस्यवाभ्रमंमदजनितंमोहमातनोतीति । सर्वोपिस्तनकान्तिदर्शनेनकामान्धोभव

तीतिभावः । अथचकान्तिप्रवाहेचक्रवाकभ्रान्तिमातनोतिप्रवाहेचक्रवाकाभवन्ति । अतोभ्रमकारणत्वाच्छब्दच्छलात्तचक्रभ्रमकारितागुणोघटेविद्यते मुक्तत्वेनकांतिमत्त्वेनचतत्कुचौघटचक्रवाकतुल्याविति भावः । निजःसहजश्चासौहेतुश्चसमवायिकारणमितियावत् तादृशोनभवतीत्यनिजहेतुर्निमित्तकारणंतादृशाद्दण्डाज्जातःकिंस्विदित्युत्प्रेक्षाआक्षेपोवा । दण्डगुणःकलशेविद्यतइत्यत्रकिंप्रमाणमित्याशङ्कायांशब्दच्छलेनहेतुतामाह । सद्ति । यद्यस्मादितिवाइतियथामतिव्याख्येयम् । चक्रोगणेचक्रवाकेचक्रंसैन्यरथाङ्गयोः । ग्रामजालेकुलालस्यभाण्डेराष्ट्रास्त्रयोरपीतिविश्वः ॥ ३२ ॥

भजतेखलुषण्मुखंशिखीचिकुरैर्निर्मितबर्हगर्हणः ।
अपिजम्भरिपुंदमस्वसुर्जितकुम्भःकुचशोभयेभराट् ॥ ३३ ॥

भजतइति । खलूत्प्रेक्षायाम् । दमस्वसुश्चिकुरैःकेशैर्निर्मिताकृताबर्हगर्हणापिच्छभारतिरस्कारोयस्यसशिखीमयूरःषण्मुखंकार्त्तिकेयंभजतेसेवतेप्रसङ्गसएतदुक्तम् । तथादमस्वसुःकुचशोभयास्तनभारेणजितौकुम्भौगण्डौयस्यसइभराट्करिणांराजाऐरावतोपिजम्भारिमिन्द्रंसेवते । भैम्याःकेशसाम्यंस्तनसाम्यंचदेवाराधनेनप्राप्नुकामौवैरनिर्यातनार्थंवातौभजतइतिभावः । अधिकेनजितोन्यमधिकंभजते । चिकुरैरितिबहुत्वंसूचयित्वाषण्मुखत्वात्स्कन्दस्यकेशसंभावनयातदाश्रयत्वंशिखिनः स्कन्दाश्रयणंयुक्तम् । जभिजृभीगात्रविनामे । जम्भतेगात्रविनामंकरोतीतिजम्भस्तद्रिपुर्जम्भादधिकोतएवसेव्यते । अस्यागात्रविलासकारिणीकुचशोभाजम्भतुल्येतिहेतोस्तदधिकमिन्द्रंसेवतइति ॥ ३३ ॥

उदरंनतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेनमुष्टिना ।
चतुरङ्गुलमध्यनिर्गतत्रिवलिभ्राजिकृतंदमस्वसुः ॥ ३४ ॥

उदरमिति । हेराजन्दमस्वसुर्भैम्याउदरंमुष्टिनाकृतंविधिनेत्यर्थात् । किंभूतेनमुष्टिनानतोनिम्नोमध्योयस्यैवंविधंपृष्ठंयस्योदरस्यतस्यभावस्तत्तातयास्फुरन्तंप्रकटीभवदङ्गुष्ठपदमङ्गुष्ठस्थानंयस्यतेन । किंभूतमुदरंचतसृणा

ङ्गुलीनांसध्यान्निर्गतानिसूत्ताणिलोवलयसाभिर्त्राजतेलोसंपृष्ठम ध्येनिम्नत्वमङ्गुष्ठनिवेशादुदरेत्रिवलियुक्तत्वंचतुरङ्गुलिधारणाश्चतसृणांस्त्री णवेणात्मराशिभवंति । चतुरङ्गुलमितितत्पुरुषस्येत्यच् ॥ ३४ ॥

उदरंपरिमातिमुष्टिना कुतुकीकोपिदमस्वसुः कि मु । धृतत्नचतुरङ्गुलीव यद्वलिभिर्भातिसहेम कांचिभिः ॥ ३५ ॥

प्रकारान्तरेणोदरमेववर्णयति । उदरमिति । कोपिकुतुकीदमस्वसुरु दरंमुष्टिनाहस्तयापरिमातिव्यवच्छिनत्तिकिमुत्प्रेक्षायांयस्मात्तदुदरं सहेमकाञ्चिभिः सुवर्णमेखलासहिताभिर्वलिभिःकृत्वाधृतास्यमुष्टेश्चत स्रअङ्गुलयोयेनएवंविधमिवभातितिस्त्रोवलयश्चतुर्थोहेमकाञ्चीसतस्त्रोङ्गु लयस्तस्यमुष्टेरित्यर्थः । कोत्रस्वात्मपरिवेशर्थः । प्रस्यैवंत्यर्थः ॥ ३५ ॥

पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशि क्षया । विधिरेककचक्रचारिणं किमुनिर्मिरसाति मान्मथंरथम् ॥ ३६ ॥

पृथ्विति । विधिर्ब्रह्मानान्मथंकामसंबन्धिनंरथंनिर्मिरसतिनिर्मातुमि च्छतिकिमुत्प्रेक्षायाम् । किंभूतोविधिर्मिहिरःसूर्यस्तस्यस्यन्दनोरथस्त स्यशिल्पंनिर्माणंतस्यशिक्षयाअभ्यासेनपृथुंमहान्तंवर्त्तुलंतस्याभैम्यानित म्बंकरोतीतितिकृत । किंभूतंरथमेककेनाऽसहायेनचक्रेणचरतिएवंशीलंसू र्यरथैकचक्रनिर्माणाभ्यासेनअस्यगामेकीनितम्बःकृतःसकामरथस्येमोत्प्रे क्षितः । नितम्बदर्शनात्मदनप्रादुर्भावोभवतीतिभावः । निर्मिरसतिमा ङःसनिमीमेत्यादिनाचरीयम् । अत्रलोपोभ्यासस्येत्यभ्यासलोपः ॥ ३६

तरुमूरुयुगेनसुन्दरी किमुरम्भापरिणाहिनापर म् । तरुणीमपिजिष्णुरेवतां धनदापत्यतपःफल स्तनीम् ॥ ३७ ॥

तरुमिति । हेराजन्सुन्दरीभैमीपरिणाहिनाविशालेनऊरुयुगेनोरुद्व येनतरुंवृक्षरूपारम्भांकदलींपरंकेवलांजिष्णुर्जयनशीलेतिकिमुकिंवक्तव्यंअ पित्वेवंनवक्तव्यंकिंतुतरुणीमप्रितांरम्भांअप्सरोविशेषमपिजिष्णुरेव ।

किंभूतां धनदापत्यस्य कुबेरस्य पुत्रस्य नलकूबरस्य तपःफलं स्तनौ यस्यास्तथाभूताम्। यैर्नलकूबरेण तपः कृतं तां रम्भां कदलीमप्यूरुयुगेन जितवतीत्यर्थः। द्वयेन द्वयं जितम्। परिणाहो विशालतेत्यमरः। रम्भा कदल्यप्सरसोरिति विश्वः। मलोकेलिनिषेधात्तदस्मिति द्वितीया। सुन्दरीगौरादित्वान्ङीष् ॥ ३७॥

जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः। ध्रुवमेत्य रुतः सहंसकी कुरुतस्ते विधिपत्रदम्पती ॥ ३८

जलजइति। ये जलजे कमले सूर्यस्य सेवयैव एतस्या भैम्याः पदतां चरणत्वं पदं स्थानं स्थानं च अवापतुः प्रापतुरिव ध्रुवम् उत्प्रेक्षे। विधिपत्रदम्पती ब्रह्मवाहनपत्नी जायापती हंसस्त्रीपुंसौ कर्तारौ ते जलजे कर्मणी एत्य गत्वा रुतः शब्दात् ध्रुवं निश्चयेन सहंसकी कुरुतो हंसकसहिते कुरुतो हंसरवतुल्या शिञ्जिताद्येते सहंसके इत्यनुमीयेते इत्यर्थः। हंसकः पादकटकस्तत्सहिते नूपुरयुक्ते कुरुतः। विधिहंसमिथुनमेव नूपुरत्वेन परिणतमित्यर्थः। रविसेवया पद्मयोर्भैमीपदत्वप्राप्तिः विधिसेवया हंसानामेतच्चरणस्थानप्राप्तिरित्यर्थः। विधिपत्रदम्पती ये पद्मे रुतः शब्दं कुरुतः। रुतः शब्दे। तयाच हंसे कुरुत इति वा। कमलस्य हंससंयोगो युक्तो भैमीपदयोः पद्मादप्युत्कृष्टत्वात् हंसरवसमानशिञ्जितयोगाच्चेयमुत्प्रेक्षा। सुन्दरतरे सुकुमारे च भूषणान्तराश्रयणा स्वीयहंसमिथुनमेव तद्भूषणत्वे न कल्पितं तादृशस्यान्यस्य भूषणस्याभावा दिति च ध्वनिः। हंसकः पादकटक इत्यमरः। पद्मे ग्रेषा द्विभार्येति क्लृप्तस्य सन्धिः। रुत इति पक्षे वर्ण पक्षादिः ॥ ३८ ॥

श्रितपुण्यसरःसरित्कथं न समाधिक्षपिताखिलक्षपम्। जलजं गतिमेतु मञ्जुलां दमयन्तीपदनाम्नि जन्मनि ॥ ३९ ॥

श्रितेति। जलजं कमलं दमयन्तीपदमेव चरणमेव नाम यस्य एवंभूते जन्मनि जन्मान्तरे मञ्जुलां रम्यां गतिं गमनं पुण्यश्लोकप्राप्तिरूपां दशां च कथं न एतु प्राप्नोतु। किंभूतं श्रितानि पुण्यानि श्रेयस्कराणि सरांसि श्रेयस्कारिण्यो नद्यश्च येन तत् तथा समाधिना मुकुलीभावेन सम्यगाधिना क्षपिता अतिवाहिता अखिलाः क्षपा रात्रयो येन अन्योऽपि सेवितपुण्यतीर्थः समाधिना योगाभ्यासेन क्षपितिवा

द्विलवमल्पराणिर्जन्म त्वरे चत्वमांदशांप्राप्नोति तद्वद्वैमीपदप्राप्तिर्जलज
स्य ॥ ३९ ॥

सरसीः परिशीलितुंमया गमिकर्मीकृतनैकनीवृता । अतिथित्वमनायिसादृशीः सदसत्संशयगोचरोदरी ॥ ४० ॥

एतादृशीसाकथंत्वयाज्ञातेत्यतआह ॥ सरसीरिति ॥ सरसीः सरांसि परिशीलितुमवगाहितुंगमेर्धातोःकर्मीकृतागतिविषयीकृतानैकाअनेकानी वृतादेशायेनैवंविधेनमयासाभैमीदृशोरतिथिःवंदृष्टिगोचरत्वमनायिप्रापी तादृष्टेत्यर्थः । किंभूतासदसतोरस्तिनास्तीतिसंशयस्तस्यगोचरोविषयउद रंयस्याःसाअत्यन्तंकृशोदरीतिभावः । तेनक्वापिदेशेतादृशीनदृष्टेतिभा वः । नीवृज्जनपदोदेशइत्यमरः । सरसीरितिगौरादित्वान्ङीष् । शीले र्भावादिकात्तुमुन् । नीवृत्नहिवृतीतिदीर्घःनासिकोदरेतिङीष् ॥४०॥

अत्रधृत्यादिवोपियौवतैर्नसहाधीतवतीमिमामहम् । कतमस्तुविधातुराशये पतिरस्यावसतीत्यचिन्तयम् ॥ ४१ ॥

अवेति । हेराजन्नहमित्यचिन्तयंविचारितवानस्मि । किंकृत्वादिवो पिस्वर्लोकस्यापियौवतैः स्त्रीसमूहैःसहनाधीतवतीनाध्ययनकर्त्रीमिमाभै मीमवधृत्यनिश्चित्यसदृशैः सहपत्यतेकिलइतिकिंविधातुर्ब्रह्मणआशयेम नसिअस्याभैम्याः कतमस्तुकोवापतिर्वसतिविद्यतइतिविधात्रासुरसुन्दरी भ्योपिसुन्दर्योभैम्यायोग्यःकोमर्त्योविनिर्मितइतिचिन्तितवानित्यर्थः । यौ वतैरितियुवतिशब्दात्सामूहिकेभिक्षादित्वादणिभस्याढइतिप्राप्तःपुंवद्भा वोभिक्षादौयुवतिशब्दपाठसामर्थ्यान्नभवतीतिकेचित् । अत्रन्तादनुदात्ता देरञित्यपरे । नसहाधीतवतीमितिसुप्सुपेतिसमासः । कतमइतिक तरधातमौजातिपरिप्रश्नेडतिचनसामर्थ्यात्स्वार्थेपिडतमच् ॥ ४१ ॥

अनुरूपमिमंनिरूपयन्नथसर्वेष्वपिपूर्वपक्षताम् । युवसुव्यपनेतुमक्षमस्त्वयि सिद्धान्तधियंन्यवेशयम् ॥ ४२ ॥

अन्विति । इममस्याभैम्याअनुरूपंउपयोग्यंपतिंनिरूपयन्नयंवायोग्यो यंवायोग्यइति विचारयन्नपिअथपश्चात्सर्वेष्वपियुवसुतरुणेषुपूर्वंपश्चात्तास्यो व्यरूपत्वंब्यपनेतुन्निराकर्तुंनक्षमोऽसमर्थः सन्नहंत्वयिसिद्धान्तधियंभैमीरू पानुरूपत्वबुद्धिंनिःसपत्न निश्चयंम्यवेशयंनिवेशितवान् । अथपश्चात्त्वयी तिवा । त्वत्तोन्यस्तद्योग्यःकोपिरुपोमविद्यतइति । अन्यत्रापिपूर्वपक्षापे क्षयासिद्धान्तस्यबलवत्वम् ॥ ४२ ॥

अनयातवरूपसीमया कृतसंस्कारविबोधमस्य मे । चिरमप्यवलोकितायसा स्मृतिमारूढवती शुचिस्मिता ॥ ४३ ॥

अनयेति । चिरंचिरकालमवलोकितापिशुचिस्मितारम्यहासाभैमीअ द्यमेस्मृतिंस्मृतिपथंआरूढवतीप्राप्ता । किंभूतस्यमे तवानयादृश्यमानया रूपसीमयालावण्यमर्यादयाकृतंजनितंसंस्कारविबोधनंपूर्वाहित भावना ख्यसंस्कारसमुद्बोधोयस्यतद्रूपयोग्यत्वात्तद्रूपदर्शनेतास्मृतेस्त्यर्थः । सदृ शदर्शनेहिस्मृतिर्भवति । सदृशादृष्टचिन्ताद्याःस्मृतिबीजस्यबोधकाइति । रूपसीमयेतिद्वाभ्याभ्यामितिद्वापितृतीया ॥ ४३ ॥

त्वयिवीरविराजतेपर दमयन्तीकिलकिञ्चितंकि ल । तरुणीस्तनएवदीप्यते मणिहारावलिरामणी यकम् ॥ ४४ ॥

त्वयीति । किलेतिसंभावनायांहेवीरहेशूरकिलदमयन्त्याःकिलकिञ्चि तंशृङ्गारचेष्टाविशेषस्त्वयिपरंकेवलंविराजते विशेषेणशोभतेवीरस्यैवशृङ् गारित्वंयुज्यतेवीरानुरागिण्यस्त्रियइतिसूचनार्थंवीरेतिपदम् । अर्थान्त रन्यासंदृष्टान्तत्वेनाह । मणिहारावलेर्मुक्ताहारसमूहस्यरामणीयकंसौ न्दर्यंतरुणीस्तनेतरुण्याएवकुचेशोभतेनतुवृद्धयोषितः । क्रोधाश्रुहर्षभीत्या देःसङ्करःकिलकिञ्चितमित्यालङ्कारिकाः । रामणीयकंकामनीयकवत् ४४

तवरूपमिदंतयाविनाविफलं पुष्पमिवावकेशि नः । इयमृद्धधनावृथावनीस्ववनीसंप्रवदात्पिका पिका ॥ ४५ ॥

पुनरुत्कण्ठार्थमाह । तवेति । हे राजंस्तवेदं दृश्यमानमनुपमतयारूपं भैम्याविनाविफलंनिरर्थकंकस्यकिमिवअवकेशिनोवन्ध्यवृक्षस्य विफलं फलरहितंतुष्यमिवतद्यथानशोभते । अथवा अवकेशिनोमुषितत्तमुपहस्य शिरसिधार्यमाणंपुष्पंयथाविफलं तयाविनानकेवलंरूपंकिंत्वत्रद्वचनापूर्णवनाश्रयतवमीपृश्च अपिवृथाव्यर्थंवतथासंप्रवदन्तः कूजन्तःपिकाः कोकिलाश्चांसावन्यपिस्वयमारोपितावलासवाटिकाऽपिका नकापिभैमीप्राप्त्यभावेसर्वमेतन्निरर्थकमित्यर्थः । वन्ध्योफलोऽवकेशीचेत्यमरः । वनीतिगौरादित्वान्ङीप् अव्यक्तवाक्त्वा संप्रवदतिदित्यत्रवदेःशता ॥ ४५ ॥

अनयासुरकाम्यमानया सहयोगःसुलभस्तुनत्वया । घनसंवृतयाम्बुदागमे कुमुदेनेव निशाकरत्विषा ॥ ४६ ॥

अहमेवैतद्रूपयोग्यस्तत्कथं सुलभाकथमित्यत आह । ततःसुरैर्देवैरपिकाम्यमानयाऽभिलष्यमाणयाऽनयाभैम्यासहयोगः संबन्धस्तुत्वयानसुलभः सुप्रापः । तत्रयुक्तिमाह । कयाकेनेवअम्बुदागमेवर्षाकालेघनसंवृतयामेघच्छन्नयानिशाकरस्यचन्द्रस्यत्विषादीप्त्यासहसंबन्धः कुमुदेनेवसुप्रापोनप्राप्यतेपरंतुदुः खेनमदुपायेनसाप्राप्यातत्रगत्वात्वय्येवतस्याअनुरागमुत्पाद्यत्वामेवयथाभजेतथाकरिष्यामीतिभावः । यथावर्षासुमेघानामतिप्रतिबन्धकतयाकुमुदेनचन्द्रज्योत्स्नादुष्प्रापापिवायुनादैवान्मेघनिराकरणेप्राप्यतेतथेत्यर्थः । सुलभःखलर्थत्वेनषष्ठीनिषेधात्त्वयेतितृतीया ॥ ४६ ॥

तदहं विदधेतथातथा दमयन्त्याःसविधेतवस्तवम् । हृदयेनिहितस्तयाभवानपिनेन्द्रेणयथाऽपनीयते ॥ ४७ ॥

व्यञ्जितमर्थंव्यक्तीकुर्वन्निगमयति । तदिति । ततस्माद्योगस्यसान्तरायत्वात्कारणाद्अहंदमयन्त्याःसविधेसमीपेतवस्तवंस्तुतिंतथातथातेनतेनप्रकारेणविदधेकरिष्यामि । तयाभैम्याहृदयेमनसिनिहितोऽवधृतोभवान्यथायेनप्रकारेणइन्द्रेणापिनापनीयतेदूरीक्रियतेकिंपुनर्मनुष्येण । इन्द्रादेरप्यधिकतयात्ववर्णनीयः । छिद्यतेअपनीयतेइतिवर्तमानसामीप्येवर्तमानवत्प्रत्ययः । विदधेआशंसायांभूतवच्च ॥ ४७ ॥

तवसम्मतिमेवकेवलामधिगन्तुं धिगिदं निवेदि तम् । ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् ॥ ४८ ॥

अनौचित्यं परिहरति । तवेति । इदं मम नौयोजनं तवानुमतं न वेति केवलां सम्मतिमनुमतिमधिगन्तुमेव प्राप्तुमित्यर्थः । इदं निवेदितं विज्ञप्तिं धिक् । हि यस्मात्साधवो महान्तो निजोपयोगितां निजोपकारितां फलेन फलनिष्पत्त्या ब्रुवते न तु कण्ठेन कण्ठस्थेन वचनेन तव केवलां सम्मतिमेवाधिगन्तुं ज्ञातुमेवेदं निवेदितं मम वचनं तथापि निश्चयमसोपकारो न कर्तव्य इति केनापि नोच्यते इति वा भवत्सम्मतिं ज्ञातुमेवेदं वचनं यदि सम्मतिं भवत्कर्तृक मात्मसम्मानं प्राप्तुं चेद्वचनं तर्हि धिक् निश्चयमेव यतः साधवो न स्युस्तादृशा भवन्तीति वा ॥ ४८ ॥

तदिदं विशदं वचोमृतं परिपीयाभ्युदितं द्विजाधिपात् । अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम् ॥ ४९ ॥

तदिति । स नलः द्विजाधिपात्पक्षिश्रेष्ठाच्चन्द्राच्चाभ्युदितं निर्गतमिदं पूर्वोक्तं विशदं प्रव्यक्तं धवलं च वचो लक्षणममृतं परिपीय सादरमाकर्ण्य पीत्वाऽतितृप्ततयाऽतिहृष्टत्वेन सितं शुभ्रं स्मितं तस्य पीतस्यामृतस्योद्गारमिव निर्ममे चकार श्वेतस्य श्वेत एवोद्गारो भवतीति सितपदम् । अन्योऽप्यतितृप्तोऽजीर्णं गयादुद्गारं करोतीति सोऽथ पक्षाद्वास्मितो भवति । साधवः स्मितभाषिणो भवन्तीति संभावनाज्जातहर्षो द्वारस्मितम् । उद्गार इति चन्नोग्रे इति च ॥ ४९ ॥

परिमृज्य भुजाग्रजन्मना पतगं कोकनदेन नैषधः । मृदुलस्य मुदाऽकिरद्गिरः प्रियवादामृतकूपकण्ठजाः ॥ ५० ॥

परीति । नैषधो नलस्तस्य हंसस्य मुदे हर्षाय गिरो वाचो मृदु कोमलं यथा तथाऽकिरदुवाच । किं कृत्वा भुजाग्रे बाहुप्रान्ते जन्मोत्पत्तिर्यस्य तेन कोकनदेन रक्तोत्पलेन करेणेत्यर्थः । पतगं परिमृज्य संस्पृश्य । किंभूता गिरः प्रियवादामृतं स्तुतिवचोलक्षणममृतं तस्य कूपआकरइत्यर्थः । एवंभूतो यः कण्ठ

तस्माज्जाताःमञ्जुलंसरसंवचनवाचेतिभावः । मृदुपरिस्पृश्येतिवा ॥५०॥

न तुलाविषयेतवाकृतिर्नवचोवर्त्मनिते सुशील
लता । त्वदुदाहरणाकृतौगुणा इतिसामुद्रिकसा
रमुद्रणा ॥ ५१ ॥

नेति । हेहंसतवाकृतिःस्वरूपंतुल्यतेऽनयेतितुलाउपमेयंतत्तद्विषयेनउ
पमानाभावात्किंतूपमानमेवतुल्यतेऽनयेतितुलोपमानंतस्यविषयेलक्ष्येउ
पमेयमध्येनतिष्ठतिकिंतूपमानमेवेतिवा । तथातेसुशीलतासुस्वभावत्वंसु
वृत्तत्वंवावचोवर्त्मनिवाग्गोचरेन वर्णयितुंनशक्यतइत्यर्थः । तथाआ
कृतौगुणाइतियत्रा कृतिस्तत्रगुणावसन्तीतिसामुद्रिकशास्त्रस्यसारोरहस्य
स्तस्यसमुद्रणानियमनासंग्रहइतियावत् सात्वदुदाहरणंदृष्टान्तोयस्याः ।
अन्यथासानिर्विषयास्यादितिभावः । तथाकृतिंगुणांश्चदृष्ट्वासामुद्रिकशास्त्र
कारैर्यत्राकृतिस्तत्रगुणावसन्तीत्युक्तम् । तदुदाहरणंप्रथमदृष्टान्तस्त्वमित्य
र्थइतिवा । तुलेतिकर्मणिकरणेवाअर्थेकविधानमितिकः । नयन्तस्यानु
लनेतियद्यपिभवितव्यंतथाप्यतुलोपमाभ्यामितिनिर्देशात्कप्रत्ययः । सा
मुद्रकेतिसमुद्रेणप्रोक्तमस्मिन्नर्थेतेनप्रोक्तमित्यणिस्वार्थेकन्सामुद्रिकेति ।
मुद्रकेतिपाठेयत्कान्तदस्त्यर्थेऽतइनिठनाविति ठन् ॥ ५१ ॥

नसुवर्णमयी तनुःपरंननु किंवागपितावकीत
था । नपरंपथिपक्षपातिता नवलम्बेकिमुमादृ
शेऽपिसा ॥ ५२ ॥

नेति । ननुसंबोधनेतावकीतवेयंतनुःपरंकेवलंसुवर्णमयीहेमविकारो
न किंतुतावकीवागपिवाक्यपितथाकिंसुवर्णमयीशोभनावर्णायस्याःसा ।
किंप्रश्ने वाक्पटुत्वंशरीरसौन्दर्यंचत्वय्येवेतिसूचितम् । नुःसंबोधने । ने
तिपाठेवागपितथानकिंअपितुतथैवेतिवा । अन्यच्चतवपक्षपातितापक्षा
भ्यांपततिगच्छतिएवंशीलःपक्षपातीतस्यभावस्तत्ताआमालम्बेनिरालम्बे
पथिअन्तरिक्षमार्गेपरंकेवलंनकिंतुसापक्षपातितास्वपक्षगामित्वमनु
कूलवर्तित्वमनवलम्बेनिर्गतिकेमादृशेमत्सदृशेकिमुकिंनेतिवा । निराल
म्बनस्यममत्वमेवालम्बनमितिभावः ॥ ५२ ॥

भृशतापभृतामयाभवान्मरुदासादितुषारसारवान् । धनिनामितरःसतां पुनर्गुणवत्संनिधिरेव संनिधिः ॥ ५३ ॥

भृशेति । हेहंसमयाभवान्मरुद्वायुरासादिप्राप्तःकिंभूतेनभृशतापंप्र तिशयितकामज्वरंविभर्त्तीति । किंभूतोमरुत्तत्तुषारस्यहिमस्यसारःश्रे ष्ठोभागोविद्यतेतस्मिन्ज्वरतप्तस्यशीतलेनवायुनायथातापनाशस्तथा भ वत्संगत्याममेत्यर्थःतदेवेदंदृष्टान्तेनाह । धनिनांधनवतामितरएतद्भिन्न स्तो नीचोद्रव्यरूपोवासंनिधिःसम्यक्निधिः सतांविदुषांपुनर्गुणवतांस न्निधिःसमागमएवसंनिधिः सम्यङ्निधिर्नत्वन्यः निधिप्राप्त्याधनिकानां यथांहर्षस्तथागुणिजनसन्निधिनासतांहर्षः । सन्निति पृथग्वा इतरस्त्वन्य नीचयोरित्यमरः ॥ ५३ ॥

श्रुतधःश्रुतिमागतैवसा त्रिजगन्मोहमहौषधिर्मम । अमुनातत्रशंसितेनतु स्वदृशैवाधिगतामवैमिताम् ॥ ५४ ॥

श्रुतधइति । त्रिजगतोमोहोमूर्छाप्रापणे वशीकरणेचमहौषधिरुत्तमौष धिःसंमोहनीविद्येत्यर्थःसाभैमीश्रुतधःश्रुतात्बहुभ्योऽनेकवारंवाममश्रुतिं श्रागतैवअनेकवारंमयाकर्णितैवेत्यर्थः । अमुनाऽनेनतत्प्रशंसितेनत्वत्कर्तृ केणसौन्दर्यकथनेनतुपुनरहंतांभैमींस्वदृशैवस्वनेत्रेणैवाधिगतां दृष्टामवै मिजाने । यद्येवंविधात्वयादृष्टातर्हितयापिदृष्टैवेतिश्रातिमित्रतयालौकि क्युक्तिः । यद्बहुवारमाकर्ण्यतेतत्कदाचिद्दृश्यतेपि । श्रुतधइतिबहु र्थकारकत्वाच्छस् ॥ ५४ ॥

अखिलंविदुषामनाविलं सुहृदाचस्वहृदाचपश्यताम् । सविधेऽपिनसूक्ष्मसाक्षिणी वदनालंकृतिमात्रमक्षिणी ॥ ५५ ॥

नेत्रादपिमित्रवचनस्याधिक्यमाह । अखिलमिमिति । चौतुल्ययोगार्थौ । सुहृदामित्रेणचस्वहृदास्वमनसाचअखिलंसमस्तंवस्तुअनाविलमसंदिग्धम विपर्यस्तंवाऽऽगमानुमानाभ्यांपश्यतामनाविलमसंदिग्धंयथाभवतितथा

वाञ्छामतांविदुषांज्ञातॄणामंक्षिणीनेत्रेवदनालंकृतिमात्रंमुखालंकरणमेवन त्वन्यत्तयोःप्रयोजनंयतः । किंभूतेअक्षिणीसविधेपिसन्नीपेपिनसूक्ष्मसाक्षि णीनसूक्ष्मवस्तुग्राहकेयतोऽत्रःयं स्वगतंकज्जलारक्तत्वादिकमपिद्रष्टुंनश क्नोतितद्दूरस्थंकथंगृह्णीयात्सामीप्याभावादितिभावः । अतःप्रत्यक्षज्ञा ण्यांदुर्बलमित्यर्थः । मित्रस्यप्रथमपक्षणंहृदयापेक्षयाप्राधान्यद्योतनार्थ म् । एवंविधेअक्षिणीविदुषामलंकरणमात्रंनकिंतुअलंकृतिरेवावदत्कथये तिवा । सुहृदादेशकालादिव्यवहितमपिपश्यतिनतुनेत्राभ्यां । सुहृद् दुहृदावितिसाधुः । नसूक्ष्मेतिनशब्देनसमासः । सूक्ष्मसाक्षिणीनेतिके चित्मात्रंकात्स्न्येंऽवधारणे । अत्रावधारणेमात्रशब्दः ॥५५॥

अमितंमधु तत्कथामम श्रवणप्राघुणकीकृताज नैः । मदनानलबोधनेभवेत् खगधाय्याधिगधै र्यधारिणः ॥ ५६ ॥

अमितमिति । हेखगहंसजनैर्लोकैःश्रवणयोःप्राघुणकीकृताअतिथीक ताश्राविताततस्याभैम्याःकथाममसदनानलस्यकामाग्नेर्बोधनेदीपनेसमर्था धाय्याअग्निसंधुक्षणेऋग्भवेत्भवतितयायथाऽग्निर्दीप्यतेतथातत्कथया ममसदनाग्निर्दीप्यते । किंभूतातत्कथाअमितमनुपमंमधुवान्मधुरिकाऽ परिमिताऽमृततुल्येत्यर्थः । अतोऽधैर्यधारिणोमत्सदृशानधीरान्धिक् । एतादृशाअधीरानिंद्याः । ममविशेषणमधैर्यधारिणइतिवा । तथामांधि गित्यर्थः । ऋकसामिधेनीधाय्याचयास्यादग्निसमिन्धनेइत्यमरः ॥ ५६ ॥

विषमोमलयाहिमण्डली विषफूत्कारमयो मयो हितः । खगकालकलत्रदिग्भवः पवनस्तद्विरहा नलेधसा ॥ ५७ ॥

विषमइति ॥ हेखगतद्विरहानलेत्नैमीवियोगवह्निस्तस्यैधसाइन्धनेमम याकालकलत्रंदक्षिणादिक्तत्रभवःपवनोवायुर्दक्षिणवातोविषमोदुःसहस्त हितस्तर्कितः । किंभूतोमलयाचलवर्त्मानअहिमण्डलीभुजङ्गसमूहस्त स्यविषंतस्यफूत्कारमयोविषसम्पुक्तगाधमनमयरूपो विषंमातिआत्मनास मीकरोतीतिवाविषमयतेददातिवा । कालयतिसर्वभूतानीतिकालस्तस्यपुत्र

स्त्वेवंविषपुच्छस्य भावः यतेफूत्कारसन्धुक्षितेनवह्निनायथाकाष्ठंदह्यतेतथाम
लयपवनसन्धुक्षितेनविरहानलेनाहमपिदह्यतइतिभावः मलयाचलेचन्द्र
नप्राकुल्यत्स्वपंबाकुल्यम्। विषमइतिपाठोऽनुपसर्गकः। फूत्कारमयइतिता
द्रूप्येप्राचुर्येमयट्। कालइतिमोदनार्थात्कालयतेश्चौरादिकात्पचाद्यच्॥५७

प्रतिमासमसौ निशापतिः खग सङ्गच्छति यद्दिना
धिपम् । किमु तीव्रतरैस्ततः करैर्मम दाहाय स धै
र्यतस्करैः ॥ ५८ ॥

प्रतीति । हेखगासौनिशापतिश्चन्द्रःप्रतिमासंमासेमासेयद्दिनाधिपं
सूर्यंसंगच्छतिप्रविशतिसचन्द्रस्ततः सूर्यसङ्गात्तीव्रतरैरतितीक्ष्णैर्धैर्यत
स्करैर्धैर्यचौरैःकिरणैर्ममदाहायजातः । किमुइतिवितर्कः । उपलक्षितइति
वा । विधोःविरहिणांसंतापकारित्वंस्वतएवस्थितेस्तदपदाहायोत्प्रेक्षित
म् । अन्योऽपिस्वतोऽपकारेऽसमर्थोऽन्यसहायोपकारंकरोति । प्रतिमासं
वीप्सायामव्ययीभावः । संगच्छतीतिसकर्मकत्वात्तङभावः ॥ ५८ ॥

कुसुमानि यदि स्मरेषवो न तु वज्रं विषवल्लिजानि
तत् । हृदयं यदमूमुहन्नमूर्मम यच्चातितरामती
तपन् ॥ ५९ ॥

कुसुमेति । यदिस्मरेषवःकामबाणाःकुसुमानिपुष्पाणिनतुवज्रंवज्रक
ल्पायद्विनभवन्तीत्यर्थः । तर्हितानिवाकुसुमानिविषवल्लिजानिविषवल्ली
भवानि । यद्वाममतेस्मरेषवोयत्र्यमेव ननुकुसुमानिलोकप्रसिद्धिविरुद्धं
यदिचेत्तर्हितानिविषवल्लीजातानिभविष्यन्तिकुसुमत्वमस्तुविषवल्लिजत्वं
मास्तु । विषपक्षेबाधकमाह ॥ यद्यस्मादमूःस्मरेषवोममहृदयमतितराम
तिशयेनामूमुहन्मोहयामासुः । अतीतपंस्तापयामासुः । अन्यत्कौ
सुमापीविषवल्लिजत्वेनविनात्रसंगच्छेतेतस्माद्विषवल्लिजान्येवेत्यर्थः । वज्र
पुंहीरयोरित्यमरः । अमूमुहन्नतीतपन्नितिमुहेस्तपेश्चण्यन्तात्लुङ् । तयो
रकर्मकत्वाद्गतिबुद्धीत्यादिनाऽणौ कर्तुर्णौकर्मत्वाद्धृदयमितिद्वितीया ।
अतितरांकिमेत्तिङिश्चाम् ॥ ५९ ॥

तदिहानवधौ निमज्जतो मम कन्दर्पशराधिनीर

घो । भवपोतइवावलम्बनं विधिनाऽऽकस्मिक सृष्टसन्निधि ॥ ६० ॥

तदिति ॥ हेहंततस्तस्मात्त्वंतमवलम्बनमाधारोभवकइवपोतइव समुद्रतरणयानपात्रमिव । किंभूतस्यममदुर्ह्ासिअनवधौनिर्मर्यादेकंदर्पशरैर्जनितोयआधिर्मानसीव्यथातद्रूपेनीरधौसमुद्रेनिमज्जोन्मुखतः । किंभूतोविधिनाब्रह्मणादैवेनवाआकस्मिकोऽकस्मात्सृष्टोजातः कृतासन्निधिंसान्निध्यंयस्य । अपारेसमुद्रेनिमज्जतः कस्यचिद्दैववशात्समीपगःपोतोयथावलम्बनंभवतितथात्वमपिभवेतिभावः ॥ इतुशुन्यःकालोऽकस्मादित्यनेनाव्ययेनलक्ष्यते । तत्रभवआकस्मिकोऽध्यात्मादित्वाठ्ठञ्अव्ययानांभमात्रेटिलोपः ॥ ६० ॥

अथवाभवतः प्रवर्त्तनानकथं पिष्टमियंपिनष्टि नः । स्वतएवसतांपरार्थता ग्रहणानांहियथायथार्थता ॥ ६१ ॥

अथवेति । पूर्वोपरिसोढव्यंसंवपोतइवावलम्बनमित्यादिकानोऽस्मत्कर्तृकाभवतस्त्वत्कर्मिकाप्रवर्तनाप्रेरणापिष्टंपिष्टमेवकथंनपिनष्टिपिष्टपेषणन्यायंकथंनानुसरतिव्यर्थेत्यर्थः । ननुस्वतःप्रवृत्तौपिष्टपेषणंनतथाऽस्तीत्याशङ्कायांस्वतःप्रवृत्तिंदृष्टान्तेनसमर्थयते।हियस्मात्सतांसाधूनांपरार्थतापरोपकारित्वंस्वतएवपरप्रेरणंनापेक्षतेइत्यर्थः । तस्मात्पिष्टपेषणतुल्याप्रवर्तनेतिभावः । यथाग्रहणानांज्ञानानांयथार्थताप्रामाण्यंस्वतएवज्ञानंस्वतःप्रमाणमितिमीमांसकाः । यद्वागृह्यतेज्ञायतेर्थोयैस्तानिग्रहणानितेषांयथार्थताअनुगतार्थतास्वतएव । वृक्षशब्दोच्चारणमात्रेमूलशाखापत्रादिमत्त्वमनियस्फुरतियथातथासतांनाममात्रेगृहीतेतेषांपरोपकारित्वंस्फुरत्येव । एकेसत्पुरुषाःपरार्थघटकाःस्वार्थंपरित्यज्येत्यादिसर्वेहरिः । अत्यद्विस्तरभयान्नलिख्यते । प्रवर्तनेतिण्यासेतियुच् । अस्मदोद्वयोश्चेतिएकत्वेपिबहुवचनम् ॥ ६१ ॥

तववर्त्मनिवर्त्ततांशिवं पुनरस्तुत्वरितंसमागमः। अयिसाधयसाधयेप्सितं स्मरणीयाःसमयेवयंवयः ॥ ६२ ॥

तवेति ॥ यत्नेनिमार्गेतवशिवंकल्याणंवर्त्ततांभवतु कृतकार्येस्यतवत्वरि
तंशीघ्रंसामागमोमयासहमेलनंपुनरप्यस्तुभवतु । अयिहंसईप्सितंभैमी
प्राप्तिलक्षणंमदभिलषितंसाधयसाधयनिष्पादयस्वार्त्तिद्योतनार्थवीप्सा ।
साधयगच्छाभिमतंसाधयकुर्विति वा । अयिहेवयःपक्षिन्वयंसमयेसत्वराहि
त्यसमयएकाग्रेस्मर्त्तव्याः । तस्मादस्मदभिलाषउत्पादयितव्यइतिकेचि
त् । अथच किंचित्प्रतिबन्धकाशङ्कासमयेवयंबैन्यादयःकार्येसिध्यर्थंस्मर
णीयाः । अनुनयेऽप्यपीत्यमरः । वयमस्मदोर्द्वयोश्चेत्येकत्वेबहुवचनम् ।
पक्षेत्यदादीनांमिथइतिअस्मदःशेषः ॥ ६२ ॥

इतितंसविसृज्यधैर्यवान् नृपतिःसूनृतवाग्बृहस्
पतिः । आविशद्वनवेश्मवीक्षितः स्मृतिलग्नैः
कलहंसशंसितैः ॥ ६३ ॥

इतीति । सनृपतिर्नलइतिपूर्वोक्तप्रकारेणतंहंसंविसृज्यप्रस्थाप्यवनवे
श्मउद्यानगृहमविशत् किंभूतोधैर्यवान्धैर्ययुक्तोयावद्धंसागमनंतत्रैवप्रति
क्षाकारित्वात् तथासूनृतवाग्विप्रियेसत्येवचसिबृहस्पतिरिवसूनृतप्रचारवा
दी । तथारमणीयत्वात्स्मृतिगोचरंस्मरणविषयंलग्नैर्गतैःकलहंसशंसितै
र्हंसभाषितैःकलैर्गंभीरैर्हंसभाषितैर्वाविस्मितःसाश्चर्यः ॥ ६३ ॥

अथभीमसुतावलोकनैः सफलंकर्तुमहस्तदेवसः ।
क्षितिमण्डलमण्डनायितं नगरंकुण्डिनमण्डजो
ययौ ॥ ६४ ॥

अथेति । अथानन्तरंसोऽण्डजोहंसोभीमसुताभैमीतस्याअवलोकनैर्दर्श
नैस्तद्देवाह्वदिनंसफलंसार्थकंकर्त्तुंकुण्डिनंनामनगरंययौजगाम । किंभूतंर
मणीयत्वाद्भैम्यधिष्ठितत्वाच्चक्षितिमण्डलस्य मण्डनायितमलङ्कारीभूतंम
ण्डनमिवाचरतितदेवइत्यनेनद्रागपिविलम्बोनकृतः । तेनपरोपकारि
त्वंसूच्यते ॥ ६४ ॥

प्रथमंपथिलोचनातिथिं पथिकप्रार्थितसिद्धिशं
सिनम् । कलशंजलसंभृतंपुरः कलहंसःकलयांब
भूव सः ॥ ६५ ॥

तद्गमनेश्लोकद्वयेनशकुनानाह । प्रथममिति । सनलहंसः प्रथमंपथिना गैलोचमानैरिपिंसोधनगोचरंजलसंभृतंजलपूर्णकलशंघटंपुरोऽग्रेफलयांबभूव ददर्शवात् स्वानुकूलंशकुनमपश्यदित्यर्थः । अतिथिशब्देनाकस्मिकोपस्थितिःसूच्यतेबुद्धिपूर्वकंशकुनंतथानफलदंयथाकस्मिकं किंभूतंकलशंपथिकैः प्रार्थितायाःसिद्धेःकांशंसतीतिशंसिनद्योतकम् । पथिकः पथःकन् ॥६५॥

अवलम्ब्य दिदृक्षयाऽम्बरे क्षणमाश्चर्यरसालसङ्गतम् । सविलासवनेऽत्रनीभृतः फलमैक्षिष्ट रसालसङ्गतम् ॥ ६६ ॥

अवलम्ब्येति । सहंसोऽवनीभृतोनलस्यविलासवनेक्रीडावनेरसालैराम्रैःसङ्गतंलग्नंफलमैक्षिष्टददर्श । फलमात्रदर्शनकार्यसिद्धिसूचकंतुतरामाम्रफलदर्शनमितिभावः । किंकृत्वाक्षणंमुहूर्तंदिदृक्षयामार्गावलोकनेच्छयाऽम्बरेआकाशेरमणीयोद्यानदर्शनाश्चर्य रसेनालसंमन्दंगतंगमनमवलम्ब्याश्रित्यइत्यपक्षिजातिः ॥ ६६ ॥

नभसः कलभैरुपासितं जलदैर्भूरितरक्षुपन्नगम् । स ददर्श पतङ्गपुङ्गवो विटपच्छन्नतरक्षुपन्नगम् ॥

नभसइति । सपतङ्गपुङ्गवःपक्षिश्रेष्ठोनगंपर्वतंददर्श । किंभूतंनभसआकाशस्यकलभैःकरिशावकरूपैर्जलदैर्मेघैरुपासितंसेवितंतथाभूरितराःक्षुपाह्रस्वशाखाशिफवृक्षायस्मिन्तथाविटपैःशाखाभिश्छन्नास्तिरोहितास्तरक्षवोमृगादनाःशापदविशेषाःपन्नगाःसर्पाश्चयत्र । कलभदर्शनस्यशकुनरूपत्वाज्जलदानांकलभत्वमुक्तम् । उपासितेत्यनेनतरक्षुपन्नगदर्शनमशकुनमतस्तेषांछन्नत्वमुक्तम् । कलभःकरिशावकः । ह्रस्वशाखाशिफःक्षुपः । तरक्षुस्तुमृगादनइत्यमरः । स्युरुत्तरपदेव्याघ्रपुङ्गवेत्यादिवचनात् पुङ्गवशब्दःप्रशंसावचनःप्रशस्तःपतगः । प्रशंसावचनैश्चेतिसमासः । छन्नेति वा छान्तवान्तेतिसाधु । पन्नगइतिसर्वत्रपन्नयोरुपसंख्यानमितिडः ॥ ६७ ॥

सयथोधुतपक्षतिःक्षणं क्षणमूर्ध्वायन दुर्विभावनः । त्रिततीकृतनिश्चलच्छदः क्षणमालोककदत्तकौतुकः ॥ ६८ ॥

सइति । सहंसएवंभूतःसन्ययौ । किंभूतःसप्तत्रिंशत्कलासप्तपंथुलाक म्पितापक्षतिःपक्षमूलंयेनतथासप्तमूर्ध्वंनयनंगमनंतेनदुर्विभावनोदुर्लक्ष्य स्तथासप्तपंवितती कसौविस्तारितावतएवमिषसौ निकम्पौछदौपक्षौयस्य सर्वोपिपक्षजातिः । अतएवालोककानांपश्यतांजनानांदत्तंकौतुकंयेनएक त्रदुर्लक्ष्यत्वादेवकौतूहलम् । आलोकइतिण्वुल् ॥ ६८ ॥

तनुदीधितिधारयारयाद्गतया लोकविलोकनामसौ । क्वदहेमकषाविवालसत् कषपाषाणनिभेनभस्तले ॥ ६९ ॥

तन्विति । असौहंसोऽलसद्विराज किंकुर्वन्नेवागच्छल्लोकविलोकनां जनकर्मनयनगोचरं गतयासयातनुदीधितिधारयाशरीरदीप्तिधारयागमनवे गात्तन्वीकशायादीधितिधारासयासा कृत्वाकषपाषाणनिभेनि कषोपलतु ल्येनभस्तलेगगने क्वदहेमपक्षसुवर्णशुद्धमशुद्धंवेतिपरीक्षार्थंकषनिकषेसु वर्णरेखापिजनैर्विलोक्यते ॥ ६९ ॥

विनमद्भिरधः स्थितैःखगैर्झटिति श्येननिपातशङ्किभिः । सनिरैक्षिदृशैकयोपरिस्यदझङ्कारितपत्रपद्धतिः ॥ ७० ॥

विनमद्भिरिति । सहंसःस्वापेक्षयाऽधस्थितैःखगैःपक्षिभिरेकयैवदृशा दृक्याउपरिऊर्ध्वंनिरैक्षिदृष्टः । किंभूतैःश्येननिपातशङ्किभिःश्ये ननिपातभयशङ्कनशीलैरतएवझटितिविनमद्भिर्नम्रीभूतैः । किंभूतःश्येननि पातशङ्कायांहेतुः स्यदेनवेगेनझङ्कारिताझमित्याकारशब्दंकुर्वतीपत्रपद्ध तिःपक्षसरणिर्यस्य । श्येनश्चपक्षिजातिरियम् । झङ्कारितेतितारका दित्वादितच्स्यदोजवइतिच्छनिपातः ॥ ७० ॥

ददृशेनजनेनयन्नसौ भुवितच्छायमवेक्ष्य तत्क्षणात् । दिविदिक्षुवितीर्णचक्षुषा पृथुवेगद्रुतमुक्तदृक्पथः ॥ ७१ ॥

ददृशइति । जनेनयन्गच्छन्नसौहंसोनददृशेनदृष्टः । किंभूतेनभुवि भूम्यांतस्यहंसस्यच्छायातच्छायमवेक्ष्यदृष्ट्वातद्यलोकनार्थं तत्क्षणात्तस्मि

श्रवणपेदिविगगनेदिशुदिशासुचवितीयंदत्तंचक्षुर्येनकिंभूतीयतः प्रथुना तिर्यदेनवेगेनद्रुतंझटितिनुत्तरत्यक्तोदृक्पथोदृष्टिमार्गोयेन । भुवितच्छा यांदृष्ट्वातदवलोकनार्थयावद्दत्तरिक्षेदिशुचदृष्टिर्दीयतेतावद्देवातिवेगेनदूर गामित्वान्नालोकितइतिभावः । यन्नितीयाःशतरिरूपम् । तच्छायंविभा षासेनेतिनपुंसकत्वम् । दृक्पथत्रगादिनासमासान्तः ॥ ७१

नवनप्रथिशिखिश्रियेऽमुना क्वचिदप्युन्नतरद्रुचारुत म् । नसगोत्रजमन्ववादिवा गतिवेगप्रसरद्रुचा रुतम् ॥ ७२ ॥

नवनमिति । अमुनाहंसेनपथिमार्गेक्वचिदपिप्रदेशेवनंनशिखिश्रियेनाश्रि तं किंभूतमुन्नतरायांद्रूणांद्रुमाणांचारुतासौन्दर्ययत्रतथावाऽथवासगोत्रजं स्वज्ञातिहंसजातंरुतंनाऽन्ववादिना नूदितंसगोत्रैः सहसंवादोनागतश्चत्य र्थःकिंभूतेन गतिवेगेनगमनवेगेनप्रसरन्तीरुक्रुचिर्यस्यतेनवनस्थितिःस्व पूज्यसंभाषयंचपथिजाति । विलम्बभयादुभयमपितेननकृतमितिगमने सादरत्वंसूचितम् । सगोत्रेतिज्योतिर्जनपदेतिसः । रुगितिसंपदादित्वा त्क्विप् ॥ ७२ ॥

अथभीमभुजेनपालिता नगरी मञ्जुरसौधराजि ता । पतगस्यजगामदृक्पथं हरशैलोपमसौधरा जिता ॥ ७३ ॥

अथेति । अथपराजिताराज्ञाभीमेनपालितासौमञ्जुःसुन्दरीकुण्डि नाख्यानगरीपतगस्यहंसस्यदृक्पथंदृष्टिगोचरंजगाम । किंभूतेनभीमेभ भुजांभयानकौभुजौयस्यकिम्भूताहरशैलःकैलासस्तदुपमैस्तत्सदृशैः सौधैः सुधाधवलितैराजगृहैराजीताशोभिता । कैलासोऽपिभीमभुजेनहरभुजेन पालितः । सौधराजितेतिविरोधाभासः ॥ ७३ ॥

दयितंप्रतियत्रसन्तता रतिहासाइवरेजिरेभुवः । स्फटिकोपलविग्रहागृहाः शशभृद्भित्तनिरङ्कभित्त यः ॥ ७४ ॥

दयितमिति । असौका, यत्रनगर्यांगृहाभुवोनायिकातुल्यायारतिहा

साःकेलिहासाद्दयरेजिरेशुशुभिरेकिंभूतारतिहासादयितंपुष्पोपतिंभीमंप्रतिसंततात्मिरन्तराःप्रवृत्ताथाकिंभूतागृहाःस्फटिकोपलाः स्फटिकरत्नानि विग्रहःस्वरूपंयेषांस्फाटिकरत्ननिर्मिताइत्यर्थः । तथाप्रभृन्द्रस्तस्यभित्तं शकलंतद्दन्निरङ्कानिफलङ्काभित्तयोयेषां गृहाणांशुभ्रत्वाद्धासतुल्यत्वमितिसमयेकान्तंप्रतिक्रीणांहासामवन्तिअन्यदाम । गृहाःपुंसिचभून्येव । भित्तंशकलखण्डेवेत्यमरः । संतताःसमोवेतिपक्षेमलोपाभावः । भित्तंशकलमितिसाधुः ॥ ७४ ॥

नृपनीलमणीगृहत्विषामुपधेर्यत्रभयेनभास्वतः ।
शरणार्थमुवास वासरेह्यसदावृत्युदयन्नमंतमः ॥७५

नृपेति । यत्रतमोऽन्धकारंनृपस्यराज्ञोनीलमणीनिर्मितागृहाःतेषांत्विषस्तासामुपधेर्व्याजात्भास्वतः सूर्याद्भयेनेयहेतुनावासरेदिवसेऽपिशरणंगृहंरक्षितारंवाअर्थयतेतादृशंसदुवास वसतिस्म । इन्द्रनीलनिर्मितगृहदीप्तयोनभवन्तिकिंत्वन्धकारोयमितिभावः । शत्रोर्भीतोऽन्योपिरक्षितारमाश्रयतेतदाश्रयेणोदयंप्राप्नोतिच । किंभूतंतमोऽसतोअविद्यमानाआवृत्तिर्यस्यतदुदयंयस्यतदअतएवातिशयेनोदयत्प्रवत्उदयत्तमःततःकर्मधारयोवा । अन्यत्ररात्रौतमस्तिष्ठतिदिवाव्यावर्ततेअत्रतुरात्रिंदिवमसतीअविद्यमानाआवृत्तिःप्रतिबन्धकंसूर्योदियस्याऽतएवोदयत्तमन्धतिवा । सूर्योदेरिन्द्रनीलदीप्तिप्रतिबन्धकत्वाद्दावादतिनिषिद्धमितिवा । उपधिर्व्याजचक्रयोरितिविश्वः । मणीतिकृदिकारादितिङीप् । भास्वतइतिभीत्रेत्यपादानत्वम् । शरणार्थंवसुधीलदर्थेतिसमासः । पक्षेकर्मधारय् ॥ ७५ ॥

सितदीप्रमणिप्रकल्पिते यदगारेहसदङ्करोदसि ।
निखिलान्निशि पूर्णिमातिथीनुपतस्थेतिथिरेकिकातिथिः ॥ ७६ ॥

सितेति ॥ यदगारेयस्यानगर्याअगारेगृहेषुजातावेकवचनंनिशिरात्रौ एकिकाएकाकिनीपूर्णिमातिथिर्निखिलान् प्रतिपदादीन्अतिथियोंचकोभूत्वाऽऽसन्नुपतस्थेप्रापअागन्तुकरूपेणसङ्कृतेत्यर्थः।किंभूतेसिताःस्फाटिकादीप्रादीप्तिमन्तोयेसच्चोरत्नानितैःप्रकल्पितेनिर्मितेतथाहसतीप्रकाशमानेअङ्केसमीपेरोदसीद्यावापृथिव्यौयस्यतद्दसदङ्करोदस्तस्मिन्यद्वाह

उन्नद्धौमध्योयपोरेवंविधेरोदसीद्यावा भूमीयेनसर्वोऽस्मिपरान्निपुसितमपि निर्मितगृहप्रभापटलेनद्यावाभूम्योरन्तरालस्य प्रकाशमानत्वादन्धकाराभा वात्पूर्णिमैवजातेतिरात्रिर्भवतीतिभावः। सिध्मयोर्द्वयोरित्यमरः। द्यौ प्रेतिनलिङ्गम्पीतिरः। उपलस्ये उपाद्देवपूजेत्यादिनासङ्गतकरणेतङ्। एकैवैकिका एकाद्यकिनिश्चेसिस्वार्थेकः॥ ७६॥

सुदतीजनमज्जनार्पितैर्घुसृणैर्यत्र कषायिताश्च या। ननिशाखिलयाऽपिनामिका प्रससादग्रहि लेवमानिनी॥ ७७॥

सुदतीति। यत्रवापिकाजलक्रीडाद्दीर्घिकारिवलयापिसकलयापिनिशया न्यापि प्रससादमस्वच्छाभूत् किंभूतासुदतीजनानांसुन्दरीसमूहानांमज्जने नजलक्रीडयाऽर्पितैर्विलीनैर्घुसृणैःकुङ्कुमाङ्गरागैःकाषायितःकलुषितआ शयोजलंयस्याःकेव यहिलाग्रहवतीमानिनीवसुन्दरीत्यनेनकुङ्कुमाङ्ग रागबाहुल्यंसूच्यते। मानिन्यपिसपत्नीजने नितलितंप्रियङ्कुङ्कुमाङ्गरागं दृष्ट्वाप्रियेणनमस्कारादिनाप्रसादितापिसकलयारात्र्यानप्रसीदतितापिघु सृणैःकलुषितातयाआशयाशमनंशयःस्वप्नःसनविद्यतेयस्याइतिवासुदती जनेमज्जनमाचन्निरितिवा। शोभनादन्तायस्याःसाअग्रान्तशुद्धेतिवकार स्यानुक्तसमुच्चयार्थत्वान्नित्यंस्त्रीसंज्ञत्वाश्रियांसंज्ञायामितिवादन्तादेशः। निशापदृन्निशिनिशायामिश। ग्रहोनुग्रहनिर्बन्धावितिविश्वः। यद्दग्राकोनि वंश्चवाचकःप्रकृतेतुमानमित्यन्यः। तुदादेराकृतिगणत्वात्रवकादिलच्॥ ७७॥

क्षणनीरवयायया निशिश्रितवप्रावलियोगपट्ट या। मणिवेश्ममयंसमानिर्मलं किमपिज्योतिर बाह्यमीक्ष्यते॥ ७८॥

क्षणेति॥ यथाक्षणपर्योनिशिमर्द्धरात्रेक्षणनीरवयाक्षणमात्रंनिःशब्दयाम णिवेश्ममयंरत्नगृहरूपंनिर्मलसुज्ज्वलसमवाद्यं प्राकारमध्यंस्थितंकिमपिव स्तुमप्राकंज्योतिस्तेजईक्ष्यतेस्मकिंभूतयाश्रितोवप्रावलिरेवप्राकारपङ्क्ति रेवयोगपट्टंययानगरीगृहवाहुल्यंसूचितम्। अन्ययापियोगिन्याक्षणमौनि न्याश्रितयोगपट्टयाधमिनंसमविद्यादिदोषरहितं किमपिबाह्यमनसो

रविषयमुञ्चवाह्यमान्यन्तरमात्मलक्षणंज्योतीरात्रौदृश्यतेविषयीक्रियतेव त्यर्थः यजेःप्राप्तिरप्यर्थः । स्नकेनपरमात्मसाक्षात्कारक्रुपेणयत्नीरंसात्त्विक भावजनितमश्रुजलंतत्प्राप्तिप्राप्नोतिसादृश्यावा आहंतत्वात्कः । तदुक्तंगी तायांयानिशासर्वभूतानामिति ॥ ७८ ॥

विललासजलाशयोदरे क्वचनद्यौरनुबिम्बितेव या । परिखाकपटस्फुटस्फुरत्प्रतिबिम्बानवल म्बिताम्बुनि ॥ ७९ ॥

विललासेति ॥ यानगरीक्वचनकस्मिंश्चिज्जलाशयोदरेजलाधरामध्येऽ नुबिम्बिताप्रतिबिम्बिताद्यौरिवस्वर्गइवविललासशुशुभेसच्चएवप्रतिबि म्बितेत्यत्रहेतुमाह ॥ परिखेति । प्राकारपरितो जलसहितोगर्तःपरि खातस्याःकपटंव्याजस्तेनस्फुटंप्रव्यक्तंस्फुरताप्रतिबिम्बेनानवलम्बितम संपृक्तमम्बुयस्याःयत्रवा । महतिजलाशयेनगरिरूपाल्पपरिमाणाद्यौःप्रति बिम्बिताप्रतिबिम्बस्यानेवोदकंनदृश्यतेपरितस्तुदृश्यते । सच्चएवप्रति बिम्बितत्वात्परितोयदुदकंसैवपरिखेतिभावः । नगर्याःस्वर्गसाम्यम् ॥७९॥

व्रजतांदिवियद्गृहावलीचलचेलाञ्चलदण्डताडनाः । व्यतरन्नरुणायविभ्रमं सृजतेहेलिहयालिकालनाम् ॥ ८० ॥

व्रजतइति । यद्गृहावलीर्यस्याःप्रासादपङ्क्तिस्तस्याश्चलचेलाःपताका वस्त्रप्रान्तास्तएवदण्डाःप्रोदास्तैस्ताडनाःदृष्टानिकर्त्र्यःदिविगगनेव्रजतां हेलिःसूर्यस्तस्यहयाःअश्वास्तेषामालिःपङ्क्तिस्तस्याःकालनांप्रेरणांसृजते कुर्वतेअरुणायसूर्यसारथयेविभ्रमंविश्रान्तिंव्यतरन्ददुः । पताकावस्त्राञ्च ल्यदर्शनेनाऽरुणप्रतोदताडनवुध्यासूर्याश्वश्रेणिस्त्वरिताग‌च्छति अतएवा रुणस्यविश्रान्तिगृहाणामुच्चत्वंपताकायुक्तत्वंच । हेलिराश्लिङ्गनेरवावितिं यादवः ॥ ८० ॥

क्षितिगर्भधराम्बरालयैस्तलमध्योपरिपूरिणांपृ थक् । जगतांखलुयाखिलाद्भुता ऽजनिसारैर्निजचिह्नधारिभिः ॥ ८१ ॥

क्षितीति ॥ यामनगरीजगतांसारैःश्रेष्ठैरंशैरिवप्रजनिनिरमायि । किल इवार्थः । किंभूतैःसारैःक्षितिगर्भःपातालंधरापृथ्वीअम्बरमाकाशमेतच्च त्रयमालयआश्रयोयेषांतैःकिंभुतानामन्तलंअधःप्रदेशंमध्यंधरारूपमुपरिआ काशरूपंपूरयन्तिव्याप्नुवन्तिपतत्संज्ञकानामित्यर्थः । पुनःकिंभूतैर्हेतुगर्भ विशेषणंपृथक्निजंस्वकीयंचिह्नंलक्षणंतद्धारिभिःपातालस्यनिम्नादिचिह्नं तत्तलगृहे धान्यादिभूमेश्चिह्नं तन्मध्यगृहेषु अक्षयंनृदमवनितादिस्वर्गचि ह्नंतदूर्ध्वगृहेषुविद्यतेइत्यर्थः। त्रिभूमिकगृहयुक्तेत्यर्थः। याताश्रयसारैर्नि तत्वादेवाखिलासकलाव्यक्ता एकैवत्रैलोक्यरूपत्वादाश्चर्यकारिणीतिभा वः । एकस्मिन्नपिलोकेवर्तमानस्त्वेपिलोकान्तरवस्तुदर्शनादिस्मिन्यइति भा । अधस्वरूपययोरस्त्रीतलमित्यमरः । धराचाम्बरंचेतिसमाहारंकृत्वापू र्वपदेनसमासः ॥ ८१ ॥

दधदम्बुदनीलकण्ठतां वहदत्यच्छसुधोज्ज्वलंव पु । कथमृच्छतुनामयत्रनाक्षितिभृन्मन्दिरमिन्दु मौलिताम् ॥ ८२ ॥

दधदिति । यत्रनगर्यांक्षितिभृन्मन्दिरंराजगृहमिन्दुमौलितांचन्द्रयुक्ता ग्रतांचन्द्रशेखरत्वंचकथंनामनऋच्छतुप्राप्नोत्वेवसंभवेलोट्। किंभूतमम्बु दैर्मेघैर्नील श्यामःकण्ठःकण्ठस्थानीयप्रदेशोयस्यतस्यभावस्तत्तांदधत्त था ऽत्यच्छयातिनिर्मलयासुधयालेपेनउज्ज्वलंवपुःस्वरूपंवहद्विभ्रदिन्दु मौलौयस्यतत्सद्दृष्टेवम्नीलकण्ठतामतिनिर्मलसुधावद्गौरंधारयतिक ण्ठादेवमेघाअग्रभागेचन्द्रश्चेत्युन्नत्वंराजगृहस्यसूच्यते। सुधालेपोऽमृतंस्नु हीत्यमरः ॥ ८२ ॥

बहुरूपकशालभञ्जिका मुखचन्द्रेषु कलङ्करङ्क वः । यदनेककसौधकंधराहारिभिः कुक्षिगतीकृ ताइव ॥ ८३ ॥

बह्विति । बहुरूपकंसौन्दर्यमाकतिर्वायासामेवंविधाःशालभञ्जिकादन्ता दिरचिताःस्तम्भादिषुनिर्मिताः पुत्रिकास्तासांमुखान्येवचन्द्रास्तेषुकलङ्कर ङ्कवःसंभाविलाञ्छनमृगायस्यानगर्याअनेकानांबहुसंख्यकानांसौधानांमा

सादानां कन्धरासु गतैः कत्रिमैर्हरिभिः सिंहैः कुक्षिगतीकृताश्चन्द्रशिलाः वलत्यन्ते कुक्षीगतास्तादृशाः कृताः चन्द्रेषु लाञ्छनं मृगैर्भाव्यं तेतु तत्र न विद्यन्ते तर्हि कन्धरागतैः सिंहैर्भक्षिता इवेति लक्ष्यते। निष्कलङ्कानितासां मुखानीत्यर्थः। बहुरूपकेतिशेषादिति कप्। पुंवद्भावादाप्निवृत्तौ प्रत्यय स्यादितीत्वनिवृत्तिः ॥ ८३ ॥

बलिवेश्मदिवं सतथ्यवागुपरि स्माह दिवोपि नारदः। अधराधकृतायवैवसा विपरीताऽजनि भूविभूषया ॥ ८४ ॥

बलीति। तथ्यवाक् सत्यवक्ता स नारदो बलि सद्म पातालं तल्लक्षणां दिवं स्वर्गं दिवोपि स्वर्गादपि उपरि अतिरमणीयाम् आह स्म वदति स्म। स्वर्गाद् प्यतिरमणीयानि पातालानीति विष्णुपुराणे नारदवचनम्। अथ च यद्बलि वेश्म ऊर्ध्वभागे पातालमिति प्रसिद्धेरभावात् कथं तस्य सत्यत्वम् इत्याशङ्कांश्लेषच्छलेन समर्थयते। अथ पश्चाद् भूविभूषया पृथ्व्यलङ्कारभूतया यया नगर्या अधराधीना कृते व वर्जिते वेत्यर्थः। अथ च अधोदेशे कृते व सा बलिसद्म द्यौः वि परीता अन्यादृशी अजनि जाता। अधोभागे अभूवेत्यर्थः। पूर्वं भूर्लोकाद्यौरूर्ध्वम् अभूदिदानीं तान्यां अधोभागे जातेति वैपरीत्यम्। अथ च अनया जितत्वादेव पातालस्याप्यधरत्वं न त्वधोभागे स्थितत्वादित्युभयत्रापि नारदस्य सत्यता क्षम्। स्वर्गात् पातालं रमणीयं तदप्यनया जितमिति स्वर्गपातालाभ्यामियम् तिरमणीयेति श्लोकतात्पर्यं ॥ ८४ ॥

प्रतिहट्टपथे घरट्टजात् पथिकाह्वानदसक्तुसौरभैः। कलहान्न घनान्यदुत्थिता दधुनाप्युज्झति घर्घरस्वरः ॥ ८५ ॥

प्रतीति। प्रतिहट्टपथे सर्वेष्वपि विपणिमार्गेषु पथिकाः पान्थास्तेषामाह्वानमाकारणं तद्ददतीति आह्वानदास्तेषां सक्तूनां सौरभाणि सौगन्ध्यानि तैः कृत्वा उपलक्षिताद् घरट्टाद्गोधूमादि पेषणपाषाणो घरट्टस्तस्माज्जातादुत्थिताद्या या नगर्यां उत्थितात् कलहाज्जातो यो घर्घरस्वरः पुरुषशब्दोऽधुनाऽद्यापि घनाम्मेघान्नोज्झति न त्यजति यत् च्छाद्यो ऽर्थाद्गृस्यः। सक्तूनामामोदमाघ्रा

य पान्थान्भोजनार्थंतत्रत्यान्सत्कुत्य कुंभयन्कुर्वंति। मेघाश्चतान्गृहंप्रतिप्र स्थुकयन्तीतिसक्कुमिलितमेघघरट्टयोःकलहः । मेघाःपीडयन्तिसक्तुप रिमलेघेरट्टाश्चोत्थयन्तितेनमेघानांघरट्टानांचनित्यंकलहः । तेनघर्घरस्व रोद्याऽपिमेघान्नमुञ्चतीतिवा। घराट्टाःपान्थाह्वानन्ददतिमेघाश्चवाञ्छितं प्र वहयन्तीतिभावः। योऽसिरोधारकलहंकरोतिघर्घरस्वरकत्वकातिसर्वोपका रित्वंनगर्यांद्योत्यते । इहपर्येकलहोभवति । स्नगादिनासमासान्तः । तृतीयासमस्योरित्यनुभावः । घर्घरःपृथक् ॥ ८५ ॥

वरणःकनकस्यमानिनीं दिवमङ्कादमराद्रिराग ताम् । घनरत्नकपाटपक्षतिः परिरभ्यानुनयन्नु वासयाम् ॥ ८६ ॥

वरणइति । कनकस्यसुवर्णस्यवरणःप्राकारएवामराद्रिःसुमेरुर्मानिनीं कोपमानमतएवाङ्कात्स्वोत्सङ्गात्स्वर्गादागतांभुवंप्राप्तायांनगरीमेवदिवंपरि रभ्यालिङ्ग्यानुनयन्प्रसादयन्नुवास । मेरुःकथंतत्रागतइत्यतआह । घ नरत्नेनिबिडेवारत्नकपाटेतेएवपक्षतीपक्षौयस्य । सपक्षत्वात्तस्यतत्रागम नम् । उवासेत्यनेनतद्दिव्यायात्रैवस्थितोननुतांगृहीत्वास्वगृहंनेतुमशक त् । अभिमानिनीत्वाद्वाद्यापिनानुनेतुमशक्यते । स्वर्णप्राकारोमेरुतुल्यः । नगरीस्वर्गतुल्यारत्नकपाटेहेमाद्रिपक्षतुल्येअन्योपिमानिनीमन्यत्रगतामा लिङ्ग्यानुनयन्तदनुरोधात्तत्रैववसति । प्राकारोवरणःशालइत्यमरः । अनुनयन्निवासेतिवापाठः ॥ ८६ ॥

अनलैः परिवेषमेत्यया ज्वलदर्कोपलवप्रजन्म भिः । उदयंलयमन्तरारवे रवहद्बाणपुरीपरा र्ध्यताम् ॥ ८७ ॥

अनलैरिति । यानगरीज्वलद्भिर्दैदीप्यमानैरर्कोपलैःसूर्यकान्तैर्निर्मि तेभ्योवप्रेभ्योजन्मयेषांतैरनलैरग्निभिःपरिवेषमप्राप्यरवेःसूर्यस्यउद यंलयमस्तंचअन्तराउदयमारभ्याऽस्तपर्यन्तंबाणपुरीवपरार्ध्यतामनगण्य तांश्रेष्ठतांअवहत्दधार॥पुर्याःपरार्ध्यतांवा। बाणपुर्येपिरुद्रप्रसादादनला वरुद्धेतिप्रसिद्धिः । सूर्यकिरणसंबन्धात्सूर्यकान्तेभ्योग्निरुत्पद्यते अनेक प्राकारेतिभावः । उदयंलयंअन्तरान्तरेणेतिद्वितीया ॥ ८७ ॥

बहुकम्बुमणिर्वराटिकागणनाटत्करकर्कटोत्करः हिमवालुकयाच्छवालुकः पटु दध्वान यदापणार्णवः ॥ ८८ ॥

बह्विति । यस्याआपणोहट्टएवार्णवःपटुसातिशयंदध्वानगर्जितवान् । किंभूतःबहवःकम्बवःशङ्खामणयोमौक्तिकादयोयत्रसमुद्रोप्येवंतथावराटिकागणनायांकपर्दकगणनार्थंनटन्तोभ्रमन्तःकराहस्ताएवकर्कटोत्कराः कुलीरसमूहायत्रसमुद्रेऽपिकुलीराःसन्तितस्यामेऽत्रवराटिकागणनात्त्वरहस्तास्तयाहिमवालुकयाकर्पूरेणाच्छवालुकोनिर्मलसिकतःसमुद्रेऽपिसिकतास्तिष्ठन्तितस्यामेऽत्रकर्पूरः । सिकतासाम्येनात्रकर्पूरबाहुल्यंतत्रदेशेबाहुल्येनकपर्दैरेवव्यवहारः । पटुशब्देनजनसंमर्दःसूच्यते ॥ ८८ ॥

यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥

यदिति । अभ्रगङ्गयाआकाशगङ्गयाप्रतिचन्द्रोदयंचन्द्रोदयेचन्द्रोदयेपतिव्रतौचितीपातिव्रत्यौचित्यंनमुमुचेनत्यक्तंकिंभूतयायदगारघटानांयस्यागृहसमूहानांअट्टाउपरिगृहास्तेषुकुट्टिमाबद्धभूमयस्तासुस्रवन्तोयेइन्दूपलाश्चन्द्रकान्तास्तैस्तुन्दिलाबहुतराआपोजलानियस्यास्तया । चन्द्रोदयेसमुद्रोदकवृद्धिर्भवतिगङ्गापत्नीचन्द्रकान्तगलदुदकसंपर्कोद्वर्धितेतिपातिव्रत्यौचित्यम् । आर्तार्तेमुदितेहृष्टाप्रोषितेमलिनाकृशेत्यादिपतिव्रतालक्षणम् । अनेनाकाशगङ्गायाअपिकुट्टिमानामूर्ध्वंभावत्वंसूच्यते । तुन्दिलाःस्वयंतुन्दादिभ्यइलच् । लक्षणयापुष्टत्वम् । तुन्दिलापयेति ऋगादिना समासान्तः । प्रतिर्वीप्सायाम् ॥ ८९ ॥

रुचयोस्तमितस्यभास्वतः स्खलितायत्र निरालयाःखलु । अनुशायमभुर्विलेपनाऽऽपणकाश्मीरजपण्यवीथयः ॥ १० ॥

रुचयइति । यत्रनगर्यामनुशायंप्रतिसन्ध्याकालंविलेपनापणेषुसुगन्धद्रव्यहट्टेकाश्मीरजकेसरंतल्लक्षणंपण्यंविक्रेयंतस्यवीथयोमार्गाअस्तमितस्यास्तंगतस्यभास्वतोरवेःस्खलिताश्च्युताःनिरालयानिराश्रयारुचयइवअभु

भोग्तिसकिलपथार्थः । भावेलुङ् । अनुवीप्सायाम् । सायकालेतासांर त्वादिस्वर्थः । विक्रेयंपण्यं । अवद्यपण्येतिसाधु । पद्रूक्तिर्वीपीपद स्यपि ॥ ९० ॥

विततं वणिजापणेऽखिलं पणितुं यत्र जनेन वीक्ष्य ते । मुनिनेव मृकण्डसूनुना जगतीवस्तु पुरोदरे हरेः ॥ ९१ ॥

विततमिति । यत्रनगर्यांजनेनलोकेनवणिजांआपणीविनाआपणोहट्टे पणितुंविक्रेतुंविततंविस्तारितमखिलंजगतीवस्तुवीक्ष्यतेऽवलोक्यते । एतेन कस्यापिवणिजोहट्टेसर्ववस्तुविद्यतइतिभावः । केनकस्मिन्किमिवमृकण्डु सूनुनामार्कण्डेयेनमुनिनापुरापूर्वंहरेर्विष्णोरुदरेजठरेजगतीपृथ्वीलोकेषुजा तंवस्तिववीक्ष्यतेस्मेत्यर्थः । पणितुंप्रार्थधातुकेविकल्पादायाभावः । वी क्ष्यतेभूतेपुरायोगेपुरिलुङ्चास्मेतिलट् । उकारान्तादिवापत्यार्थेशुभ्रा दित्वाड्ढकित्वाद्वृद्धौढेलोपोऽकद्रूपान्त्यकारलोपेचमार्कण्डेयः ॥ ९१ ॥

समये गमदैर्यदापणे तुलयन्सौरभलोभनिश्चलम् । पणितानजनारवैरपि गुञ्जन्तमलिंमलीम सम् ॥ ९२ ॥

समिति । यस्यानगर्याआपणेपणिलाविक्रेतानलीनवंद्यामलंगुञ्ज न्तमपियज्ञापनानमपिभ्रमरंजनारवैर्लोककोलाहलैर्नावेत्नाज्ञासी त् । किंकुर्वन्नेणमदैःकस्तूरिकाभिःसमंसहतुलयन् । किंभूतमलिंसौरभ लोभेनसौरभाभिलाषेण निश्चलेकस्तूरिकायाउपरिस्थितंमलिनत्वात्समान वर्णत्वाच्चकस्तूरिकायाः सकाशाद्भिन्नत्वेनयद्यपिज्ञातुंनशक्यतेतथापिगु ञ्जनाद्भ्रमरोऽपिनज्ञेयः । जनशब्देषुगुञ्जनस्याश्रुतत्वादितिभावः । अवे दितिइणोलङ्गिरूपम् । तुलयन्निति तुलउन्मानेइतिशयन्ताच्छता । संज्ञा पूर्वकविधित्वाल्लघूपधगुणाभावः ॥ मलीमसंज्योत्स्नातमिस्रेतिसाधु ॥ ९२ ॥

रविकान्तमयेनसेतुना सकलाहज्वलनाहितोष्म णा । शिशिरेनिशिगच्छतां पुराचरणौयत्रजनो -तिनोद्धिमम् ॥ ९३ ॥

दात्तादिभेदं स्वर्गसाम्यं कथं न प्राप्नोतु यद्वा स्थितयो वर्णानामष्टौ स्थानानि ताभिः शालिनः समस्ता वर्णा अक्षराणि यस्यां । ब्राह्मणाः सलक्षणं वेदं यत्र पठन्ती त्यर्थः । अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु चेति शिक्षायाम् । अथ च स्वः स्वर्गो ऽस्य भेदं स्वर्गसाम्यं कथं न प्राप्नोतु । स्वर्गे अनल्पसुखस्य च तु सुखस्य च लक्षणमारयः शब्दो विद्यते तस्मात्स्वर्गेण सहैकत्वं युज्यते । यावत्सुसारवासा स्वरभेदं कथं कथमुपैतु अपि तु न । लोकवाहुल्यात्स्त्रीपुंसादिस्वरभेदो नोपलभ्यत इत्यर्थः । वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे । आलेख्याश्चर्ययोश्चित्रमित्यमरः ॥ ९८ ॥

स्वरुचारुणया पताकया दिनमर्केण समीयुषोत्
षः । लिलिहुर्बहुधा सुधाकरं निशि माणिक्यमया
यदालयाः ॥ ९९ ॥

स्वरुचेति । माणिक्यसंबन्धैरतिविशेषैर्निर्मिता यदालया यस्याः पुरः स्वरुचा गृहकान्त्या अरुणया रक्तया पताकया कृत्वा निशि रात्रौ सुधाकरममृतनिधिं चन्द्रं बहुधा ऽनेकप्रकारं लिलिहुरस्पृशन् । पताकाया जिह्वात्वं सूच्यते । सापि आरक्ता भवति । किंभूता दिनं समस्तदिवसं तं समीयुषा सङ्गतेनार्केण सूर्येण कृत्वा ऽतितृषः संकष्टा बहुतरातप्ततावातृट्पिपासा येषां ते ऽन्योपि सूर्येतप्तो रात्रौ जिह्वया शीतलं मधुरं च वस्तु लेढि अस्पृशदिति भावः । दिनमत्यन्तसंयोगे द्वितीया ॥ उपेयिवानित्यत्र उपेत्यस्यातंत्रत्वाद् नुपसर्गस्य चान्योपसर्गस्य च भवतीत्युक्तत्वात्समीयुषेति साधुः । बहुधेति बहुगुणेति संख्यात्वात्संख्याया विधार्थे धेति धाप्रत्ययः । लिहेः स्वरितत्वात्कर्त्रभिप्राये क्रियाफले परस्मैपदम् ॥ ९९ ॥

लिलिहुः स्वरुचा पताकया निशि जिह्वानिभया सु
धाकरम् । स्थितमर्ककरैः पिपासु यन्नृपसद्मामलपद्मरागजम् ॥ १०० ॥

लिलिहुरिति । पूर्वोक्त एवार्थो जिह्वापदप्रक्षेपेणावर्णितः लिहेः स्वरितत्वात्कर्त्रभिप्राये क्रियाफले तङ् । स्थितमिति पाठः । अर्ककरैः स्थितं सामीप्यादभिप्रायम् । स्थितमित्यपि क्वचित् । अर्ककरैः पिपासु स्थितमर्ककरैस्तप्तमित्यर्थः ॥ १०० ॥

अमृतद्युतिलक्ष्मपीतया मिलितं यद्वलभीपताकया। वलयायितशेषशायिनः सखितामादित पीतवाससः ॥ १०१ ॥

अमृतेति । पीतया गौर्या यस्या नगर्या वलभीपताकया वलभीसंज्ञकगृहविशेषवैजयन्त्या मिलितं संबद्धं अमृतद्युतेश्चन्द्रस्य लक्ष्म लाञ्छनं कर्तृ वलयायितो मण्डलीभूतः शेषो यस्मिन् शेते एवं शीलस्य पीतवाससो विष्णोः सखितां सख्यमादित प्राप तत्सदृशं बभूवेत्यर्थः । कलङ्कस्य नीलत्वेनाननस्य चन्द्रस्य शेषसाम्यं कलङ्कस्य श्रीकृष्णसाम्यम् । पीतपताकायाः पीतवस्त्रसाम्यं अत्युच्चत्वं च युज्यते ॥ १०१ ॥

अश्रान्तश्रुतिपाठपूतरसनाऽऽविर्भूतभूरिस्तवा जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना । पूर्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि १०२

अश्रान्तेति । यस्याः प्रासादानां देवगृहराजगृहाणां दुकूलवल्लिर्वैजयन्तीरूपा श्वेतदुकूलवल्लिरनिलान्दोलैर्वायुकर्तृकचालनैर्दिवि आकाशे मन्दाकिनी नु स्वर्गङ्गेवाखेलत् चिक्रीड । नुरिवार्थे वितर्के वा । किंभूता मन्दाकिनी । गाधिसुतेन विश्वामित्रेण पूर्वं सामिघटिता । अर्द्धनिर्मिता । पश्चाद्धस्तस्तु स्पामुक्तात्यक्ता । किंभूतेन अश्रान्तश्रुतिपाठेन निरन्तरवेदपाठेन पूताभ्यः पवित्राभ्यो रसनाभ्यो जिह्वाभ्य आविर्भूतेषु प्रकटीभूतेषु भूरिषु बहुषु स्तवेषु स्तुतिषु अजिह्माः अमलाः ब्रह्ममुखौघा ब्रह्मणो मुखानि तैर्विघ्निता विघ्नवतीकृता नवा नूतना स्वर्गक्रियाकेलिः स्वर्गनिर्मितिक्रीडा यस्य तेन । पूर्वं धर्षितां सृष्टिं ब्रह्मादिभिरर्थितो विश्वामित्रोऽमुञ्चदिति पुराणादौ । लतावायुना चञ्चलीक्रियते । सामित्यर्द्धे जुगुप्सित इत्यमरः । सामिघटिते त्यत्र सामीति समासः ॥ १०२ ॥

यदतिविमलनीलवेश्मरश्मिभ्रमरितभाः शुचिसौधवस्त्रवल्लिः । अलभत शमनस्वसुः शिशुत्वं दिवसकराङ्कतले चलालुठन्ती ॥१०३॥

यदिति। यस्यानगर्याअतिविमलानिनीलरत्ननिर्मितवेश्मानिगृहाणितेषां रश्मिभिःकिरणैर्नेत्तूत्ममरीचात्ममरीकत्नातैः कृत्वाञ्जमरयद्याचरितावा मादीप्रियंस्याःसाएवंविधाशुचिसौधवस्त्रवल्लिर्वेवलगृहानरयताकापत्ति र्दिवसकरस्यसूर्यस्याङ्कतलेसमीपाधोभागेउत्सङ्कतलेच । चलाचञ्चला लुठन्तीक्रीडन्तीसतीशमनस्वसुर्यमभगिन्यायमुनायाः शिशुत्वमलभतप्रा प। बालिकायमुनेवशोभतेस्मेत्यर्थः। सापिश्यामापितुःसूर्यस्यसमीपेशिशु त्वाञ्चञ्चलालुठनंकरोति। शिशुत्वंयमुनापत्यत्वमितिकेचित् । उञ्च त्वंसूच्यते ॥ १०३ ॥

स्वप्राणेश्वरनर्महर्म्यकटकातिथ्यग्रहायोत्सुकं पा
थोदंनिजकेलिसौधशिखरादारुह्ययत्कामिनी ।
साक्षादप्सरसोविमानकलितव्योमानएवाभवद्
यत्प्रापनिमेषमप्ततरसायांनीरसादध्वनि १०४

स्वप्राणेति । यत्कामिनीयस्यानगर्याःस्त्रीअत्यन्ततरसानेघवेगेनअध्वनि मार्गेरसान्मेघवेगजनितप्रीतेः प्रियानुरागाद्वायान्तीगच्छन्तीसतीयस्मा न्निमेषंनिमेषोपलक्षितमपिविलम्बंअप्राप्यनेत्रसंकोचनंप्राप । तेनकारणेन सास्त्रीविमानेनकलितंगमिकमीकृतंव्योमगगनंयाभिरेवंविधाः साक्षात्प्र त्यक्षदृश्यमानाअप्सरसएवाभवत् । किंकृत्वानिजंयत्केलिसौधंक्रीडागृहं तस्यशिखरादूर्ध्वात्पाथोदंमेघमारुह्य किंभूतंपाथोदंस्वप्राणेश्वरःस्वप्रियस्त स्यनर्महर्म्यंक्रीडागृहंतस्यकटकेमध्यप्रदेशेआतिथ्यगृहायप्राघुणिकपूजाग्र हणायकटकप्राप्तयइतियावत् । तस्मैउत्सुकमुत्कण्ठितंसहजसौदर्येणवि मानतुल्यमेघाधिरोहेणाकाशगमनेन निमेषाप्राप्तेश्चदेवाङ्गनातुल्याजातेति भावः । कटकशिखरपदाभ्यामपिहर्म्याणामुच्चतरत्वंसूचितम् । अदःका मकस्मिन्नरसादितिवा । प्रसितोत्सुकाभ्यांसप्तमीतृतीयासम्भयोःप्रसङ्गा त् । आतिथ्यगृहएवायःशुभविधिस्तत्रोत्सुकमितिव्याख्येयंवाकामिन्यपे क्षयाशुभकर्मत्वम् । व्योमानइतिअनोबहुव्रीहेरितिनङीप् । स्त्रियांबहुष्व प्सरसइत्यमरः ॥ १०४ ॥

वैदर्भीकेलिशैलेमरकतशिखरादुत्थितैरंशुदर्भैर्ब्र
ह्मांडाघातभग्नैःस्यदजमदतयाह्रीधृता वाङ्मु

त्वैः । कस्यानोत्तानगायादिविसुरसुरभेरास्यदे
शंगताऽग्रे यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमु
ज्जृम्भतेस्म ॥ १०५ ॥

वैदर्भीति । यस्यान्नगर्यांगोग्रासस्यप्रदानलक्षणंव्रतंतस्यसुकृतंपुण्यंनील
त्वात् ।अंशुभिरेवदर्भैरविश्रान्तमनवरतमुज्जृंभतेस्म।किंभूतैर्वैदर्भीकेलिशैले
भैमीक्रीडापर्वते मरकताख्यरत्नविशेषनिर्मितशिखरादुच्छ्रितैरूर्ध्वगामिभि
स्तथाभ्रह्मावहसंघट्टनेनभग्नः स्यद्जोवेगजोमदोगर्वोयेषां तद्भावस्तत्तात
याह्रियालज्जयेवधृतंकृतमवाङ्मुखत्वंव्यावर्त्तनयैः । अतएवदिविस्वर्गेऽनु
त्तानगायाउत्तानगामिन्याःकस्याःसुरसुरभेर्देवगव्याऽऽस्यदेशंमुखप्रदेशम
गताग्रैःमप्राप्ताग्रैःसर्वस्याअपिमुखंप्राप्ताग्रैरनेकमरकतरत्ननिर्मितोभैमीक्री
डाशैलस्तत्रस्थिताःकिरणायावद्बह्मावगंतास्ततउपरिगमनाभावान्निवृ
त्ता देवगवीमानुत्तानगामित्वात्तन्मुखपतितादर्भैं स्याजाताइतिभावः।उ
त्तानावैदेवगवावहन्तीतिश्रुतेः।अन्योभग्नगर्वोलज्जयाऽधोमुखोभवति१०५

विधुकरपरिरम्भादात्मनिष्पन्दपूर्णैःशशिदृषदुप
क्लृप्तैरालवालैस्तरूणाम् । विफलितजलसेकप्रक्रि
यागौरवेण व्यरचिसहृतचित्तस्तत्रभैमीवनेन ॥

विधिवति । तत्रनगर्यांभैमीवनेनवहंसोरमणीयत्वाद्दाहृतचित्तआकृष्ट
मनाःव्यरचिविरचितः । किंभूतैनतरूणामालवालैर्जलाधारैःकर्तृभिर्विफ
लितंव्यर्थीकृतजलसेकप्रक्रियागौरवंजलसेचनप्रकारभारोयस्य । किंभूतैः
शशीदृषद्भिःचन्द्रकान्तैरुपक्लृप्तानिनिर्मितानितैः । पुनःकिंभूतैर्विधुकर
परिरम्भाच्चन्द्रकिरणसंपर्कादात्मनःस्वस्यनिष्यन्देननिर्भरोदकेनपूर्णैर्वा
णामालवालपूर्णंप्रयासश्चन्द्रकान्तनिर्मितत्वात्तैरेवक्रियतइतिभावः । नि
ष्यन्दइतिअनुविपर्यभिनिभ्यइतिषत्वम् ॥ १०६ ॥

अथकनकपतत्रस्तत्रतांराजपुत्रीं सदसिसदृशभा
सांविस्फुरन्तींसखीनाम् । उडुपरिषदिमध्यस्था
ऽपि शीतांशुलेखाऽनुकरणपटुलक्ष्मीमाक्षिलक्ष्मीच
कार ॥ १०७ ॥

अथेति।अथानन्तरंकनकपतत्रःसुवर्णपक्षोहंसस्तत्रवनेतांराजपुत्रींभैमी मलक्षीचकार । नेत्रगोचरीचकारकिंभूतांसदृशभासांसमानकान्तीनां सखीनांसदसिसभायांविस्फुरन्तींविशेषेणदीप्यमानांतथोडुपरीषदिनक्षत्र सभायांसख्यस्यापिशीतांशुलेखाचन्द्रलेखातस्याअनुकरणेअनुकारेपटुः स मर्थालक्ष्मीःशोभायस्यास्तां । सदृशदीप्तित्वेपिनक्षत्रापेक्षयाचन्द्रलेखाय थाधिकातथासख्यपेक्षयाचेति । भैमीसखीनांतत्सादृश्यकथनमन्यसुन्द रीभ्योविशिष्टसौन्दर्यप्रतिपादनार्थं । भूतोग्रराजभोजकुलमेरुभ्योदुहितुः पुत्रइतिराजशब्दात्परस्यदुहितृशब्दस्यपुत्रादेशेटित्वान्ङीपिराजपुत्री ति । केचित्तुशार्ङ्गरवादिषुपुत्रशब्दंपठन्तितेनपुरुहूतपुत्रीत्यादिसिद्धम् । विस्फुरन्तीस्फुरतिस्फुलत्योरितिषत्वम् । लक्ष्मीशब्दमासान्तविधेरनित्य त्वात्कबभावः ॥ १०७ ॥

भ्रमणरयविकीर्णस्वर्णभासा खगेनक्वचनपतनयो
ग्यंदेशमन्विष्यताधः । मुखविधुमदसीयंसेवितुं
लम्बमानः शशिपरिधिरिवोर्ध्वंमण्डलस्तेनतेने ॥

भ्रमणेति । तेनखगेनहंसेनऊर्ध्वमूर्ध्वप्रदेशेशशीपरिधिरिवचन्द्रपरिवेष इवमण्डलस्तेनेभ्रमणमकृतेत्यर्थः । अयतरलःपक्षिणोमण्डलगतिःक्रिया स्वभावः।किंभूतेनभ्रमणरयेणपरिभ्रमणवेगेनविकीर्णाप्रसारितासुवर्णभाः सुवर्णदीप्तिर्येन । तथाक्वचनअधःकस्मिन्नप्यधःप्रदेशेपतनयोग्यमवतर णयोग्यंदेशंस्थानमन्विष्यतापर्यालोचयता । किंभूतःशशिपरिधिरदसीयं अमुष्याभैम्याअयन्तुमुखचन्द्रंसेवितुंपरिचुम्बितुंलम्बमानोऽधः प्रदेशमा गतः । अदसीयंत्यदादित्वाद्वृद्धाच्छः । मस्याऽढेतद्धितइतिपुंवद्भावः । वि म्बोऽस्त्रीमण्डलंत्रिष्वित्यमरः ॥ १०८ ॥

अनुभवतिशचीत्थं साघृताचीमुखाभिर्नसहसह
चरीभिर्नन्दनानन्दमुच्चैः ॥ इतिमतिरुदयासीत्प
क्षिणः प्रेक्ष्यभैमींविपिनभुविसखीभिःसार्द्धमाबद्ध
केलिं ॥ १०९ ॥

अन्विति । विपिनभुविउपवनप्रदेशेसखीभिःसार्द्धंसहआबद्धकेलिंकृत

क्रीडांभैमी प्रेत्यदृष्ट्वापवियोगोहंसस्यइतिमतिर्बुद्धिरुदयासीत् तत्पत्रावभू वइतिकिंत्वाप्रसिद्धाशचीन्द्राणी घृताचीमुखाभिर्घृताचीप्रभृतिभिः सहच रीभिरप्सरोभिःसखीभिःसहसार्द्धंमुच्चैरतिशयेनइत्थमनेन प्रकारेणभैमीवदि तिचेत्यर्थः ॥ नन्दनानन्दंनन्दनवनेक्रीडांनानुभवति । एतत्क्रीडासुखंश च्याअपिनास्तीत्यर्थः ॥ ततोपीयमधिकेतिभावः । नानुभवति । अपितुसै वेयंकिंनन्दनानन्दमनुभवतीतिवा । भैमीतत्सखीवनानांशचीघृताचीनन्द नैःसाम्यम् । सहचरीपचादौचरडितिपाठाट्टित्वान्ङीप् । प्रेत्येतिभिन्नक र्तृकत्वात्क्त्वानुपपत्तौस्थितस्येत्यध्याहार्यम् । केलिमितिहूस्वःपाठः॥१०९॥

श्रीहर्षंकविराजराजिमुकुटालङ्कारहीरःसुतं श्री
हीरःसुषुवेजितेन्द्रियचयंमामल्लदेवीचयम्॥ द्वैती
यीकतयामितोऽयमगमत्तस्यप्रबन्धेमहाकाव्येचा
रुणिनैषधीयचरितेसर्गोनिसर्गोज्वलः ॥

॥ द्वितीयःसर्गः समाप्तः ॥

श्रीहर्षमिति । पूर्वार्द्धंपूर्ववत् ॥ द्वयोःपूरणोद्वितीयः । द्वितीयएवद्वै तीयीकः ॥ तीयाट्टीकक्स्वार्थेवक्तव्यः द्वैतीयीकस्तस्यभावस्तयामितो गच्छतोनिसर्गोज्वलःस्वभावसुन्दरः । शेषंस्पष्टम् ॥ ११० ॥

इतिश्रीवेदकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणभट्टकृतेनैष धीयप्रकाशेद्वितीयःसर्गःसमाप्तिमगमत् ॥

# नैषधीयेचरितेतृतीयःसर्गः

आकुञ्चिताभ्यामथपक्षतिभ्यां नभोविभागात्त्व
रयाव्यतीर्य । निवेशदेशाततधूतपक्षः पपातभू
मावुपभैमिहंसः ॥ १ ॥

अथभैम्यास्तद्गुणान्हंसमुखेनवर्णयितुंतृतीयसर्गमारभते ॥ आकुंचिताभ्या
मिति ॥ अथोपवनप्राप्त्यनंतरंनलकरणानंतरंवाहंसःआकुंचिताभ्यांकृत
संकोचाभ्यांपक्षतिभ्यांपक्षमूलाभ्यांनभोविभागात्आकाशप्रदेशात्त्वरयावे
गेनअवतीर्यउत्तीर्यउपभैमिभैम्याःसमीपेभूमौपपातउपविशतिस्मकिंभूतःनि
वेशदेशेउपवेशस्थानेआततौविस्तरितौकंपितौचपक्षौयेनसःपक्षिजातिः१

आकस्मिकःपक्षपुटाहतायाः क्षितेस्तदायःस्वन
उच्चचार । द्रागन्यविन्यस्तदृशःसतस्याः संभ्रान्त
मन्तःकरणंचकार ॥ २ ॥

आकस्मिकइति ॥ पक्षपुटेनपक्षद्वयेनाहतायाःक्षितेःसकाशात्आकस्मि
कअचिंतितोपनतःअज्ञानहेतुकःयःस्वनःशब्दःतदापतनसमयेउच्चचारउ
दभूत्अकस्मात्वान्नतत्शब्दःतस्याभैम्याअंतःकरणंद्राक्झटितिसंभ्रांतंसचं
भ्रमंचकारआकस्मिकशब्दश्रवणात्सभयासाश्चर्याचजातेतिभावःकीदृश्याः
अस्याः अन्यत्रिन्यस्तदृशःअन्यत्रस्थलदेशान्प्रदेशांतरेषुविन्यस्तेचालितेदृ
शौययासाकुतोयंशब्दउत्पन्नइतिदृक्सतोविलोकितवतीतिभावः ॥ २ ॥

नेत्राणिवैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहा
णि । प्रापुस्तमेकंनिरुपाख्यरूपं ब्रह्मेवचेतांसि
यतव्रतानाम् ॥ ३ ॥

नेत्राणीति ॥ वैदर्भसुतायाःसखीनांनेत्राणिनिरुपाख्यंवक्तुमशक्यंरूपंसौंद
र्यंयस्यतंएकंकेवलंहंसंप्रापुःसादरंपपुरित्यर्थःकिंभूतानिविमुक्तःत्यक्तःतेषां
तेषांविषयाणांस्रक्चंदननृत्यगीतादीनांग्रहःग्रहणंयैस्तानिकेषांकानिकि

मिवयतव्रतानांयोगिनांचेतांसिब्रह्मेवपरमात्मस्वरूपमिवतान्यपिविमुक्ता तद्विषयाः स्रक्चंदनवनितादयस्तेपुग्रहोंगीकारोयैस्तानि निरुपाख्यरूपमीदृक्तयाप्रतिपादयितुमशक्यरूपंयोगिमनोविषयत्वात्ब्रह्मणः एकमद्वितीयंचवैदर्भःविदर्भाणांराजेतिपूर्ववत् तत्तदितिवीप्सायांद्विर्वचनादेकशेषाभावः ॥ ३ ॥

हंसंतनौसन्निहितंचरन्तं मुनेर्मनोवृत्तिरिवस्विकायाम् । ग्रहीतुकामादरिणाशयेन यत्नादसौ निश्चलतांजगाहे ॥ ४ ॥

हंसमिति ॥ असौभैमीदरिणाभयेनअदरिणानिर्भयेनवाशयेनपाखिना हंसंग्रहीतुकामाधर्तुंकामासतीयत्नात्स्विकायांस्वायांतनौशरीरेनिश्चलतां जगाहेप्राप चित्तेनुचंचलेशमूर्द्धिभूतंसन्निहितंनिकटंसततानलेननिहितं प्रेषितंवाचरंतंगच्छंतंअयत्नपूर्वनिश्चलत्वंबालस्वाङ्गयं धारणानिवेशाङ्गयाभावःकस्वकेवमुनेःमनोवृत्तिरिवयथामुनेःयोगिनःमानसोव्यापारःस्विकायां तनौचरन्तंसद्भिर्नैत्वादिभिर्नितरांहृतंध्यातंसङ्गोवातेऽस्यएवनिहितंइष्टं हंसंपरमात्मानं आदरयुक्तेनाशयेनाभिप्रायेणग्रहीतुकामासतीनिश्चलतां प्राप्नोतिपक्षिधारणजातिःहंसपक्षिविशिष्टोच स्विकेतिमस्यैवेतिवेत्वंग्रहीतुकामाग्रहोलिटीतिइटोदीर्घः तुंकामेतिमलोपःअदरिणेतिअतइमंतस्यमत्स्वभावः ॥ ४ ॥

तामिंगितैरप्यनुमायमायामयं नभैम्याविपदुत्पपात । तत्पाणिमात्मोपरिपातुकंतु मोघंवितेने प्लुतिलाघवेन ॥ ५ ॥

तामिति ॥ अयंहंसःतां त्युत्क्षगमनादिरूपांभैम्यामायांस्वधारणकपटवृत्तिंइंगितैश्चेष्टाभिरनुमायज्ञात्वापिवियदाकाशंमोत्पपात उड्डुनयनविषयं नचकार किंतुआत्मोपरिपातुकं स्वस्योपरिपतनशीलंतस्याःपाणिंभैमीहस्तंम्रदूरंतरप्लवनलघुतयामोघनिष्फलंविततेनेकृतवान्एतार्थइयंविजनप्रदेशेनेतव्येतिबुध्वानोत्पपात उत्पततेधोरणार्थप्रयत्नमकर्त्त्वयगमिष्यतीतिदौत्यसिद्धिःस्यादितिभावःअनुमायनलपीतिमियेपात्रोत्वंपातुकमितिलिपपते

तिशीलेठक्ञ् उपरिपातुकमितिसुहसुपेतिसमासं कृत्वापश्चात्पूर्वेणपष्टीस मासः अन्यथापूरणगुणेतिपष्ठीसमासनिषेधप्रसंगात्पातुकशब्दस्योकप्रत्ययां तत्वेपिउपरिपातुकशब्दस्यतदंतत्वाभावात्नलोकेतिषष्टीनिषेधाभावः ५॥

व्यर्थीकृतंपत्त्ररथेनतेनतथाऽवसायव्यवसायमस्याः । परस्परामर्पितहस्ततालंतत्कालमालीभिरहस्यताऽलम् ॥ ६ ॥

व्यर्थीकृतमिति ॥ आलीभिःसखीभिस्तत्कालंतस्मिन्कालेपरस्परमन्योन्यमर्पितोदत्तःहस्तेषुतालस्तालिकायस्यांक्रियायांयथाभवतितथाअलंअत्यर्थमहस्यतहसितंकिंकृत्वाअस्याः भैम्याव्यवसायंपक्षिधारणोपायंतथासुतिलाघवप्रकारेण तेनपत्त्ररथेनपक्षिणाहंसेन व्यर्थीकृतं निष्फलीकृतंअवसायज्ञात्वापरस्परांकर्मव्यतिहारेसर्वनाम्नोद्वेभवतइतिद्वित्वंवहुलवचनात्समासवद्भावाभावेपूर्वपदस्यप्रथमैकवचनांतत्वम् कस्कादित्वात्सःस्त्रीपुंनपुंसकयोरुत्तरपदस्यवाम्भावोवक्तव्यइत्युत्तरपदस्याम्भावःतत्कालंकालाध्वनोरितिद्वितीया ॥ ६ ॥

उच्चाटनीयःकरतालिकानां दानादिदानीभवतीभिरेषः । याऽन्वेतिमांद्रुह्यतिमह्यमेव सात्रेत्युपालंभितयालिवर्गः ॥ ७ ॥

उच्चेति ॥ तयाभैम्याआलिवर्गःसखीजनइतिअनेनप्रकारेणउपालंभितउपालब्धःइतिकिंइदानींनीमध्येनंधारयंत्यांभवतीभिःएषः हंसःकरतालिकानांहस्ततालानांदानाद्वादनात्उच्चाटनीयउड्डायनीयः प्रश्नःकाकुःएतस्यग्रहणेमयायत्नःक्रियतेभवतीभिरुच्चाटनंक्रियतेएतन्नयुक्तमित्यर्थःअत्रभासुभवतीषुमध्येयामामन्वेतिअनुगमिष्यतिसामह्यमेवद्रुह्यत्येव एषशब्दस्यावृत्तिःममद्रोहमेवकरिष्यतीतिअन्वेतिद्रुह्यतीतिवर्तमानसामीप्य इतिभविष्यतिलट्अन्वादेशेपिनचवाहेतिएवशब्देनसाक्षाद्योगेनिषेधान्मह्यमित्यत्रनमयादेशःमह्यंक्रुधद्रुहेतिचतुर्थी ॥ ७ ॥

धृतालपकोपाहसितेसखीनां छायेवभास्वंतमभिप्रयातुः । श्यामाऽथहंसस्यकरानवाप्तेर्मंदाक्षल

ह्याालगतिस्मपश्चात् ॥ ८ ॥

धृतेति ॥ श्यानायौवनमध्यस्याहंसस्यपश्चाद्गतिस्मचालकिंभूतास खीनांहसितेहास्यविषयेवह्वपराधाभावात्धृतःकृतोल्पः कोपोययातथाहं सस्यकरेणहस्तेनानवाप्तेरप्राप्तेर्हेतोर्मंदाक्षेणलज्यतेदृश्यतेत्यर्थः कस्यके वभास्वतंसूर्यंअभिप्रयातुःसूर्यसंमुखंगच्छतःपुरुषस्यजायायथातस्यैवपश्चाद्ग गति छायापिहिहंसस्यसूर्येत्यक्तिरणाप्राप्तेःश्यमाभवति हंसस्यपश्चादि त्यनेनयोगेषष्ठ्यतसर्थप्रत्ययमेतिषष्ठीपश्चादितिनिपातः मंदाक्षंह्रीस्त्रपा इत्यमरः ॥ ८ ॥

शस्तानहंसाभिमुखीपुनस्ते यात्रेतिताभिश्छल
हस्यमाना । साऽऽहस्मनैवाशकुनोभवेन्मे भावि
प्रियावेदकएषहंसः ॥ ९ ॥

शस्तेति ॥ ताभिःसखीभिरितिपूर्वोक्तेनप्रकारेणच्छलेनशब्दछलेनहस्य मानासामैमीइतिवक्ष्यमाणांसखीःप्रतिआहस्म इतिकिं हेभैमिहंसाभिमु खीराजहंससन्मुखीअथचसूर्यसन्मुखीयात्रातेपुनःराजपुत्र्याः नशस्तानप्र शस्ता अशकुनत्वाच्छास्त्रनिषिद्धत्वात्इतिसखीवचनम् हेसख्यःएषहंसो मेममनैवअशकुनोभवेत् अपशकुनरूपोनैवस्यादितिप्रार्थनायांलिङ् यतो यंभावियत्प्रियंतस्यावेदकःसूचकःराजहंसाभिमुखयात्राशकुनरूपैव हंसद र्शनस्यश्रवणस्यचवसंतराजेसर्वसिद्धिकरत्वोक्तेरितिअतएवभविष्यन्नु रागवान्यः प्रियोनलस्तस्यावेदकइतिचलोकोत्तरसुवर्णशकुनदर्शनाल्लोको त्तरनलशुभप्राप्तिरनुमीयतेभविष्यन्ननुरागवान्वानैवाशकुनीः पक्ष्येवेतिवा प्रत्ययादित्यंप्रतिवुद्धमितियात्रानिषेधात् । तथानायंसूर्यादिःकिंतुपक्ष्येव अशकुनशकुनशब्दांदशुभसूचकात्पक्षिनिषेधकाच्चाऽस्यच्चाविती‌कारःपक्षि निषेधकादशकुनिशब्दादर्थोचेतिदीर्घोवा भावीगन्त्यादिः ॥ ९ ॥

हंसोप्यसौहंसगतेःसुदत्याः पुरःपुरश्चारुचलन्बभासे । वैलक्ष्यहेतोर्गतिमेतदीयामग्रेऽनुकृत्योपहसन्निवोच्चैः ॥ १० ॥

हंसइति ॥ नकेवलंताभिरेताभिरेवहसिताकिंतुअसौहंसोपिवैलक्ष्यहे

तोर्भैमीलज्जोत्पादनमेवहेतुःतस्याएतदीयांभैमीसंबंधिनींगतिंअन्यापरवां ऽग्रेअनुकत्यअनुसृत्यउच्चैरुच्चैरतिशयेनोपहसन्निवउपहासं कुर्वन्निववभा सेशुशुभे किंकुर्वन्हंसवद्गतिर्गमनंयस्याःसुदत्याःभैम्याःपुरअग्रेचाकरमणी यंचलन्गच्छन् परिहासकोपिविपाद्यनुकरणेनाप्याक्षेपयती सुदत्याविलक्ष्य हेतोरितिचषष्ठ्यरतसर्वेतिषष्ठीहेतुप्रयोगइतिषष्ठयौ ॥ १० ॥

पदेपदेभाविनिभाविनीतं यथाकरप्राप्यमवैतिनू नम् । तथासखेलंचलताललतासु प्रतार्यतेनाचकृ षे कृशांगी ॥ ११ ॥

पदइति ॥ भावीहंसग्रहणानुसंधानंतद्वतीसाभैमीभाविनिभविष्यतिप देपदेचरणविन्यासेतंहंसंकरप्राप्यंहस्तप्राप्यंनूनंनिश्चयेनयथाऽवैतिजाना तिउत्तरस्मिन्पदेऽवश्यमेनंधारयिष्यामीतियथाजानातितथासखेलंसक्री डंचलतागच्छतातेनहंसेनप्रतार्यवंचयित्वासाकृशाङ्गीलतासुवल्लीसमीपेत्र्या चकृषेआकृष्टाभाविनीयमितिपाठेभाविनीपदविशेषणं भामिनीतिपाठेइ स्ताप्राप्तेःकोपनेत्यर्थःकृशांगीतिविरहपीडासूच्यतेप्राप्यंकृत्याश्चेतितृत्राव श्यकेकृत्यः ॥ ११ ॥

रुषानिषिद्धालिजनांयदेनां छायाद्वितीयांकलयां चकार । तदाश्रमाम्भःकणभूषितांगीं सकीरव न्मानुषवागवादीत् ॥ १२ ॥

रुषेति ॥ कीरवच्छुकवन्मानुषीवाक्यस्ययथाशुकोमनुष्यवाचावदति तथासहंसोरुषाक्रोधेननिषिद्धःआलिजनःसखीसमूहोययाऽतएवछायैव द्वितीयासहचरीयस्यास्तामेकाकिनींतथाश्रमांभःकणैःश्रमजनितघर्मोद कविंदुभिः भूषितमंगंयस्यास्तांयदाकलयांचकारज्ञातवान् तदातांप्रत्यवा दीत्उवाच छायाद्वितीयामित्यनेनदूत्यावसरःसूचितःश्रमांभइत्यनेनश्रां तेयमतःपरंनागमिष्यतीतिदूत्यंकर्तुमवसरइत्यंतस्मादत्रैववस्यातव्यंमयेतिसूचि तं भूषितपदेनश्रमविंदूनांमुक्तासाम्यंसूचितं छाययाकांत्याअद्वितीयांअ विद्यमानप्रतिमां रुषानिषिद्धालिजनांश्रमांभःकणभूषितांगींयदाज्ञातवा निति वा मानुषस्यवागिववाक्यस्येतिवा ॥ १२ ॥

अयेकियद्यावदुपैषिदूरं व्यर्थंपरिश्राम्यसिवा कि मर्थम् । उदेतितेभीररपिकिन्नुबाले विलोकयन्त्या नघनावनालीः ॥ १३ ॥

अयेति ॥ अयेभैमिकियद्दूरंयावदुपैषिआगमिष्यसि वासमुच्चये त्वंइत्थं अनेनप्रकारेणशीघ्रमागमनादिनाव्यर्थंनिष्फलंकिंवापरिश्राम्यसिकथय कि मालेये । अयेइतिव्यर्थंपत्यर्थंवा अमोनकार्यंइत्यर्थःकिमर्थमितिपाठेअर्थं शब्दःप्रयोजनवाची सतश्चकिंप्रयोजनमित्यर्थःयातीतियास्तद्वत् यावत् शीघ्रगामिपुरुषवत्कियद्दूरमुपेष्यसिव्यर्थमेवपत्यर्थमित्यर्थंपरिश्राम्यसिका कुप्रश्ने व्यर्थंकियद्दूरमुपैषीतिवा नुबालेभैमि परिश्रमंतद्वैव्यर्थंघनगणयसि तर्हिघनानिविडावनालीर्वनपंक्तीर्विलोकयंत्याःपश्यंत्यास्तेतवभीररपिकिं मोदेति मोत्पद्यते बालायाहिघनवनपंक्तिदर्शनेभयमुत्पादेतव्यं तदपित वनोदेतीत्याश्चर्यम् नवालइतिपाठेवबयोरभेदान्नवाआलयःसख्योयस्याः तत्सम्बुद्धिःनूतनत्वात्ताःत्वांबाला वनसमीपेपरित्यज्यगतास्तथापरिश्र तानेतिभावःयावदुपैषीतियावत्पुरेतिभविष्यतिलट् एतेरेजादित्वात्पूर्वे णाहदृत्यपेधतीतिवृद्धिः ॥ १३ ॥

वृथाऽर्पयन्तीमपदेपदन्त्वांमरुल्ललत्पल्लवपाणिकं पैः । आलीवपश्यप्रतिषेधतीयं कपोतहुंकारगि रावनाली ॥ १४ ॥

वृथेति ॥ हेभैमिइयंवनालीवनपंक्तिःआलीवसखीवमरुतावायुनाललं तोविलसंतःपल्लवाःतएवपाणयःतेषांकम्पैःकंपनैःअस्यास्तथाकपोता नांपारावतानांहुंकारगीःहुंहुंइतिशब्दस्तयाचअपदेमद्वारणारूपेअस्थानेअ मार्गेचवृथानिष्फलंपदंव्यवसायंचरणन्यासंचार्पयंतीकुर्वतींत्वांप्रतिषेधति पश्यवाक्यार्थःकर्म सख्यपिकरकंपनैःहुंकारेणचसखींनिषेधतिपदंव्यसित त्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः अपदेपदोविभाषेतिअप्रत्ययेअपदंन पुंसकमितिसाधुः हुंकारकिरेतिपाठेकिरतीतिकिरःइगुपधज्ञाप्रीकिरःकः इत्यनेनकेकांतेनपूर्वस्यकर्तृषष्ठीसमासइतिसिद्धांतः ॥ १४ ॥

धार्यःकथंकारमहंभवत्या वियद्विहारीवसुधैकग

**स्या । अहोशिशुत्वं तव खण्डितं न स्मरस्य सख्या वयसाप्यनेन ॥ १५ ॥**

अस्थानत्वमेवाह ॥ धार्य इति ॥ हे भैमि वसुधायामेव एका असाधारणा गतिः संचरणं यस्या वसुधैव एकागतिर्यस्या इति वा भवत्या त्वया वियति अन्तरिक्षे विहारो गमनं यस्य एवंभूतोहं कथंकारं कथमिव धार्यः धर्तुं शक्यः अपितु न कथंचित् अहो आश्चर्ये संबोधने वा स्मरस्य सख्या कामसमित्रेण अनेन मम त्वत् दृश्येन वयसापि तारुण्येन तव शिशुत्वं बालत्वं नतु स्वं च न खण्डितं न नाशितं न तु गगनगामिनः स्वस्य च केवलं भुवि गामिन्याः न विचार्यैवमाग्रहयोद्योगं करोषीति भावः प्रश्नः काकुर्वा अनेन वयः संधिरुक्तः अथ च स्मरतुल्यस्य नलस्य मित्रेण अनेन मलक्षणेन वयसा पक्षिणा तवेदं शिशुत्वं बालत्वं न खण्डितं अपितु खण्डितप्रायमेव मया शीघ्रमेव नलप्राप्तेः करिष्यमाणत्वात् बालत्वं नष्टिं गमिष्यतीति भविष्यत्यपि भूतवदुपचारः धार्यः शक्तिलिङ् चेति कृत्यः कथंकारं अन्यथैवं कथमिति णमुल् भविष्यत्वाश्वात् तृतीया सख्या भाषितपुंस्कत्वात्साधुः ॥ १५ ॥

**सहस्रपत्रासनपत्रहंसवंशस्य पत्राणि पतत्रिणः स्मः । अस्मादृशां चाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥ १६ ॥**

मयि धृतेपि तव न किंचित्फलमित्याह ॥ सहस्रेति ॥ हे भैमि वयं सहस्रपत्रं कमलमासनं यस्य ब्रह्मणस्तस्य पत्राणि वाहनानि हंसास्तेषां वंशस्य कुलस्य पत्राणि पक्षभूताः सहायभूताः पतत्रिणः स्मः भवामः ततः किमत आह अस्मेति अस्मादृशां चाटूनि प्रियवचनानि तेषु योरसः शृंगारादिस्तल्लक्षणानि अमृतानि स्वर्लोके ये लोकाः जनास्तेभ्य इतरे अन्ये पृथिवीपाताललोकवासिनस्तैर्दुर्लभानि दुष्प्रापाणि भुविजनानां दुष्प्रापाणि मानुषीत्वं तदर्थं किं क्लिश्यसीति भावः पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणामिति विश्वः अस्मदो द्वयोश्चेति स्वाभिप्रायं बहुवचनं नलतडागस्थहंसाभिप्रायं वा अस्मादृशां आसवे नामृतत्वात्त्वं दुर्लभानि न तु दुर्ज्ञानीति मुख्यभावः ॥ १६ ॥

**स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजो**

भजामः । शुद्धानुरूपांतनुरूपऋद्धिं कार्यंनिदा
नाद्धिगुणानधीते ॥ १७ ॥

ननुभवंतांहंसत्वात्सुवर्णशरीरत्वंकथमित्यतआह ॥ स्वर्णेति ॥ हेभैमि
वयंस्वर्णानुरूपांभक्षणीययोग्यांतनुरूपऋद्धिंकांतिसमृद्धिंभजामः अमुषः
स्त्रिंस्रुताःस्वर्गापगास्वर्गनदीतस्याहेममृणालिनीनांसुवर्णकमलिनीनांया
नालाः मृणालानिचतेषामग्रासिकैर्ग्रासमतानिकोमलानिविसाद्यग्रासैः
नालासंबंधीनिमृणालानिवाभुंजतइति भुजेःक्विप्हियस्मिद्धेतोःकार्यंघटादि
निदानादादिकारणात्मृत्पिंडादेः वर्णपिकारणानाम्कार्योहीन्अधीतेल
भते कारणगुणाः कार्यगुणानारभंतइतिनैय्यायिकाः अतःसुवर्णमृणालभ
क्षणात्सुवर्णमयत्वमस्माकमितिभावःनालशब्दस्त्रिलिंगःनलस्यमेनालाय
वमितिभिन्नपदंरूपऋद्धिंइतिसमस्तंएकपदंइति एकलिंगावःनिदानात्आख्या
तोपयोगइत्यपादानत्वम् ॥ १७

धातुर्नियोगादिहनैषधीयं लीलासरःसेवितुमा
गतेषु । हैमेषुहंसेष्वहमेकएव भ्रमामिभूलोकवि
लोकनोत्कः ॥ १८ ॥

ननुयदिभवान्ब्रह्मणोवाहनंतर्हिभुवंप्रत्यागमनेअत्रागमनेकुतोहेतुस्तत्रा
ऽऽह ॥ धातुरिति ॥ हेभैमिकिंहास्यलंयदस्यधातुर्ब्रह्मणोनियोगात्आज्ञ
याइहभूलोकेनैषधीयंनलसंबंधिलीलासरःसेवितुंआलोडयितुंआगतेअमे
षुहैमेषुसौवर्णेषुहंसेषुमध्येएकोऽहमेवभूलोकविलोकनेउत्कउत्कंठितःस
न्भ्रमामिविचरामि भूलोकंपश्यन्प्रसंगादत्रागतोऽस्मिअन्येतुसर्वेस्वद्धा
हंसावहयोनलसरसिक्रीडंतीत्यर्थःहैमेषुविकारेषुअनुदात्तादित्वात्प्रकृ
तिभावःहंसेषुनिर्धारणेसप्तमीउत्कउन्मनाइतिनिपातात्साधुः ॥ १८ ॥

विधेःकदाचिद्भ्रमणीविलासे श्रमातुरेभ्यःस्वम
हत्तरेभ्यः । स्कन्धस्यविश्रान्तिमदान्तदाहं श्रा
म्यामिनविश्रमविश्वगोऽपि ॥ १९ ॥

धार्यःकथंकारइतियदुक्तंतत्रभूपर्यटनेनश्रांतस्यतवधारणेकः प्रयासइ
त्याशंकायामाह ॥ विधेरिति ॥ हेभैमिअहंविधेर्ब्रह्मणःकदाचित्क

स्मिंश्चित्समयेत्वमणीविलासैवाह्यलीलायांश्रमातुरेभ्यःपरिश्रांतेभ्यःस्वम हत्तरेभ्यःनिजपूर्वजेभ्यःहंसेभ्यः स्कंधस्यविश्रांतिंअदां तेपुतद्भारमहमया हिपं किंभूतोहं अविश्रमंकृचिद्विश्रांतिमकृत्वैवयविश्वगोऽपिसर्वलोकगास्य पितदादितःप्रभृतिनविश्रांतोभवामि निजपूर्वजप्रसादात्क्रमरहितोविश्वं भ्रमामीतिभावःभ्रमणीतिकृत्यल्युटइतिल्युट्श्राम्यामिशमामष्टमामिति दीर्घःश्रमकरणेऽप्यपिगमेर्डोदृश्यतइतिविश्वगइत्यत्रडः ॥ १९ ॥

बन्धाययदिव्येनतिरश्चिकश्चित् पाशादिरासादितपौरुषःस्यात् । एकंविनामादृशितन्नरस्य स्वर्भोगभाग्यंविरलोदयस्य ॥ २० ॥

ननुपक्षिणःसर्वेश्रबंधनसंभवात्त्वंकथंनबद्धइत्याशंक्यनलप्रसंगेनोत्तरंप्र यच्छति ॥ बंधायेति ॥ कश्चित्पाशादिःवागुरादिःदिव्येदिविभवेमादृशिम इवदृशेतिरश्चिपक्षिणिविषयेबंधनायमादृशंबद्धुंआसादितपौरुषः प्राप्तसा मर्थ्योनस्याद्भवेत्दिव्यत्वादेवाह केनचित्बन्द्धुंनशक्यइत्यर्थः परमयंविशे षःविरलोदयस्यविरलजन्मनः क्वचित्कस्यचिन्नरस्यपुरुषस्य तत्प्रसिद्धंएकं असाधारणंस्वर्भोगभाग्यंस्वर्लोकेस्रक्चंदनादिभोगयोग्यं शुभंकर्मविनायो भूमिस्थोऽपिस्वर्गभोगंभुंक्तेतस्यैवमादृशाबध्यस्याइतिभावः एवंविधःकश्चन्न सर्वइत्यर्थः अथच विगतोरेफोविरेफस्तस्यरस्थाने लल्योदयोयस्मिन्तस्य नलस्य यद्वानरशब्दस्यविशेषेणरस्थानेलोदयोयस्यतथापिनलस्येत्यर्थः ततश्चनलस्यस्वर्भोगभाग्यं विनामादृशंबद्धुंनकोपिशक्नोति नलस्यस्वर्भो गभागधेयस्यैवमादृशाबध्याइतिभावःसचासौनरश्चतन्नरइतिवाबंधायतुम र्थोदितिचतुर्थी दिव्येदिगादित्वाद्यत् एकंपृथग्विनेतिद्वितीया ॥ २० ॥

इष्टेनपूर्तेननलस्यवश्याः स्वर्भोगमत्रापिसृजंत्यमर्त्याः । महीरुहादोहदसेकशक्तेराकालिकंकोरकमुद्गिरन्ति ॥ २१ ॥

नलस्यस्वर्भोगभाग्यमेवकुतइत्यतआह ॥ इष्टेनेति ॥ इष्टेनयागादिना पूर्तेनकूपादिनाउपपक्षितोऽधिकदक्षिणादिनाइष्टेनयावश्या अमर्त्यादेवा अत्रापिभूलोकेपिमनुष्यजन्मन्यपिनलस्यस्वर्भोगंसृजंति यागवाहुल्यंचनलं

तडागखातुल्यंविनाकेनापिनकृतमितितस्यैववश्यामूत्वांस्वर्भोगंसृजंति दे
हांतरदेशान्तर्भाविस्वर्गफलंकथमत्रैवेत्याशंक्याह अचेतनाअपिमहीरुहा
वृक्षाःदोहदसेकयुक्ताः धूपादिदोहदसामर्थ्योद्भवाधानोषधिविक्षेपसाम
र्थ्याद्वाउदकसेकसामर्थ्याच्चआकालिकंअन्यकालभवनयोग्यंकोरकंकलिका
मुद्गिरंति कालांतरेपिप्रकटयंतितथावृक्षाअपिइष्टेनदोहदेनपूर्तेनखातेना
लवालेनमलाऽधीनाःसंतोदोहदसेकसामर्थ्यादाकालिकंकोरकमुद्गिरंती
त्यपिज्ञेयं अन्योपिइष्टःवश्यःसन्स्वर्गफलतुल्यंवस्तुददाति ॥ अथक्रतुकर्मे
ष्टंपूर्तंखातादिकर्मणीत्यमरः वश्यावशंगतइतियत् महीरुहाःद्रुमप्रधानकः
अकालेभवःआध्यात्मादित्वाठ्ठक् पूर्तेनमध्याख्येतिनस्यनिषेधः ॥ २१ ॥

सुवर्णशैलादवतीर्यतूर्णं स्वर्वाहिनीवारिकणाव
कीर्णैः । तंवीजयामःस्मरकेलिकाले पक्षैर्नृपंचा
मरबहुसख्यैः ॥ २२ ॥

स्वर्भोगमेववक्ति ॥ सुवर्णेति ॥ वयंस्मरकेलिकालेसुरतक्रीडासमयेपक्षैः
तंनृपंनलंवीजयामःतस्यसुरतखेदापनयनंकुर्मः किंकृत्वा सुवर्णशैलान्मे
रोःतूर्णंझटितिअवतीर्यागत्य किंतैःपक्षैःस्वर्वाहिनीमंदाकिनीतस्यावारिक
णाःजलकणास्तैरवकीर्णैर्व्याप्तैःतथागौरत्वाच्चामरैः सहबहुकृतसख्यंसादृ
श्यंयैश्चामरसदृशैरित्यर्थःअथचअमरैर्देवैः सहबहुसख्यंयैर्देवैरपिनलस्यस्व
र्भोगःसृज्यतेअस्माभिरपीतितैः सहसख्यंअस्मिन्पक्षेदेवावयंचवीजयामः
तूर्णमित्यनेनस्वर्गाधर्मःसूचितःचतुरस्वरेत्यूठ् ॥ २२ ॥

क्रियेतचेत्साधुविभक्तिचिन्ता व्यक्तिस्तदासाप्र
थमाभिधेया । यास्वौजसांसाधयितुंविलासैस्ता
वत्क्षमानामपदंबहुस्यात् ॥ २३ ॥

तस्यानलेऽनुरागंदृष्ट्वातद्वर्णनंप्रक्रमते॥क्रियेतेति॥केकेसाधवःइतिसाधूनां
मध्येविभक्त्याविभागेनचिंताविचारणाचेद्यदि क्रियेततदातर्हिसानललक्ष
णाव्यक्तिःप्रथमाआद्याअभिधेयावक्तव्या साधूनांमध्येनलएवप्रथमंगण्यइ
तिभावःसाकायाःस्वौजसांस्वकीयतेजसांविलासैर्विभवैर्बहुअसंख्याकंअना
मपदंनमनंनामःक्षमविद्यतेयेषांतेअनामाःशत्रवःतेषांराज्ञांप्रभूणांपदंस्था

मंतावत्साकल्येनसाधयितुंस्वाधीनंकर्तुंसमासमर्थोभवेत् तावदतिमहत् समानासपृथ्वीसंज्ञकंपदंसाधयितुमेकेयवक्तुःअनेकधास्याविति सविसर्गः पाठइतिवा एतेनपृथ्वीसंज्ञकेसएवराजामान्यइतिस्थितमितिव्याख्यानं अथचेद्यदिसाधुसम्यक् विभक्तीनांसु पतिङ्क्षांचिंताविचारणाक्रियतेतदा साव्यक्तिःप्रथमाअभिधेया प्रथमेतिअभिधेयंसंज्ञायस्याःसा साक्षा या स्वौजसांएकवचनद्विवचनबहुवचनसंज्ञानां प्रत्ययानांविलासैःयथासंभव विसर्जनीयलोपामादेशभावादिरूपैः प्रकारविशेषैर्बहूनामप्रातिपदिकं पदंसुबसंसाधयितुंनिष्पादयितुंतावदतितरांसमासमर्थास्यात्भवतिसाव्य क्तिःप्रथमाभिधेया व्यत्ययेऽनयाप्रातिपादिकार्थइतिव्यक्तिःप्रथमेत्यभि धेया अथचसाधुविभक्तीनांचिंताविचारोयदिक्रियतेतर्ह्येकवचनादिसंज्ञ कानांस्वौजसांमध्येयाप्रथमाविभक्तिःव्यक्तिःसुलक्षणासैवाभिधेयेतिया वत् प्रयोगेयोग्यत्वायएकवचनमुत्सर्गतः करिष्यइतिन्यायेनसुविभक्तिरे वविधेयाभवतीतिइतिभावः ॥ २३ ॥

राजासयज्वाविबुधव्रजत्रा कृत्वाऽध्वराज्योपमयै
वराज्यम् । भुंक्तेश्रितश्रोत्रियसात्कृतश्रीः पूर्वं
त्वहोशेषमशेषमत्यम् ॥ २४ ॥

राजेति ॥ श्रितश्रोत्रियसादाश्रितछंदोध्याय्यधीनदेयीकृताश्रीर्लक्ष्मीर्य स्यसः यज्वाविधिनेष्टवान्सराजानलः अध्वरेयज्ञेयदाज्यंघृतंदेवसमूहाधीन देयीकृतंतस्यघृतस्यउपमयैवदृष्टांतेनैवउपभोगेनैवराज्यंविबुधानांविदुषां व्रजःसमूहस्तदायत्तंदेयंकृत्वासंपाद्यश्लोकोक्तक्रमापेक्षयापूर्वंअध्वराज्यंहु ताऽवशेषाज्यंअन्यंराज्यंअशेषंसकलमपिभुंक्तेइत्यहोआश्चर्यं (यत्पूर्वंभुज्य तेतदशेषंभवतियत्पश्चात्तच्छेषमितिलोकप्रसिद्धिःअत्रतुविपरीतमित्यहो आश्चर्यं )देवसमूहाधीनदेयीकृतस्ययज्ञघृतस्यउपभोगंयथाकरोतितथावि द्वज्जनायत्तीकृतस्यराज्यस्यापीतिभावःयज्ञदक्षिणास्तुश्रोत्रियेभ्यएवदत्ताः राज्यभोगस्तुविद्वज्जनैःसहेति विबुधव्रजत्रेत्यनेनश्रोत्रियसादित्यस्यनपौ नरुक्तशंका जन्मनाब्राह्मणोज्ञेयःसंस्काराद्द्विजउच्यते विद्ययायातिविप्रत्वं त्रिभिःश्रोत्रियउच्यते इतिमुख्यत्वाच्चपृथगुपादानंश्रोत्रियस्य अथचसर्वज नोपभोग्यत्वादध्वनिमार्गेएवयज्ञाज्यंतस्साम्येनैवोपभुंक्तइतिसमस्तराज्यो

पभोगएवाश्रयंहेतुरितिअनेकप्रकारीसमुद्रावधिराज्यस्यथोपभुक्तेतिभा वःयद्वासुयच्छोऽर्वनिप् राज्योपभयेतिषष्ठीसमासःभुंक्तेउपभोगस्थविव क्षितत्वास्त्रियंभुक्तइतिवत् भुजोऽनवनइतितङ् श्रिताःस्वयमाश्रिताःपा लितावृत्तिकर्मण्येवक्तप्रत्ययःसमर्थनीयःश्रो त्रियन्छंदोधीतइतिश्रोत्रियश ब्दःसाधुः कृतश्रीरितीयङ्स्थानत्वान्नदीत्वाभावात्कवभावः॥ २४॥

दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे । सन्तुष्टमिष्टानितमिष्टदेवं नाथन्तिकेनाम नलोकनाथम्॥ २५॥

दारिद्र्येति ॥ केनामलोकाःतंलोकनाथंराजानंनलंइष्टानिहितानिधना दीनिननाथंतियाचंतेअपितुसर्वेपि याञ्चाकरणेहेतुगर्भाणिविशेषणानिकिं भूतंबहुत्वेनदारिद्र्यदारिभिः दुरिद्रनाशकैर्द्रविणौघवर्षैधनसमूहवर्षैःकृत्वा अर्थिसार्थेयाचकसमूहेअमोघंसफलंमेघव्रतंयस्य जलदायथाजसर्वंचलोकं सुखयंतितथाधनवर्षैरयं तथासंतुष्टंनंदानैःसंतोषयुक्तंसहर्षोत्साहयुक्तं वा तथाइष्टदेवंइष्टायजिकर्मणिकृतादेवायेनइष्टाप्रियादेवायस्येतिवा इष्टो हितश्चासौदेवोराजाचइष्टदेवताकृपंवा कामेतिशिरश्चालने दारिद्र्यनाशस मर्थधनदानशीलत्वात्सर्वोपितंयाचतइतिभावः॥ अयपप्रसन्नदेवंत्रत्ना यंदंदंवाधनादीनिसर्वेपियाचंते नाथियाञ्चायांमित्रिकर्मकःआशिष्येवात्म नेपदंनियमादत्रपरस्मैपदम्॥ २५॥

अस्मात्किलश्रोत्रसुधांविधाय रंभाचिरंभामतुलां नलस्य । तत्रानुरक्तातमनाप्यमेजे तन्नामगन्धा न्नलकूवरंसा॥ २६॥

मानुषाणांनलाऽनुरागोऽस्तीतिकिमाश्चर्यंकिन्तुस्वर्वनितानामपिनलाऽ नुरागोऽस्तीतिबोधयितुमाह।अस्मदिति॥सारंभानीयस्त्ररूपारंभादेवांगना नलस्य अतुलांलोकत्रयेप्यनुपमांभांकांतिंअस्मत्सकाशात् चिरंश्रोत्रसुधांक र्णामृतंविधायकृत्वाबहुकालंसादरंसाकर्णयतत्रनलेअनुरक्तासतीतंनलंअना प्यकिलअप्राप्यैवतस्यनलस्यनाम्नोगंधाल्लेशात्नत्वनुरागान्नलकूवरंकुबेरपु त्रंभेजेप्राप नलकूवरनामापेक्षयातस्यलेशत्वंम् गंधात्स्वंबंधादितिवाक्यो

यम् अन्योपिअभीष्टवस्तुप्राप्त्यभावात्केनचिद्गुणेनतत्सदृशमन्यद्वस्तुभज ते । गंधोगंधकआमोदेलेशेसंबंधगर्वयोरितिविश्वः अनाप्येत्यत्राप्नृप्रत्येपा दनप्रपूर्वन्याप्नृयप् ॥ २६ ॥

स्वर्लोकमस्माभिरितःप्रयातैः केलीषुतद्गानगुणा न्निपीय । हाहेतिगायन्यदशोचितेन नाम्नैवहा हाहरिगायनोऽभूत् ॥ २७ ॥

स्वर्लोकमिति ॥ केलीषुनलसुखासिकावेलासुक्रीडासुवातस्यनल स्यगानस्यगुणान्माधुर्यादिगुणान्निपीयसादरमा कर्ण्यइतःभूलोकात्स्व र्लोकंप्रयातैरस्माभिःकर्तृभिःगायन्हाहाख्यंसकोहरिगायनोइंद्रगायकःहाहे तियत्अशोचित्हाहाकष्टं इतिपरमानिंदितकोनैवकारणेनसहरिगायनोना म्नाहाहाख्यवाभूत् ततःपरंहाहाइत्येवनामाभूत्तेनैवनाम्नैवनियां हाहा हूहूश्चैवनाथागंधर्वास्त्रिदिवौकसामित्यमरःगायन्नपुरुषेतिल्युट् ॥ २७ ॥

शृण्वन्सदारस्तदुदारभावं हृष्यन्मुहुर्लोमपुलोम जायाः । पुण्येननालोकतनाकपालः प्रमोदवा ष्पावृतनेत्रमालः ॥ २८ ॥

शृण्वन्निति ॥ लोकपालइंद्रःपुलोमजायाःइंद्राण्यालोमतस्यास्त्वपुण्ये ननालोकतपश्यतिस्म किंकुर्वन्सदारःसनइंद्राणीसहितःतस्यनलस्योदा रभावंमहत्त्वंशृण्वन्आकर्णयनमुहुर्वारंहृष्यंस्तरोमांचोभवनअदर्शनहे तौ ननापश्यदितिवा मुहुर्वारंवारंहृष्यदितिरोमविशेषणंवा तहृनपश्यतोदर्शने हेतुगर्भविशेषणं तथाप्रमोदवाष्पैरानंदाश्रुभिः आवृताव्याप्तानेत्रपंक्तिर्य स्यसः इंद्राण्यानलगुणाकर्णनोद्भूतं रोमांचंचेदिंद्रोद्रक्ष्यत् ग्रदभुतौदार्य श्रवणरभावेशाद्रोमांचोदयः तद्दर्शनेशक्रस्यशृंगाररसाधिकशंकाय्यानल्रिंग मतीत्त्वात्तत्यागमकरिष्यत्तस्यौदार्यातिशयःसूचितःअदर्शनेहेतुद्वयं । वा प्पैर्नेत्रनिमीलनस्यंतस्याः पुण्यत्वंच ॥ २८ ॥

सापीश्वरेशृण्वतितद्गुणौघान् प्रसह्यचेतोहरतो र्द्धशंभुः । अभूदपर्णाङ्गुलिरुद्धकर्णा कदानकण्डू यनकैतवेन ॥ २९ ॥

सापीति ॥ सापि पातिव्रत्येनप्रसिद्धाऽपर्णापार्वत्यपिकण्डूयनकैतवेनकण्डू यनव्याजेन अङ्गुलिरुद्धकर्णाङ्गुलिभीरुद्धकर्णाकदाजाभूत् अपितुसर्वदेवजा ताकस्मिन्स्तति ईश्वरेशंभौप्रसह्यबलात्कारेणचेतोऽन्तःकरणंहरतोवशीकुर्वत स्तद्गुणौघान्नलगुणसमूहाञ्शृण्वतिसादरमाकर्णयति सातिकिंभूताअपर्णा अर्द्धशरीरार्धंशंभुर्यस्याःशंभोःशरीरार्द्धंवाएकदेशिसमासो वा शंभोरर्द्धशरीर स्वादन्यत्रगन्तुमशक्यस्यातद्गुणश्रवणेनसात्त्विकभावरोमाञ्चाद्युत्पत्तेः पातिव्रत्यभङ्गभीत्याशंभुर्ज्ञास्यतीतिभीत्याच तद्गुणश्रवणप्रस्तावेकण्डूयनव्याजेनकर्णौनिरुणद्धिस्मेत्यर्थः । अपर्णेत्यनेनपर्णत्यागतपस्ययाशंभुप्राप्त्यर्थंयस्नात्कृतात्तयापातिव्रत्यभङ्गभीत्याकर्णरोधःकृत इति भावः ॥ २९ ॥

अलंसृजन् धर्मविधौविधाता रुणद्धिमौनस्य मि
षेणवाणीम् । तत्कण्ठमालिङ्ग्यरसस्यतृप्ता नवे
द तां वेदजडःस वक्राम् ॥३०॥

अलमिति ॥ धर्मविधौसंध्याकर्मकरणेसृजनसक्तःसन् विधाताब्रह्मामौनस्यमिषेणअलमत्यर्थंवाणीमावृणोति बहिर्निर्गतापुरुषान्तरं नभजदितिशंकयाक्रीडांकरोतिनतुधर्मार्थमितिभावः। यद्रुणद्धितदलंवृथेतिवा । वैयर्थ्यंमेवाह।तत्रस्थातत्कण्ठंतस्यकण्ठमालिङ्ग्याश्लिष्यरसस्यशृङ्गारादिरसैःतृप्तांपूर्णांवक्रांवक्रोक्तिरूपांतांवाणीनवेदजानातियतोवेदजडः सदैववेदपाठव्याकुलीभूतहृदयः निरुद्धापिकदानिर्जित्यनलकण्ठमालिलिङ्गेतिनाज्ञासीदितिभावः । अथववेदजडत्वात्तांविहायअनुरागान्नलकण्ठमालिङ्ग्यशृङ्गारादिपूर्णामित्यर्थः शृङ्गारादियुक्तांवक्रोक्तिं नलएवजानातिनान्यइत्यर्थः ।अन्योऽपिकान्दसोविरक्तामनुरक्तांवास्वस्त्रियंनजानाति । पूरणगुणेति सुहितार्थयोगेषष्ठीसमासनिषेधादेषरसस्येतितृप्त्यर्थकरणेषष्ठी ॥३०॥

श्रियस्तदालिङ्गनभूर्नभूता व्रतक्षितिःकाऽपिपति
व्रतायाः । समस्तभूतात्मतया न भूतं तद्भर्तुरी
र्ष्याकलुषाणुनापि ॥ ३१ ॥

श्रियइति ॥ पतिव्रतायाःश्रियःशोभायाप्रकुलेमराज्यलक्ष्मीस्तस्यलेमथुतदालिङ्गनंनलालिङ्गनं तस्माद्भवतीतिभूःकापिव्रतक्षतिः पातिव्रत्यक्षतिर्नभूता

१८

नजाता तस्यालक्ष्म्यामर्तुर्विष्णोर्नसालिङ्गनेनलक्ष्मीविषयेईर्ष्याऽसूयि ष्णुत्वलक्षणा तयाकलुषंकालुष्यं तस्यत्वगुलेशस्तेनापिनभूतं नजातं तस्य पातिव्रत्यस्यतत्यभावेतद्भर्तुरीर्ष्याकालुष्याभावेचहेतुमाह । समस्तभूतात्मत याविष्णोःसकलभूतस्वरूपत्वेनसमस्तानामात्माविष्णुस्तस्यभावस्तत्त्वात्तया नलोपिविष्णुरेवेतिनतदालिङ्गनेपातिव्रत्यक्षितिः । विष्णोरीर्ष्याचमाभूदि त्यर्थः । तदाकान्तिसम्पत्तियुक्तमितिभावः । कलुषशब्दोऽत्रधर्मवाचकपरः । अस्तूयानिमित्तपापलेशेनापिनभूतमितिवा । पत्यर्थनलशब्दस्ययाजकादि त्वात्षष्ठीसमासः ॥ ३१ ॥

धिक्तंविधेःपाणिमजातलज्जं निर्माति यःपर्व
णिपूर्णमिन्दुम् । मन्ये सविज्ञः स्मृतनन्मुखश्रीः
कृतार्द्धमौजूर्भ्यदुरसूदार्धे यस्तम् ॥ ३२ ॥

धिगिति॥ हेभैमिस्मृतातस्यनलस्यमुखश्रीर्येनएवंभूतोपियोविधेर्ब्रह्मणः पाणिर्हस्तः पर्वणिपूर्णिमायांपूर्णंपरिपूर्णकलंसकलकुंचन्द्रंनिर्मातिरचयति अतएवअजातलज्जंनिर्लज्जंविधेः पाणिं धिक् लज्जैवतुल्याननेतत्यपियः कुरस्तस्मादतिहीनंपूर्णचन्द्रंनिर्मातिसनिर्लज्जस्याज्जिन्द्यएवसर्वविधेःपाणि विज्ञःकुशलः सकःयःस्मृतनलाननशोभःसन्कृतार्द्धंकृतैकदेशमपिसंचन्द्रंद रसूर्ध्नि शिवमस्तकेश्रौज्झत्तत्याजयत्यहंमन्येप्रारब्धमपितद्दृसमस्याग्न्यस्य स्मरणात्तत्त्यजति सविधिर्विदेवेतिभावः । पूर्णकलमेकफलंचचन्द्रंयद्यपैव एवब्रह्मणःपाणिर्निर्माति तथापिकार्यभेदान्पूर्वत्वंविज्ञत्वंकालभेदात्तुपच यैतेचन्द्रमुखादप्यतिरमणीयंतदाननमितिभावः ॥ ३२ ॥

निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य
मुखंमुखान्नः । सूरे समुद्रस्यकदापिपूरे कदाचि
दभ्रभ्रमदभ्रगर्भे ॥ ३३ ॥

निलीयतइति॥ हेभैमिविधुश्चन्द्रोनोऽस्माकंमुखात्तस्यमुखंस्वजैत्रंस्वस्य जेतृश्रुत्वाह्रीविधुरोलज्जाविकलः सन्कदापिकदाचिदमावास्यायांसूरेसूर्ये कदापिअस्तसमयेसमुद्रस्यपूरेप्रवाहेकदाचित्प्रावृट्कालेऽत्रआकाशेभ्रम न्ति अभ्राणिमेघास्तेषांगर्भेमध्येनिलीयतेअन्तर्हितोभवति अन्योऽपिस्व जेतारंश्रुत्वालज्जाविकलोऽलक्षितेपुस्थानेपुनिलीयते । सूरसूर्यार्यमा,द्यो

द्विवौ द्वे स्त्रियामध्वम्,, अध्वं मेघ, इत्यमरः। जैत्रैवजैत्रंप्रज्ञाद्यण् ॥ ३३ ॥

संज्ञाप्यनः स्वध्वजभृत्यवर्गान् दैत्यारिरत्यञ्जल
लास्यनुत्यै । तत्संकुचन्नाभिसरोजपीताद्धातुर्वि
लज्जं रमते रमायां ॥ ३४ ॥

संज्ञाप्येति ॥ दैत्यारिर्विष्णुःस्वध्वजस्यगरुडस्यभृत्यवर्गान्नोऽस्मान्
अत्यञ्जलंजितकमलंनलास्यंनलमुखंतस्यनुत्यैस्तुतयेसंज्ञयाज्ञाप्य धातुर्ब्र
ह्मणःसकाशाद्विलज्जंलज्जारहितंयथातथारमायांलक्ष्म्यां रमतेक्रीडति-
किंभूताद्धातुस्तयास्तुतयानलाननमनुस्यासंकुचन्मुकुलीभवन्नाभिसरोजं-
नाभिकमलंतेन पीतादन्तर्हितादपश्यदित्यर्थः। अस्याननमतिकान्तमयमेवमु
कुलीभवनेहेतुः॥ स्तवःस्तोत्रंनुतिःस्तुतिरित्यमरः। पश्यतोद्वयस्यसमक्षं
क्रीडाऽलज्जावहा ॥ ३४ ॥

रेखाभिरास्ये गणनादिवास्य द्वात्रिंशतादन्तमयी
भिरन्तः । चतुर्दशाष्टादशचात्रविद्या द्वेधा भव
न्तीति शशंस वेधाः ॥ ३५ ॥

रेखाभिरिति ॥ वेधाअस्यअन्तरास्येमुखमध्येद्वात्रिंशताद्वात्रिंशत्संख्या
भिर्दन्तरूपाभीरेखाभिर्गणनात्संख्यानंकृत्वाइतिशशंसेधकथयतिस्मेवइ
तिकिंनलमुखमध्येद्वेधास्वतन्त्राभ्यांद्वाभ्यामपिप्रकाराभ्यांचतुर्दशअष्टाद
शचविद्याःसन्तिइतिदन्तानांरेखात्वनिरूपणंसूक्ष्मत्वेनस्पष्टाशुद्धिकलत्वाच
स्वद्योतनार्थं दन्ताद्वात्रिंशद्विद्यन्तइतिभावः। चतुर्दशाष्टादशचमिलित्वा
द्वात्रिंशत् विद्यानांचतुर्दशत्वमष्टादशत्वंचप्रथमसर्गेउक्तम् । विंशत्याद्याः
सदैकत्वइतिद्वात्रिंशच्छब्दोबहुवचनान्तविशेषणम् । गणनाल्ल्यब्लोपेकर्म
णिपञ्चमी । द्विधासंख्यायाविधार्थेधाइतिधाप्रत्ययस्यएधाच्चेत्येधाच् ॥३५॥

श्रियौनरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्राव
पि नस्मरामः । वासेन तस्मिन् क्षमयोश्च स
म्यग् बुद्धीन दध्मः खलु शेषबुद्धौ ॥ ३६ ॥

श्रियाविति ॥ हंसैर्मिवयंतस्यनरेन्द्रस्यश्रियौशोभासम्पत्तीनिरीक्ष्यदृष्ट्वा
स्मरामरेन्द्रावपिकामेन्द्रावपिनस्मरामोऽन्तःकरणागोचरौनकुर्मो मदनेका

न्तिरेवष्ठन्द्रेचसमृद्धिरेवनलेचद्वेअपीत्याधिक्यम् । तस्मिन्नलेक्षमयोर्भूक्षा न्त्योःसम्यग्वासेनवसत्याखलुनिश्चयेनशेषबुद्धौअनन्तसुगतायपिवुद्धौचित्ते मदर्थोमनसालुस्सरामद्दत्यर्थः।तयोरेकैवक्षमाधारत्वमस्यचद्वयोरप्याधार त्वमतस्तयोःस्मरणंनताभ्यामयमधिकइतिवा।भूमिक्षान्त्योःक्षमेत्यमरः।क संख्या।शेषत्वेनाविवक्षणात्स्मरामरेन्द्राविन्यत्रश्लेषीगर्यैतिपञ्चभावः ॥३६॥

विना पतत्रं विनतातनूजैः, समीरणैरीक्षणलक्ष्णीयैः। मनोभिरासीदनणुप्रमाणैर्नलङ्घिता दिक्कतमा तदश्वैः ॥ ३७ ॥

विनेति ॥ तस्यनलस्याश्वैःकतमादिङ्नलङ्घितानिर्जिताआसीदपितु सर्वोपि किंभूतैःपतत्रंपक्षंविनापक्षरहितैर्विनतातनूजैर्गरुडैरिववाक्षयाद्रे क्षणलक्षणीयैर्नेत्रगोचरैःसमीरणैर्वायुभिस्तथाऽनणुप्रमाणैर्महापरिमाणा धिकरणैर्मनोभिरन्तःकरणैर्गरुडःसपक्षोवायुरचाक्षुषोमनोऽणुपरिमाणमि तिप्रसिद्धिः ॥ तद्विपरीताअपितदश्वावेगेनगरुडादिरूपाजाताइतिभावः। इवयोजनावाकर्तव्या । नर्वाजितेतिक्वचित्पाठः । अतिजवास्तदश्वाइतिभा वः। कतरकतमौजातिपरिप्रश्नइतिनिर्देशात्स्वार्थेडतमच् ॥ ३७ ॥

संग्रामभूमीषु भवत्यरीणामस्त्रैर्नदीमातृकतां गतासु । तद्वाणधारापवनाशनानां राजव्रजीयैरसुभिःसुभिक्षम् ॥ ३८ ॥

संग्रामेति ॥ हेभेमिराज्ञांव्रजाःसमूहास्तेषामिमेराजव्रजीयास्तैरसुभिर्न रेन्द्रप्राणरूपैर्वायुभिः करवातस्यनलस्यबाणधाराबाणपरंपरास्तस्याःपवनाः पवनाशनाःसर्पास्तेषांसुभिक्षंभिक्षासमृद्धिर्भवति नलबाणैःसर्वेपिशत्रवोहताइतिभावः। कासुसतीषुसंग्रामभूमिषुअरीणांशत्रूणामस्त्रैरुधिरैर्नदीमा तृकतांगतासुनदीजलपरिपूर्णासुसतीपुवैरिरुधिरनदीपूर्णास्वित्यर्थः।दैत्ये वाशुगामित्वेनप्राणहरत्वेनवाणानांपवनाशनत्वाद्बाणानांपवनाभिधत्वा त्तैरेवांसुभिक्षमितिभावः। नदीमातृकासुभूमिषुअवग्रहादिभिःसद्भावेसुभि क्षंभवति॥देशोनद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः॥स्यान्नदीमातृकोदेवमा तृकश्चयथाक्रममित्यमरः। नदीमातृकइतिनद्यृतश्चेतिकप्। राजव्रजीयेति वृद्धाच्छः। सुभिक्षंभिक्षाणांसमृद्धिरव्ययंविभक्तीत्यव्ययीभावः॥ ३८ ॥

यशो यदस्याजनि संयुगेषु कण्डूलभावं भजता भुजेन । हेतोर्गुणादेव दिगापगाली कूलंकषत्वव्यसनं तदीयम् ॥ ३९ ॥

यश इति ॥ कण्डूलभावं खर्जूसहितत्वं भजता प्राप्नुवता भुजेन संयुगेषु युद्धेष्वस्य यशोऽजनि संपादितं तत् तदीयं यशःसंबन्धि दिश एवापगा नद्यस्तासामाली पङ्क्तिस्तस्याः कूलं तीरं तत्कषत्वं कषणस्वभावस्तद्रूपं व्यसनं हेतोः कारणस्य गुणादेव जातमिति शेषः । तनुस्वभावतो यशःकारणे भुजे विद्यमानात्कण्डूलभावलक्षणात्कारणगुणादेव यशसि कूलंकषत्वव्यसनमागतमिति भावः । तस्य यशः सर्वदिग्व्यापीत्यर्थः । कण्डूलेति सिध्मादिभ्यश्चेत्यर्थे लच् कण्डूञ्त्याद्यन्तइति वा । आतोऽनुपसर्गे कः । कूलंकषइति सर्वकूलेति खच्प्रत्ययान्तस्य मुम् ॥ ३९ ॥

यदि त्रिलोकीगणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारेपरार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि सः स्यात् ॥ ४० ॥

इदानीं तस्य गुणावर्णनेऽशक्तिं द्योतयन्नतिशयोक्तिमाह ॥ यदीति । त्रिलोकी त्रैलोक्यं यदि गणनापरा गुणगणनासक्ता स्यात्तस्यास्त्रिलोक्यास्तद्गुणगणनार्थमायुषः समाप्तिर्यदि न स्याद्यदि गणितं गणितशास्त्रं पारेपरार्धं परार्धात्पारं यदि स्यात् तदा स नलो गणेया गणयितुं शक्या निःशेषाः समग्रा गुणा यस्य एवंभूतोऽपि स भवेन्न तु एवं ततः सोऽप्यसंख्येयगुण इति भावः । त्रिलोकीति समाहारे द्विगौ द्विगोरिति ङीप् । पारेपरार्धं पारे मध्ये षष्ठ्या वेति समासः । एदन्तत्वं च निपातनात् । गणेय इत्यौणादिको गणेरेयः स्यात् । क्रियातिपत्तेरविवक्षितत्वाल्लिङ् ॥ ४० ॥

अवारितद्वारतया तिरश्चामन्तःपुरे तस्य निविश्य राज्ञः । गतेषु रम्येष्वधिकं विशेषमध्यापयामः परमाणुमध्याः ॥ ४१ ॥

तस्यान्तःपुरे स्वगतिं द्योतयन्नाह ॥ अवारीति ॥ हे भैमि वयं परमाणुवन्मध्यो यासां ता अतिकृशोदराः एवंभूताः स्वत एव रम्येषु गतेष्वधिकं लोकोत्त

रंगमभिविश्वेषम व्यापयामः पाठयामः किंकृत्वाभिरश्वांपत्न्यादीनामनाधि तद्वारतया अनिषिद्धद्वारत्वेनतस्यराज्ञोऽन्तपुरे निविश्य । प्रहःशब्दकर्म त्वाद्गतिबुद्धीतिअयन्तकर्तुरर्यन्तत्वेकर्मत्वम् ॥ ४१ ॥

पीयूषधारामधुराभिरन्तस्तासांरसोद्वन्वतिमज्जयामः । रम्भादिसौभाग्यरहःकथाभिः काव्येन काव्यं सृजताऽऽहताभिः ॥ ४२ ॥

नर्मंताचिव्यमपिकुर्मइत्याह ॥ पीयूषेति ॥ वयं रम्भादीनामप्सरसां सौभाग्यंपुरुषवशीकरणादिशक्तिस्तस्यरहस्यंतस्यकथाभिःसंभोगगोष्ठीभिः सुरतान्तरगोप्यकथाभिस्तासांनलस्त्रीणामन्तर्हृदयंरसोदन्वति शृङ्गारस मुद्रे निमज्जयामोनिमग्नीकुर्मः किंभूताभिः पीयूषधाराअमृतप्रवाहस्त स्याःसकाशादमधराभिरन्यूनाभिस्तथाकाव्यंप्रबन्धविशेषंसृजतोत्पादयताकाव्येनशुक्रेणआदृताभिःकाव्येप्रतिपादिताभिःउदन्वतिउदन्वानुदधावेति साधुः । तत्रनिमज्जनंयुक्तम् । रहःसुरतगोप्ययोरितिविश्वः ॥ ४२ ॥

काभिर्नतत्राऽभिनवस्मराज्ञा विश्वासनिक्षेपवणिक्क्रियेहम् । जिह्रेति यन्नैवकुतोपितिर्यक्कश्चित्तिरश्चस्त्रपतेनतेन ॥ ४३ ॥

तस्यविश्वासत्वं वदन्नादेशार्हत्वमाह ॥ काभिरिति ॥ तत्रनलान्तःपुरेकाभिःसुन्दरीभिरहंपक्षीअभिनवाऽतिगोप्यास्मराज्ञातस्याविश्वासेननिक्षेप वणिक्न्यासनिक्षेपवणिक्नक्रियेअपितुसर्वाभिरपिकृतःकयाबारबकामरह स्यंमयिनक्षिप्यतइत्यर्थः । तत्रहेतुर्यद्यतोहेतोस्तिर्यक्पत्न्यादिकुतोपि क स्मादपि प्राणिनोनैवजिह्रेतिलज्जते तेनकारणेनकश्चित्कोपिप्राणीतिर श्चोपिसकाशान्नत्रपतेलज्जते ऽतस्ता निर्लज्जाः सत्योमदग्रेअतिगोप्या अपिकामगोष्ठीः कुर्वन्तीतिभावः । अन्यदपिगोप्यंविश्वासयोग्येवणिजिनि क्षिप्यते ॥ ४३ ॥

वार्ताऽपि सा सत्यपि मान्यमेति योगादरन्ध्रे हृदि यांनिरुन्धे । विरञ्चिनानाननवादधौतसमाधिशास्त्रश्रुतिपूर्णकर्णः ॥ ४४ ॥

तासांपरिहासोक्तमपिवचोनान्यस्मैकथयामीत्याह ॥ वार्त्तेति ॥ असत्यम पिअलीकापिसापरिहासवार्त्तापरिहासकथापिअन्यस्मैनेतिमन्यस्मैनकथया मीत्यर्थः साकाअन्यस्मै अरिखेदवहितेद्दियोगादुपायेनअनुग्रहादित्यर्थः । यांवार्त्तांनिरुन्धेनितरसावृणोमि। ध्यानादिसंकल्पाद्दोषरहितेद्दौदिधा सद्दोवमेवान्तःकरणमन्यस्मैअन्यथावार्त्तांकथयतिशुद्धन्तःकरणंतुध्यानादि नानिर्दोषमतोनकथयामीतिभावः।वार्त्तापिअन्यस्मैसिद्धिर्वृणान्यद्लीकाप्य न्यस्मैनिक्षिसुतसत्येतिद्योतनार्थकमपिशब्दः । दुष्टप्रयुक्तावालोजनहिंतार्थैव वमीयापिअवाच्यलेसरन्धादेवपहिर्निर्गतःसंभाव्यतेद्दंतुअरन्ध्रनथयाऽस तीमुसटापिकामैथुनादियोयावोरन्ध्रस्यामेदृह्याप्यन्यंपुरुषंनैतीत्यस्युक्तिः । योगवस्यमेवाह।विरिंचेन स्रणोनानाननानिमत्यारिसुखानितरकलोवादो पद्मनंतेनयोत पवित्रीकृतंतनापिशाक्त योगशास्त्रंतस्यश्रुतिः श्रवणंतेनपू र्णांकर्णौयस्य योगयाज्ञापिश्रुतवक्ते ति वायोगिनोहियत्रकुत्रापिनवल्प न्ति तथात्रशास्त्रपदेशादहमपित्वमपिवयःसंधिमासाविश्वासार्हमपिवि श्वयकामगोष्ठींकुर्वितिभावः । कर्णेस्वरितेत्स्वाकृतु ॥ ४४ ॥

नलाश्रयेणत्रिदिवोपभोगं तवानवाप्यं लभते व
राऽन्या । कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं
दुर्लभमम्बुजिन्या ॥४५॥

अतिशयितमभिलाषमुत्पादयितुंनलप्राप्तेर्दुःखत्वमाह ॥ नलेति ॥ हेभैमितवत्वयाअनवाप्यंदुष्प्रापमस्मत्कर्तृकापकवीजनादिदेवादिरूपंत्रि दिवोपभोगंनलाश्रयेणकृत्वाअन्यानायिकाअमरपिलभते बतखेदे हाहा कष्टंप्राप्यते । वर्तमानसामीप्येलट् । प्राप्नोतिकुलवह्नमत्वादितिदा । केव अम्बुजिन्याकमलिन्यादुर्लभं दुष्प्रापंज्योत्स्नोत्सवंचन्द्रिकाजन्यविकासादि रूपंमहोत्सवमिन्दुपरिग्रहेणचन्द्राङ्गीकारेणकुमुद्वतीयथालभतेअन्यस्या अनर्हत्वादेवमेखेदःस्वभोगसिद्धौ नलपरिग्रहस्त्वयासंपाद्यइत्यर्थः। नहि तविनावयमन्यंभजामइत्यर्थः ॥ तवकर्तृयोगेकृत्यानामितिकर्तरिषष्ठी । अम्बुजिन्याखलर्थयोगेषष्ठीनिषेधात्कर्तरितृतीया ॥ ४५ ॥

त्वन्नैषधानूढतया दुरापं शर्मत्वयाऽस्मत्कृतपाट

जन्म । रसालवन्या मधुपानुविद्धं सौभाग्यमप्राप्तवसन्तयेव ॥ ४६ ॥

प्रकृतमुपसंहरन्नाह ॥ तदिति ॥ ततस्मात्त्वयानैषधेननलेनअनूढतयाअपरिणीतत्वेनअस्माभिःकृतंयच्चाटुप्रियवचनं तस्माज्जन्मयस्यतत्शर्मसुखंदुरापंदुष्प्रापंनतस्याश्रयेणैवत्वयापि अस्मत्प्रियवचनजनितंसुखंप्राप्यंनान्यथेतिभावः । कयाकिमिवअप्राप्तवसन्तया रसालवन्यासहकारवाटिकयामधुपैर्भ्रमरैरनुविद्धं कृतंसौभाग्यंमकरन्दास्वादभाङ्कारगुञ्जनादिलक्षणमिवयथादुष्प्रापं पूर्वश्लोकेअम्बुजिनीदृष्टान्तेनसर्वथादुष्प्रापत्वंसूचितमिदानीमाम्रवनीदृष्टान्तेनकालान्तरेप्राप्यतेइतिसूच्यते । खलयोगेनलोकेतिषष्ठीनिषेधः ॥ ४६ ॥

तस्यैव वायास्यसि किं न हस्तं दृष्टं मनःकेन विधेः प्रविश्य । अजातपाणिग्रहणाऽसि तावद्रूपस्वरूपातिशयाश्रयश्च ॥ ४७ ॥

तत्रनलप्राप्तिसंभावनायामधैर्यंनकर्तव्यमित्याह ॥ तस्येति ॥ त्वंतस्यैवनलस्यैववाहस्तंकिंनप्राप्स्यसिअपितुएवमपिसंभाव्यतेसर्वथानलंनप्राप्स्यसीतिनिश्चितुंनशक्यतइतिपूर्वत्रापरितोषद्योतकोवाशब्दः । निश्चयाभावः कथमतआह । केनपुरुषेणविधेर्ब्रह्मणोमनोऽन्तःकरणंप्रविश्यदृष्टंज्ञातं भैस्यानलोनप्राप्स्यतइतिअपितुनकेनापिएवंसतिकदाचित्तत्प्राप्तिसंभावनापीत्याह । तावदादौ त्वंनजातंपाणिग्रहणंविवाहोयस्याःसाएवंभूतासिवर्तसे प्रथममेवनैराश्यंनकर्तव्यमित्यर्थः । ननयोग्यताभावश्चेत्तत्प्राप्तिःकथंस्यादित्याशङ्क्याह । रूपस्यलावण्यस्यस्वरूपेणैवअलंकारमन्तरेणैवस्वाभाविकोविषयस्तस्याश्रयःस्थानमप्यसि सहजसौन्दर्येणनलप्राप्तिरपितवसंभाव्यतइतिभावः ॥ ४७ ॥

निशा शशाङ्कं शिवया गिरीशं श्रिया हरिं योजयतः प्रतीतः । विधेरपि स्वारसिकः प्रयासः परस्परं योग्यसमागमाय ॥ ४८ ॥

स्वरूपत्वात्तस्यानलप्राप्तिं दृढयति ॥ निशेति ॥ निशारात्र्याशशाङ्कंच

तितवनात्सोवर्णाकर्णाभ्यांपीताइवचतरत्वेननमयाश्रुतास्यगेव। किमि तिनश्रुताइत्यतआह।कस्मिन्सति। अस्य ब्रह्मणश्चक्रिणोरथस्यचक्रेसंक्री डतिकूजतिसतिरथाङ्गकूजनेनसम्यग्नाकर्णीतिभावः।यदिमिश्रयेनावक्ष्यत् तदास्वतएवकार्यसिद्धेस्तदर्थंस्वस्मिन्सादराभविष्यदितीवशब्दप्रयोगः। च क्रिचक्रं हंससमूहइतिकश्चित्। युग्येतद्वहतीतियत्। संक्रीडतिसमोऽकूज नेइतिप्रतिषेधाच्छता ॥ ५० ॥

अन्येन पत्या त्वयि योजितायां विज्ञत्वकीर्त्या गतजन्मनोद्य। जनापवादार्णवमुत्तरीतुं विधा विधातुःकतमातरीःस्यात् ॥ ५१ ॥

ब्रह्मणःस्ववचनान्यथाकरणेबाधकमाह ॥ अन्येनेति ॥ वाऽथवान्नि श्रयेनावात्वयिअन्येननलातिरिक्तेनपत्याभर्त्रायोजितायांसत्यांविज्ञत्त्वकी र्त्यासर्वज्ञत्वयशसैवगतसतिकान्तंजन्मयस्यथेनवाएवंविधस्यविधातुर्जना पवादएवार्णवस्तंसर्वज्ञेनब्रह्मणाइदमनुचितंकथमकारीतिलोकापवादस मुद्रमुत्तरीतुंकतमाविधाप्रकारःतरीर्नौकास्यात् अपितुनकापीत्यर्थः।सकले नापिजन्मनायत्सर्वज्ञत्वंब्रह्मणार्जितंतदेकस्मात्त्वान्यथाकरणेतदैवगमि ष्यतीतिभियाऽनलेनैवयोजनीयेतिभावः।समुद्रं तरीतुंकाचिन्नौर्भवति जना पवादार्णवंतरीतुंनकापीतिभावः। स्त्रियांनौस्तरणिस्तरीरित्यमरः। उत्त रीतुंवृतोवेतिदीर्घः।तरन्त्यनयातरीरवितृस्तृतन्त्रिभ्यईः ॥ ५१ ॥

आस्तां तदप्रस्तुतचिन्तयाऽलं मयासितन्विभ्र मितातिवेलम्। सोहंतदागःपरिमार्ष्टुकामस्तवे प्सितंकिंविदधेऽभिधेहि ॥ ५२ ॥

अभिप्रायंज्ञातुमुपसंहरन्नाह ॥ आस्तामिति ॥ हेभैमितन्नलवर्णनंतद्यत ष्णोत्वप्रतिपादनंवाऽऽस्तांतिष्ठतुनकर्तव्यमित्यर्थः।यतोऽप्रस्तुतस्यचि न्तयाकथयाऽलंनिष्प्रयोजनत्वात्। हेतन्विमयात्वमतिदूरानयनादति वेलंभृशंभ्रमितासि सोहंतदागोऽपराधंपरिमार्ष्टुकामोपनेतुकामःसंस्तवकि मीप्सितंकंमनोरथंविदधेकरोमिअभिधेहिब्रूहि अप्रस्तुतचिन्तयेतिवारणा र्थयोगेतृतीया ॥ ५२ ॥

इतीरयित्वा विरराम पत्त्री स राजपुत्रीहृदयं बुभुत्सुः। ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः ॥ ५३ ॥

इतीति ॥ राजपुत्र्याभैम्याहृदयंनलेनुरागोविद्यतेनवेतिमनोबुभुत्सुर्जिज्ञासुःसपत्रीहंसइतिपूर्वोक्तमीरयित्वोक्त्वाविररामतूष्णीमभूत् ।ननुनलानुरागस्त्वयिविद्यतेत्वमपिनलेनुरक्ताभवेति प्रकटंकिमितिनोक्तवानित्यतआह। हियस्माद्गभीरेगाम्भीर्ययुक्तेह्रदेजलाशयेगूढाभिप्रायेहृदिचाऽवगाढेआलोडितेज्ञातेचसतिसन्तःपण्डिताःकार्यावतरंकरणीयंतदुपायंकार्यस्यप्रस्तावंचशंसन्तिकथयन्तिगम्भीरंह्रदमनालोड्यनोत्तरीतव्यमित्युत्तरणमार्गंयथानकोपिकथयतितथाआशयमविज्ञायबुधस्तदग्रे कार्यविशेषप्रस्तावंनकरोति अतस्तदभिप्रायंज्ञात्वातस्यांनलानुरागप्रकाशनंकर्तव्यमितिनलानुरागमप्रकाश्यैवतूष्णींबभूवेत्यर्थः । राजपुत्रीतिहृदयस्यगूढाशयत्वम् । विररामेतिव्याङ्परिभ्योरमइतिपरस्मैपदम् । हृदयंनलोकेतिषष्ठीनिषेधः ॥ ५३ ॥

किंचित्तिरश्चीनविलोलमौलिर्विचिन्त्य वाचं मनसा मुहूर्तम् । पतत्रिणं सा पृथिवीन्द्रपुत्री जगाद वक्त्रेण तृणीकृतेन्दुः ॥ ५४ ॥

किंचिदिति ॥ सापृथिवीन्द्रपुत्रीभैमीमुहूर्तंक्षणमात्रंमनसाऽन्तःकरणेनवाच्यंवचनंविचिन्त्यविचार्यतंपतत्रिणंहंसंजगाद किंभूतावचनविचारणेक्रियमाणेकिंचिदीषत्तिरश्चीनोवक्रोविलोलश्चञ्चलोमौलिर्मस्तकंयस्याःसातथासहजसौन्दर्येणाभिलाषसिन्धाशयाअतिप्रसन्नत्वेनचवक्त्रेण मुखेनतृणीकृतोन्यक्कृतइन्दुश्चन्द्रोयया । तिरश्चीनंविभाषाञ्चेरदिक्स्त्रियामितिस्वार्थेखः । पुत्रीतिशार्ङ्गरवादिपाठान्ङीन् ॥ ५४ ॥

धिक् चापलेवत्सिमवत्सलत्वं यत्प्रेरणादुत्तरली भवन्त्या । समीरसङ्गादिव नीरभङ्ग्या मया तटस्थत्वमुपद्रुतोऽसि ॥ ५५ ॥

आत्मनोनुचितकारित्वमाह ॥ धिगिति ॥ हेहंसचापलत्वविषये यद्व

ऽस्मिन्वत्सलत्वं वत्सस्य बालस्य भावो वत्सिमा बाल्यं च तेन वत्सलत्वं सस्नेह त्वं बालत्वेन चापलविषये यत्प्रीतिमन्नवचापलाङ्गीकरणमिति यावत् तद्धि खलु मित्वामनुचितं यतो यच्चापलस्य प्रेरणान्नियोगात्तदधीनतया तत्तरलीभवन्त्याऽतिशयेन चञ्चलीभवन्त्या मया पक्षाक्रमित्वात्तटस्थ उदासीनस्त्वमुपद्रुतः पीडितोऽसि कयेव समीरसङ्गाद्वायुसम्बन्धाच्चञ्चलीभवन्त्या नीरभङ्ग्येव तरङ्गभङ्ग्येव तरङ्गरूपया उदकरचनया तटस्था कूलस्था यथोपद्रूयते निरपराधा पक्षाक्रमित्वा मयापीडितोऽतोऽहमनुचितकारिण्येवेति भावः। वत्स स्नेहात्पुत्रादिष्वादिमनिच् तस्मादेव वत्सांसाभ्यामित्यभिलाषवति लच् तथा वत्सलशब्द इति क्षेत्रेवानुद्यते ॥ ५५ ॥

आदर्शतां स्वच्छतया प्रयासि सतां स नावत्खलु दर्शनीयः। आगः पुरस्कुर्वति सागसं मां यस्यात्मनीदं प्रतिबिम्बितं तु ॥ ५६ ॥

आत्मनिन्दापूर्वकं हंसस्तुतिमाह ॥ आदर्शेति ॥ हे हंस दर्शनीयोऽतिरमणीयस्त्वं खलु निश्चयेन स्वच्छतया निष्कपटतया कृत्वा सतां साधूनां तावत्प्रथममादर्शतां दृष्टान्ततां प्रयासि प्राप्नोषि किमादर्शवदयं निष्कपट इति प्रश्ने त्वमेव प्रथमं दृष्टान्तयोग्योऽसीत्यर्थः। अन्यच्च निर्मलतयादर्पणात्मकोऽपि दर्पणोऽपि सतामवलोकनीयः श्रीकामैः प्रातरवलोक्यते च। निष्कपटतामादर्शत्वं च समर्थयते पश्चाल्लग्नत्वात् आगमं सापराधां मां पुरस्कुर्वति कथास्मिन्नित्यादिवचनान्मां प्रति प्रियभाषिणि यस्य तवात्मनि स्वरूपे इदमागस्तटस्थपीडनलक्षणो ममापराधः प्रतिबिम्बितः सोऽहं कदागस्त्वादिषु वचनात्तन्मयामदपराधः स्वीयत्वेनैव स्वीकृत इति सतां स्वभावो यदन्यापराधं स्वात्मन्यारोपयन्ति खलु किमयं सादर्शतां प्रयासि किन्तु ततोऽप्यधिकः। आदर्शे पुरः स्थापिते यथास्थितं वस्तु प्रतिफलति त्वयि तु सापराधे मयि तत्र निपुरःस्थिते निरपराधलक्षणाय मं प्रतिबिम्बितो न तु सापराधां च मो त्वाद्दर्शादधिकस्तथा दादर्शरूपोऽसीति ॥ ५६ ॥

अनार्यमप्याचरितं कुमार्या भवान् मम क्षाम्यतु सौम्य तावत्। हंसोऽपि देवांशतयासि वन्द्यः श्रीवत्सलक्ष्मेव हि मत्स्यमूर्तिः ॥ ५७ ॥

ननुतवकोमनोरथस्तंवदेत्यतआह ॥ मनस्त्विति॥हेहंससमनोरथःकण्ठपथंकण्ठमार्गवचनगोचरंकथंकेनप्रकारेणयातुअपितुनकेनापिसकस्तुपुमर्थं अभिलाषंमनोन्तःकरणंजातुकदाचिदपिनोज्झतिनत्यजतिअन्तःकरणस्याधोदेशस्थानित्वात्कण्ठस्यचोर्ध्वदेशत्वादित्यर्थः। अधरथोपिगर्तपातादिनाप्यधःपन्थानंनावतरति सर्वत्रापिमनसोगतिसाधनत्वादभिलाषोपिमनसोरथः। अथचयोवक्तुमपिनशक्यतेसकर्तुं कथंशक्यतइतिदुःसाध्यत्वंतदेवाह नामसंभावनायामलज्जानिर्लज्जासाध्यमसाध्यमित्यज्ञानासतीकाबालाद्विजराजस्यचन्द्रस्यपाणिनाग्रहणाभिलाषंग्रहणाभिलाषंकथयेदपितुहस्तेनचन्द्रंगृहीतुंममवाञ्छेतिकापिनकथयति हस्तेनचन्द्रप्राप्तिर्यथाऽशक्यातथामन्मनोरथप्राप्तिरितिभावः। द्विजेतिसंबुद्धिः। राज्ञश्चन्द्रस्येतिवा अथचस्वाभिलाषंकथयद्विजानांराजासम्राटनलस्तद्विवाहेच्छाकाकथयेदपितुनकापि नलविवाहेच्छाममेतिकथंकथयेयमितिभावः। अथचसलज्जत्वाद्वक्तुंनशक्यतइत्याह हेद्विजराज काबालापाणिग्रहेविवाहेऽभिलाषमिच्छांनिर्लज्जासतीप्रकटयेदपित्वेवंमौढ्यैवकथयतिनबालेत्यर्थः ॥ ५९ ॥

वाचंतदीयां परिपीय मृद्वीं मृद्वीकया तुल्यरसां स हंसः। तत्याज तोषंपरपुष्टघुष्टे घृणां च वीणाक्वणिते वितेने ॥ ६० ॥

वाचमिति ॥ सहंसोमृद्वीकयाद्राक्षयातुल्योरसोमधुररसोयस्यास्तांमृद्वींकोमलांतदीयांभैमीसंबन्धिनींवाचंपरिपीयाऽऽकर्ण्यपरपुष्टानांकोकिलानांघुष्टेकूजितेतोषंहर्षंतत्याज तथावीणाक्वणितेवीणानिनादेपिघृणांजुगुप्सांवितेनेचकार पिककूजितवीणाक्वणिताभ्यामपितद्वाणीकोमलासरसाचेतिभावः।।मृद्वीकागोस्तनीद्राक्षेत्यमरः।। मृद्वीकायोतोगुणवचनादितिङीषभावात्संज्ञायांकनिकेणइत्यस्यसंज्ञापूर्वकविधित्वाद्ध्रस्वत्वाभावः। घुषइत्यत्रज्ञानार्थत्वाद्घुषिरविशब्दनइतिनिषेधाभावादिणनिषेधः । घोषिमनिटंकेचित्पठन्ति ॥ ६० ॥

१५६ मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा तस्यांसमाकुञ्चितवाचिहंसः। तच्छंसितेकिंचनसंशयालुर्गिरामुखाम्भोजमयं युयोज ॥ ६१ ॥

मन्दाक्षमिति ॥ अयं हंसस्तु त्वं सितेतस्यावचनेऽप्रकटत्वलोकत्वादेव किंचनसंशयालुः संदिहानः सन् मुखाम्भोजं प्रश्नसं मुखद्विरावावायुयोजयद् तिस्मेत्यर्थः । कस्यां सत्यां मन्दाक्ष वालज्जया मन्दाक्षरूपाक्षरमुद्रा वर्णवि न्यासो यस्यां क्रियायां सद्यथा वक्त्वा समाकुञ्चिताग्र्यग्रालूमीभूतायां सत्यां मुखाम्भोजं प्रश्नं सा वचनैश्चेति समासः ॥ ६१ ॥

करेण वाञ्छेव विधुं विधर्तुं यमित्थमात्थाऽऽदरि णीतमर्थम् । पातुं श्रुतिभ्यामपि नाधिकुर्वे वर्णं श्रुते वर्णइवान्तिमः किम् ॥ ६२ ॥

करेणेति ॥ हे भैमि करेण विधुं चन्द्रं विधर्तुं गृहीतुं वाञ्छेव स्पृहेव नतु तात्त्विकी स्पृहा इत्यसने नैव गोष्यां कारेण आदरिणी आदरयुक्ता अदरिणी निर्भया अकम्पा वा यमर्थं प्रयोजनमात्थ ब्रूषे अहं तमर्थं श्रुतिभ्यां कर्णाभ्यां पातुं सादरं श्रोतुमपि किं नाधिकुर्वे नाधिकारी भवामि कर्तुं यद्यपि न शक्नुयां तथापि श्रोतुं शक्त एवेत्यपिशब्दार्थः । कर्तुमप्यधिकारी वा किं पुनः श्रोतुमित्यपिशब्दार्थो वा अन्तःकरणेन ज्ञात एव श्रोतुमपि नाधिकुर्वे ऽपि तु अधिकुर्वे एवेति वा कः किमिव अन्तिमो वर्णः शूद्रः श्रुतेर्वेदस्य वर्णमक्षरमिव वेदाक्षरश्रवणे शूद्रस्याधिकारो नास्ति तथा न मनेति भावः । आत्थेति भूतेऽपि वर्तमानसामीप्य इति वर्तमान लट् प्रत्ययः । अन्तिम इति अन्ताच्चेति वक्तव्यादिमन् ॥ ६२ ॥

अवाप्यते वा किमियद्भवत्या चित्तैकपद्यामपि विद्यते यः । यत्रान्धकारः किल चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥ ६३ ॥

अवाप्यत इति ॥ हंसो न चन्द्रधारणवद्दुष्प्रापत्वं यदुक्तं तत्र किंचिदित्याह । यश्चित्तैकपद्यामन्तःकरणैकमार्गे ऽतिसूक्ष्ममार्गेऽपि विद्यते स भवत्या अवाप्यते प्राप्यते वा निश्चये चन्द्रधारणदृष्टान्तेन यस्त्वयार्थस्य दुष्प्रापत्व मियत् किमियद्गौरवं किमर्थं तत्र न कार्यमित्यर्थः । अथैवं परांस्वगोचरो विष यः सुखेन ज्ञायते यद्दीपनं तस्य किमर्थं मया ज्ञात इत्यर्थः । एकमार्गस्थितं व स्तु सर्वैरपि ज्ञायत एतद्दृष्टान्तेन द्रढयति । किलेति । श्रुतौ यत्र ब्रह्मणि चेत सोऽपि अन्धकारः “यतो वाचो निवर्तन्ते अप्राप्य मनसा सह” इति श्रुतेर्यन्मनोगोच

रोमभवतितदपिस्वप्रकाशत्वज्ञजिह्मेतरैरनलवैरवाप्यंप्राप्यतइत्यर्थः।किं पुनर्मनोगोचरस्ततश्चसुमदर्शिनामधातुत्वाभिप्रायोज्ञातएवत्वयाकिमिति गोप्यतइतिभावः। वर्त्मन्येकपदीतिच,जिह्मस्तुकुटिलेलस,इतिचामर.। एकपदीसञ्ज्ञासुपूर्वस्येत्यन्त्यलोपेपादोन्यतरस्यामितिङीपिपद्‌आदेशः। अवाप्यंशकिलिङ्‌चेतिकृत्यः॥ ६३॥

ईशाणिमैश्वर्यविवर्तमध्ये लोकेशलोकेशयलोकम-
ध्ये। तिर्यञ्चमप्यञ्चमृषानभिज्ञरसज्ञतोपज्ञस
मज्ञमज्ञम्॥ ६४॥

ननुत्वमज्ञानत्वेवाभिमानेन ज्ञातमितिवदसीत्याशङ्कायामाह। ईशेति। ईशस्येश्वरस्याष्टविधैश्वर्यमध्येऽखिलमलक्षणांयदैश्वर्यंतस्यविवर्तःसाक्षिकोऽन्यथाभावस्तस्यतोणिमैश्वर्यमेवजातोनमध्येयस्य।सत्त्वस्तुष्ट्टिईङ्कृशोदरित्वंलोकेशोत्रस्मात्स्यलोकेशयालोकवर्तिनो लोकाजनास्तेषांमध्येऽज्ञंमूर्खंतिर्यञ्चमपिमामेवंभूतमञ्जजानीहिपूजयवा।किंभूतंमांमृषाऽसत्यंतस्यानभिज्ञाज्ञातारःसत्यवादिनोरसज्ञाःसहृदयास्तेषामुभयेषांभावस्ततासत्यवादिता सहृदयताचतद्विषयेऽपज्ञाऽऽद्यज्ञानं यस्यएवंविधश्चासौसमज्ञश्चसकलज्ञस्यसर्वपर्यायत्वात्सर्वज्ञस्तमेवंविधस्वरूपं मामज्ञमलीकभाषिणमहृदयं मूर्खंचयथातवेज्ञातथाजानीहीत्यर्थः। सत्यवादिनांसहृदयानांसर्वज्ञानाञ्चमध्ये प्रथमगणनीयोहंमिथ्याभाष्यहृदयोमूर्खश्चकथंस्यामितिभावः।मृषानभिज्ञासत्यवादिनीरसज्ञाजिह्वायेषान्तेषांभावःसत्यवादिता।उपज्ञायतइत्युपज्ञाआद्यंज्ञानंमृषानभिज्ञरसज्ञतायाउपज्ञामृषानभिज्ञरसज्ञतोपज्ञंतेनसमज्ञाकीर्तिर्यस्य एवंसत्यवादिताप्रथमंकस्मादुत्पन्नेति जिज्ञासायान्तस्याःप्रथमोत्पत्तिकारणत्वेन अहमेवख्यातइत्येवंरूपोपज्ञमांजानीहीति वा। लोकेशयेतिअधिकरणेशेतेरित्यचिशयवासवासिष्विति अलुक्। रसज्ञतोपज्ञमित्यत्रपतंआतश्चोपसर्गइत्यङितउपज्ञोपक्रममित्यादिनानपुंसकत्वम्। समैःसर्वैर्ज्ञायतइतिसमज्ञाकीर्तिः। घञर्थेकविधानमितिकः॥ ६४॥

मध्ये श्रुतीनांप्रतिवेशिनीनां सरस्वतीवासवती
मुखे नः। ह्रियेत्र ताभ्यश्चलतीयमद्धा पयान्तस
रसंगगुणेन नद्धा॥ ६५॥

सत्यवादित्वमेवप्रकटयति॥मध्यइति॥ हेभैमिमोत्साकंमुखेवर्तमानास रस्वतीआस्तीप्रतिवेशिनीनांलिकटगृहवर्तिनीनांश्रुतीनांवेदानांमध्येवास वतीस्थितिमतीयस्मातस्मात्मध्यःश्रुतिमध्योक्तिर्येवुवलज्जयवा्ग्मातिश्वयेनञ पथात् अपथंकुमार्गंप्राप्य त्वयस्तोपेपथ्यती नचलतिनव्यभिचरतियत स्ससतासहसङ्गःसम्बन्धःसएवगुणस्तेनबद्धासंवद्धा सत्संगेनवद्धाकाचिद्यथा नव्यभिचरति वेदसाहचर्यानांहास्यपिसत्यैवेत्यर्थःसत्येत्वद्वांजसाहचर्यंअ पथान्नुमार्गात्प्रतिनचलतिनगच्छतिकिन्तु समीचीनमार्गात्प्रत्येवगच्छ तीतिवा लिङ्गमभिध्यंलोकाअयस्वाक्षिकृस्येत्यपथंनपुंसकमित्येतच्छ्रोय ते अथवाअद्धापथादिस्येकमेवपदम् अद्धापथात्सत्यमार्गान्नचलतीतिवा अथवसुनघोभनः संगःसम्बिधर्यस्यतेनगुणेनदृढयारसनयावद्धाकाचिद्यथा नचलतितथैयमपि मद्वाणयाःश्रुतयःप्रतिवेशिन्योभवन्तिअतएवत्वत्सदृश मेवव्यवहरंतिनान्यथा ॥ ६५ ॥ हिंदि समुद्देश्य.

पर्यङ्कतापन्नसरस्वदङ्को लङ्कापुरीमप्यभिलाषि चि त्तम् । कुत्रापिचेद्वस्तुनि न प्रयाति तदप्यवेहि स्वशये शयालुम् ॥ ६६ ॥

स्वनभिलाषकथयेतिप्ररोचनार्थंस्वसामर्थ्यंद्योतयति ॥ पर्यंङ्केति ॥ हे भैमितेचित्तंमनःलङ्कांपुरीमपिअभिलाषिदृष्टुगन्तुंवा अभिलाषुकंसत्कुत्रा पिअन्यत्रकस्मिंश्चिद्वस्तुनि ललङ्कायाः सकाशाद्दतितरांदुष्प्रापेवस्तुनिविषयेचेन्न यातिगच्छति स्वंतदपितदुभयमपिस्वशयेस्वहस्तएवशुयाविद्यमानमवेहि जानीहि कुत्रापिवस्तुनिअभिलाषि तवचित्तं । लङ्कायांविद्यमानव स्तुप्राप्त्यर्थंसकामपिप्रयातितदपीतिवायोजना दुष्प्रापवस्तुनःसाधकोह मेवेतितत्कथयेतिभावः किंभूतांलङ्कांसरस्वतः समुद्रस्यांकोमध्यःपारतःस र्वेदिशुअङ्कतांचिह्नतांपरिवेष्टनमापन्नप्राप्तःसरस्वदङ्कोयस्याःसातां पर्यं कतांमंचतां समुद्राङ्केसुखेनतिष्ठतीत्यर्थः पर्यंकतांयोगपट्टत्वंप्राप्तःसमु द्रोकश्चिद्भूयस्याइतिवा पर्यंकतांवृत्तीत्वंवासमुद्रमध्येतिष्ठतीत्यर्थइतिवा सर्वथालङ्कायादुष्प्रापत्वंसूचितं यात्वेवंविधादुष्प्रापातामपिहस्तगताम वेहिकिंपुमरन्यां कुत्रापिकोःपृथिव्याःत्राणंत्राःतान्नाप्नोतीतिकुत्रापृथ्विप् वेतिक्षिप्तस्मिन्राजलक्षणोवस्तुनिवा पर्यङ्केतिविकल्पस्वाक्षस्वामाघःअ

पि:पदार्थेतिसंभावनायांसमुच्चयेवा कर्मप्रवचनीयत्वात्कांकामितिद्वितीया अभिलाषस्यगम्यादिपाठाद्वा तदितिसावलङ्कावज्ञ वस्कतत् नपुंसकम नपुंसकेनेतिएकशेषःपाक्षिकमेकत्वंच ॥ ६६ ॥

इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी। चेतो न लङ्घामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ॥ ६७ ॥

इतीति।तेनपत्त्ररथेनपक्षिणाइतिपूर्वोक्तप्रकारेणेरितोक्ताह्रीणाभिलाषकथनप्रस्तावेनलज्जितास्वाभिलाषस्यप्रापकोऽहमिति तेनोक्तत्वाद्धृष्टा हृष्टाह्ययुक्ताविस्मितेतियावत् भैमीइतिबभाणअवोचत्इतिकिं मदीयंचेतो लङ्घांनकामयतेप्राप्नोतिअभिलषतीत्यर्थः अन्यत्रवान्यत्रकुत्रापिराजनिवा वचनेचैवसाभिलाषंअथचनलंनलनामानंराजानंकामयते तदतिरिक्तेन्यत्र वस्तुनिनैवसाभिलाषं इतिश्लिष्टमेवावोचत् । पतत्पत्त्ररथाण्डजाइत्यमरः।ह्रीणानुदविदेतिनिष्ठानत्वं अप्राप्यवस्तुप्रापकोऽहमितिहंसोक्तिंश्रुत्वाहृष्टाच रोमांचा ततश्चहृषेर्लोमहर्षविषयत्वाद्धृषेर्लोमोस्वित्यवेड्विकल्पःएवंसर्वत्र श्लेषंतिचेच्छित्यमेनेग्लहयायोरेवद्धिगुणवृध्योः प्रतिषेधात्कामयतइत्यत्र त्वनित्यत्वादप्रतिहतप्रसराणिङ्वृद्धिरितिध्येयम् ॥ ६७ ॥

विचिन्त्यबालाजनशीलशैलं लज्जानदीमज्जदनङ्गनागं । आचष्टनिस्पष्टमभाषमाणामेनां स चक्राङ्गपतङ्गशक्रः ॥ ६८ ॥

विचिन्त्येति ॥ चक्राङ्गसंज्ञकानांपतङ्गानांपक्षिणांशक्रःराजाहंसोनिस्पष्टंप्रकटमभाषमाणामेनां भैमींजगादोक्तवान् किंकृत्वाबालाजनस्यशीलं स्वभावएवदुर्लङ्घ्यत्वादतिगहनत्वाच्चशैलःपर्वतस्तंलज्जारूपायांनद्यांमज्जननङ्गःकामस्तद्रूपोनागोहस्तीयत्रएवंविधंविचिंत्यविचार्य कामपीडितोपिबालाजनोलज्जयाकामस्याद्यपूर्वंस्वाभिलाषंनकथयतीतिविचार्येतिस्पष्टवादनार्थमेनामाहस्मेत्यर्थःअथचपर्वतनद्यांहस्तीमज्जतीत्युक्तिः चक्राङ्गानानसौकसइत्यमरः ॥ ६८ ॥

नृपेणपाणि गृहणस्पृहेति नलेमनः कामयते म

मेति । आश्लेषि न श्लेषकवेर्भवत्याः श्लोकद्वयार्थः सुधिया मया किं ॥ ६९ ॥

नृपेणेति ॥ हेभैमिश्लेषकवेः पूर्वराजकनृपेणाणिग्रहणोमनवाञ्छेतिश्रम स्वरंसुसमनोनलमभिलष्यतीतिचश्लिष्टकवित्वकारिण्याभवत्यास्तवक्रमेण कामामवासा चेतोनलङ्घामयतइत्यादेः श्लोकद्वयस्यार्थोऽभिप्रायःसुधिया विदुषापिकेनचिन्नाश्लेषिनाज्ञातंसन्दमञ्जेनमयानाज्ञायीतिकिंवाच्यनृअथ नविदुषाश्लेषाद्विविवरणेपटुनामयानाज्ञायिकिमपितुज्ञातएव श्लिष्टार्थो प्रापसीतिभावःसुधियेतिपाठेस्वीयबुद्ध्यैवनत्वन्यबुद्ध्या ॥ ६९ ॥

त्वच्चेतसःस्थैर्यविपर्ययन्तु संभाव्यभाव्यस्मि तदज्ञएव । लक्ष्येहिबालाहृदिलोलशीले परापराद्धेषुरपिस्मरःस्यात् ॥ ७० ॥

यदिमनाभिप्रायोज्ञातएवतर्हित्वजांत्याजयित्वामांपुनः किमितिवा दयसीत्याशङ्क्याह ॥ त्वच्चेतसइति ॥ तुःपुनरर्थेअहंबालभावात्त्वच्चेतसःत वमनसःस्थैर्यविपर्ययंचाञ्चल्यंसंभाव्यतर्कयित्वापुनस्तवज्ञइवतवाभिप्रायम जानानएवभाव्यस्मि तदज्ञइतिपाठेश्लोकद्वयार्थस्याज्ञइतिवा एवकारइवा र्थेवाज्ञातोप्यर्थःकिमित्यज्ञातइत्युच्यतइत्याशङ्क्याह हियस्माद्बालत्वाद् वलोलशीलेचञ्चलस्वभावेबालाहृदिबालाहृदयलक्षणेलक्ष्येविषयेस्मरोपि दस्मीषदपराद्धेषुश्च्युतसायकःस्यात्भवेदितिसंभाव्यते कान्तस्यापिमनोभ वत्वात्तेनापियत्ज्ञातुंनशक्यतेतत्रान्यस्यकाकथा बालानांचित्तचाञ्चल्यान्म नाभिलषनिश्चयाभावादज्ञएवजातोस्मीतिभावःअतोनिश्चयार्थंपुनर्वादया मीत्यर्थः अथचबालानामल्पत्वात्कामबाणास्तथानपीडयन्ति यथातरुणी मामितितस्यच्युतसायकत्वंयुक्तंअन्योपिधानुष्कश्चञ्चललक्ष्येच्युतसायकोभ वति भाव्यस्मिभवामीतिधातुसंबन्धेप्रत्ययःअपिःसम्भावनायाम् ॥ ७० ॥

महीमहेन्द्रःखलुनैषधेन्दुस्तद्बोधनीयः कथमित्थमेव । प्रयोजनंसांशयिकंप्रतीक्षुक् पृथक्जनेनेव समाद्विधेन ॥ ७१ ॥

निश्चयाभावेमादृशेनराजाबोधयितुंशक्योनेत्याह ॥ महीति ॥ सनैषधेंदुः

निषधदेशोद्भवजनामासिन्दुरालहाद्भः खलुयस्मात्सद्यांसहेंद्रयतस्तस्मात्सद्विधेनविम्बास्येनपृथक्जनेनेवनीचजनेनेवमनसः इत्यमेवबालाहृदयच्छलत्वसमर्थनप्रकारेणासांप्रयिकंसंदेहपंन्वसंदेहलाभिलाषलक्षणंप्रयोजनंकार्यमित्यसेवस्रोवचार्यवाकथंबोधनीयःकेनप्रकारेणापनीयः यथा विम्बास्येनमूर्खेणाभयंत्वस्त्वाराद्योग्रेऽपिवार्यंयत्किंचिदुच्यतेतथामयानिश्चितंवक्तुंनशक्यतइत्यर्थः इत्यमेवबालयात्वयाहंयथाबोधितस्तथासमयाकथंबोध्यइतिवा पृथग्जनःस्तूलोनीचेमूर्खेचेतिविश्वःसद्यांसहेंद्रयसप्तमीतियोगविभागात्समासः षष्ठीसमासोवा गतिबुद्धीतिकर्मत्वेबोधनीयइति कर्मणिकृत्यः ॥ ७१ ॥

पितुर्नियोगेन यदृच्छयावा युवानमन्यंयदिवावृणीषे । त्वदर्थमर्थित्वकृतप्रतीतिः कीदृङ्मयि स्यान्निषधेश्वरस्य ॥ ७२ ॥

पूर्वोक्तमेवदृढयति ॥पितुरिति ॥ पितुर्नियोगेनाज्ञयानिजेच्छयावास्वेच्छयावात्वंयदिअन्यंनलव्यतिरिक्तंयुवानंतरुणंवृणीषेतर्हित्वदर्थंतुभ्यंत्वयामेमीपरिणेतव्येतिअर्थित्वकृतियाञ्चाकारिणिमयिनिषधेश्वरस्यनलस्य कीदृक्कीदृशीप्रतीतिर्विश्वासःस्यात् प्रतारकोयमितितस्यबुद्धिःस्यात्निश्चयंविनातस्याग्रेवक्तुंनयुक्तमित्यर्थः यदृच्छयदिवेति कीदृग्वेतिवाशब्दोयोजनीयःअर्थित्वकृतिजनःक्षिपितुक ॥ ७२ ॥

त्वयापिकिंशंकितविक्रियेस्मिन्नधिक्रियेवा विषयेनिधातुं । इतःपृथक्प्रार्थयसेतुयद्यत्कुर्वेतदुर्वीपतिपुत्रिसर्वम् ॥७३॥

संदिग्धेकार्येत्वयापिनाहंनियोज्यइत्याह॥त्वयेति।त्वयापिशङ्कितविक्रियेसंभावितवरांतरलक्षणविकारेऽस्मिन्विषयेविवाहलक्षणेनिधातुंनियोक्तुंकिंवाकिमितिअहंअधिक्रियेअधिकारीक्रियेअस्मिन्नधिकारेनाहंनियोज्यइत्यर्थःहेउर्वीपतिपुत्रित्वंइतोविवाहकार्यात्पृथक्अन्यत्यद्यत्प्रार्थयसेअहंतत्सर्वमपिकुर्वेसाधयेयंप्रार्थयसेकुर्वेइतिवर्तमानसामीप्येलट्॥७३॥

श्रवःप्रविष्टाइवतद्गिरस्ता विधूयवैमत्यधुतेनमू

दूर्धा। ऊचे ह्रियोपि स्थगितानुबन्धा पुनर्धरित्रीपुरुहूतपुत्री ॥ ७४ ॥

अवहेति। धरित्रीपुरुहूतपुत्री पृथ्वीन्द्रपुत्री पुनरूचे किंकृत्वा अवःकर्णप्रविष्टाकर्णोत्कगर्गताःस्ताःपूर्वोक्तावाचोःवैमत्येनअसंमत्याधुतेनकम्पितेनमूर्ध्ना विधूयेवनिरस्येवकिंभूतायाह्रियोलज्जायाअपिस्थगीकृतःअनुबंधोनुसंधानं यया अवःप्रविष्टाइवेतिकेचित् तदाप्रतिकूलत्वादश्रुताइतिइवेत्युक्तं अन्ये नापिकर्णप्रविष्टस्यकीटादेर्निराकरणार्थंशिरश्चालनंक्रियते यालज्जासर्वथा त्यक्तुमशक्यासापिस्थ्यक्ता त्यपिशब्दार्थः वैमत्यंदृढादिपाठात्भावेष्यञ् । कर्मधारयाद्वा स्वार्थेज्ञापकात्पूर्ववज्जिह्ववत्तत् ॥ ७४ ॥

मदन्यदानंप्रतिकल्पनाया वेदस्त्वदीयेहृदितावदेषा। निशोपिसोमेतरकान्तशङ्का मोङ्कारमग्रेसरमस्यकुर्याः ॥ ७५ ॥

दृष्टान्तद्वयेनपितृकर्तृकनलान्यपरिणयंसोकद्वयेननिराकरोति ॥ मदिति । ममअन्यस्मै नलव्यतिरिक्तायवरायपितृकर्तृकंदानंप्रतिदिश्यपितुर्नियोगेनेत्यादियाकल्पनाशङ्कातर्कःएषातावत्कल्पनात्वदीयेहृदिवेदइवप्रमाणभूताइतिचेत्तर्हित्वंनिशोपिसोमान्चन्द्रादितरेभ्यः कांतःप्रियस्तस्याःशंकाअस्यवेदस्यअग्रेसरंपुरोवर्तिनमोंकारंकुर्याःअंगीकुरु वेदस्याग्रेसरआदावोङ्कारोभवतिरात्रेश्चन्द्रादन्यःकांतोनतथामन्नलातिरिक्तोममेत्यर्थः नलकर्तृकंदानंवा अग्रेसरंपुरोग्रतोग्रेषुसर्तेरिति ठः अजाधदन्तमितिपूर्वनिपातमकृत्वाग्रशब्दस्यपरनिपातकरणंसमस्य कवचनेनविगृह्यएदंतस्वार्थे भूयंतदग्रेसरमित्यादयःप्रयोगाअग्रतः सरतिअग्रेएवेतिसमर्थनीयाः॥७५॥

सरोजिनीमानसरागवृत्तेरनर्कसम्पर्कमतर्कयित्वा। मदन्यपाणिग्रहशंकितेयमहोमहीयस्तवसाहसिक्यम् ॥ ७६ ॥

सरोजिनीति॥हे हंससरोजिन्याःकमलिन्याःमानसरागःअन्तःकरणानुरागस्तस्यवृत्तेःसद्भावस्यस्थितेःअर्केणसूर्यादन्येनसहसंपर्कंसंबंधमतर्कयित्वाअविचार्यतवेयंममान्येननलव्यतिरिक्तेनत्वत्पाणिग्रहः परिणयस्तच्छंकिता

सायत्तयनहीयोऽतीवमहत्त्वात्साहसिक्यंसाहसिकत्वंप्रह्वोश्चाश्रयैसूर्योतिरि
क्तःकान्तःकमलिन्याश्चेत्तर्हिनलातिरिक्तोममेतिभावःसहसाऽविचार्यैवर्त्त
तेसाहसिकःओजःसहोम्भसावर्त्ततइसिठक्ततोत्राह्मणादित्वात्ष्यञ्॥७६॥

साधुत्वयातर्कितमेतदेव स्वेनाग्नलंयत्किलसंश्र
यिष्ये। विनामुनास्वात्मनितुप्रहर्त्तुं मृषागिरं
त्वांनृपतौनकर्त्तुम् ॥ ७७ ॥

पुनरपिद्वितीयपक्षंनिराकरोति॥साध्विति। हेहंसएतत्त्वयासाधुसम्यक्
तर्कितंऊहितं किलउपहासे यत्स्वेनात्मनैवस्वेच्छयाअनलंनलादन्यंसंश्र
यिष्येकिलचेदित्यर्थेवानलादन्यंदेवंसंश्रयिष्ये तर्हितुपुनःअमुनानलेनवि
नानलप्राप्त्यभावेस्वात्मनिविषयेस्वप्रहारंकर्तुंअनलमग्निमेवसंश्रयिष्ये न
तुत्वांनृपतौनलेमृषागिरंमिथ्यावाणीकंकर्तुं नलादन्यंसंश्रयिष्ये त्वञ्चेत्तां
नांगीकरोषितर्हिअग्नावात्मघातंकरिष्यतीतिस्यपुरस्तात्कथयेतिभावःस्वा
त्मनीतिकर्मोविवक्षयांसप्तमी ॥ ७७ ॥

मद्विप्रलभ्यं पुनराहयस्त्वां तर्कःसकिंतत्फलवा
चिमूकः। अशक्यशङ्काव्यभिचारहेतु र्वाणीनवे
दायदिसन्तुकेतु ॥ ७८ ॥

एतद्वचनंप्रतारणामात्रंनतुसत्यमतआह॥मदिति। हेहंसयस्तर्कस्त्वांपु
नर्मद्विप्रलभ्यंमयाप्रतारणीयंआहसतर्कः तस्यप्रतारणस्यफलंप्रयोजनंत
द्विषयिण्यांवाचिकिंमूकः प्रतारणस्यफलंकिमितिनवदति नवदतिचेत्त
र्ह्यपेयतस् ततश्चअशक्याशंकायेषामेवंविधाव्यभिचारहेतवोऽज्ञानादयोय
स्याःव्यभिचारकारणंशङ्कितुंनशक्यते एवंविधाव्यभिचारिणीवाण्यदिवेदा
दिवेदवत्प्रमाणभूतानभवेयुस्तर्हिकेपुनर्वेदाःसंतु अव्यभिचरितवात्कमे
ववेदत्वं एवंविधायाअपिवाणीप्रामाण्येवेदस्याप्यप्रामाण्यंस्यादित्यर्थः तत
श्चपूर्वश्लोकोक्तंमद्वचःअन्यथाशङ्कांविहायसत्यमेवज्ञातव्यं विप्रलभ्यंपोरदु
पधादितियत् शक्येतिशकिसहोश्चेतियत् ॥ ७८ ॥

अनैषधायैवजुहोतितातः किंमांकृशानौन शरीर
शेषाम्। ईष्टेतनूजन्मतनोःसनूनं मत्प्राणनाथ

स्तुनलस्तथापि ॥ ७९ ॥

पुनरपिपूर्वोक्तं पितुर्नियोगेत्यादिपद्यद्वयंयुक्त्यानिराकरोति ॥ अनेनेति ॥ तातः पिताचेत्शरीरशेषांशरीरमात्रावशेषांमांअनेनैवथायमनलव्यतिरिक्तायजुहोतिददातितर्हिकथामावेवअग्नावेवकिंनजुहोतिवह्नावेवमांकिंनक्षिपतियदेतिकिमः प्रश्नार्थत्वेननञोनिषेधार्थत्वेनैवव्याख्येयमङ्गीकृत्याप्याह यद्यप्यव्ययस्तैवास्यतितथापिममप्राणानांनाथस्तुनलएव तदेवार्थः यतःनूनंनिश्चितंसपितातनूजस्तअपत्यंतस्यतनुः शरीरंतस्यैवईष्टेस्वामीतदधीनस्यशरीरस्यपरित्यक्श्चित्करोतुप्राणास्तुनलाधीनाएव पितृकर्तृकान्यदानेनलोद्देशेनाग्नौजन्मांतरेपितत्प्राप्त्यर्थंप्राणांस्त्यक्ष्यामि । "यंयंवापिस्मरन्भावमिति„ कृष्णवचनात् अन्त्यस्मोरितिअधीरार्थेतिषष्ठी ॥ ७९ ॥

तदेकदासीत्वपदादुदग्रे मदीप्सिते साधु विधित्सुताते । अहेलिना किं नलिनी विधत्ते सुधाकरेणापि सुधाकरेण ॥ ८० ॥

इतःपृथक्प्रार्थयेत्युक्तं दूषयति ॥ तदिति । तस्यनलस्यैकंकेवलंदासीत्वंतल्लक्षणंपदंवस्तुतस्मात्सकाशात्उदग्रे उत्कृष्टेमदीप्सितेममाभिलाषेविधित्सुताकर्तुकामत्वंतत्साधूचितंकाक्वानसाध्वितिवानलदासीत्वादन्यन्नप्रार्थयेइतिभावःनलदासीत्वंसम्यगन्यस्यनदिच्छेत्वंनेत्याह नलिनीकमलिनीसुधायाअमृतस्याकरेणालयेनापिअहेलिनाहेलिःसूर्यःतस्मादन्येनसूर्यव्यतिरिक्तेनसुधाकरेणचन्द्रेणकिंविधत्सेकुरुतेअपितुनकिमपि सूर्येऽनुरागवाहुल्याच्चन्द्रे तदभावादमृतपूर्णोपितस्यैनरोचतेतथाममेत्यर्थः सुधाकरपदं प्रथमंयौगिकंद्वितीयमयौगिकमितिनपुनरुक्तिः तदेकदासीत्वपदादुत्तमःसकाशादधिकेमदीप्सितेतेविधित्सुतासोलियत्तत्साध्वपिअनुचितमसाद्वृशस्यमदीप्सितस्याभावादित्यर्थइतिवा ॥ ८० ॥

तदेकलुब्धे हृदि मेऽस्ति लब्धुं चिन्ता न चिन्तामणिमप्यनर्घ्यम् । चित्ते ममैकः सकलत्रिलोकीसारो निधिः पद्ममुखः स एव ॥ ८१ ॥

एतदेवद्रढयति ॥ तदिति । तस्मिन्नेवएकंकेवलंलुब्धमभिलाषुकं एवंभू

सञ्चीयतामाश्रुतपालनोत्थं मत्प्राणविश्राणनजं च पुण्यम्। निवार्यतामार्य वृथाविशंका भद्रेऽपि मुद्रेयमये मुशङ्का ॥ ८३ ॥

ममकार्यसाधनेतवमहान्लाभइत्याह ॥ सञ्चीयतामिति ॥ तद्दृत्यवेहि स्वशुयेश्रयालुरितिआश्रुतस्यप्रतिज्ञातस्यपालनंतस्मादुत्थमुत्पन्नंजनितंपुण्यंतथाममप्राणानांमह्यमेवविश्राणनंदानं तज्जनितञ्चपुण्यंत्वयासञ्चीयतांपरिपुष्टीक्रियतांप्रतिश्रुतकरणेनमहान्धर्मस्तेनमत्प्राणरक्षणाद्धर्मोभविष्यतीत्यर्थःप्रतिश्रुतादानं चाधर्मः मत्प्राणहानिश्चेतिस्त्रीहत्यालक्षणश्चाधर्मःएतद्द्वयंयानमयतितथाकर्तव्यमितिभावःनिश्चयाभावेकथंकार्यमित्यत आह आर्यश्रेष्ठवृथाविशंकारणिकापिलुर्नियोगेत्यादिविशङ्काविरुद्धासम्भावनानिवार्यतांदूरतस्त्यज्यतांअयेहंसभद्रेपिअसन्दिग्धेपिपदार्थेविषयेमुशसतिश्येनकेयंमुद्रानुकोभावः किमितिनाङ्गीक्रियतइत्यर्थःभद्रेशुभरूपेश्रेष्ठेसाधौवात्वयिइयंकामुद्राख्यितिरितिवा ॥ ८३ ॥

अलंविलंघ्यप्रियविज्ञयाञ्चांकृत्वापिवाम्यं विविधं विधेये। यशःपथादाश्रवतापदोत्थात् खलु स्खलित्वास्तखलोक्तिखेलात् ॥ ८४ ॥

अलमिति ॥ हेप्रियविज्ञप्रियश्चासौविज्ञश्चविबुधपक्षिषुमध्ये कुपक्षिश्रेष्ठइतिवाहंसयाञ्चांमत्कृतांप्रार्थनांविलङ्घ्यअतिक्रम्याऽलंनातिक्रमणीयाप्रियस्यसतोविज्ञस्यमलस्ययाञ्चांविलङ्घ्यालमितिवा तथाविधेयेकरणीयविषयेविविधंवाम्यवक्रत्वमपिकृत्वाऽलंकरणीयमित्यर्थःअपिरत्यत्कालत्वद्योतनार्थःउभयमपिनकार्यमित्यर्थः तथोआश्रवतापदंदात्त्वलक्षणंपदमुत्थमस्थानंतस्मादुत्थउत्पन्नस्तस्माद्यशःपथात्कीर्तिमार्गात्स्खलित्वापतित्वापिखलुपूर्यतांयतनमप्रिनकार्यमपिशब्दोत्रापियोज्यः किंभूतात् अस्तःक्षिप्तःखलोक्तीनांखलदुर्वचनानांखेलोविलासोयस्मिन् हंसतुल्यतपक्षीअन्योनारू रीति दुर्जनाअप्रियवातवकीर्तिञ्चयन्तितथाकुर्वित्यर्थःआश्रवतावचनकारितापूतिश्रुतकारित्वमितिवा पन्थाहिपदोत्थोभवति विद्वेतिहरणपथेतिकः विलङ्घ्यकृत्वा स्खलितश्चेतिअलंखल्वोःप्रतिषेधयोरिति

ण्वकाप्रत्ययः आपृणोतीत्याश्रवः पचादिषु । यजयाचेतिनङ्क्रियाम्वा ॥८४ ॥

स्वजीवमप्यार्त्तमुदेददद्भ्यस्तव त्रपानेदृशबद्धमु
ष्टेः । मह्यं मदीयान्यदसूनदित्सोर्द्धर्मः कराद्भ्रश्य
तिकीर्त्तिधौतः ॥ ८५ ॥

सोपहासम्नूते । स्वेति । हेहंसमदीयानसूक्तलक्षणान्प्राणान्मह्यमेवाद्दित्सोर्दातुमनिच्छोरीदृशबद्धमुष्टेःकृपणशिरोमणेस्तवार्त्तामार्दीनानांमुदेहर्षाय स्वजीवमपिस्वंप्राणमपिददद्भ्योजीमूतवाहनादिभ्यः सकाशाद्यस्मात्त्रपालज्जानभवतितस्मात्तवकरात्कीर्त्तिधौतोयशोधवलोधर्मःभ्रश्यतिअधुनैवविनश्यति यशोनश्यतिधर्मोपीत्यर्थः अन्यदीयंगृहीत्वातस्मैयोनददातितस्यस्वजीवदातृभ्यःसकाशाल्लज्जाकथंनस्यात् यदिस्वाहिंदद्यादेव तस्मादुभयमपितवनष्टम् तेतुजीवमपिददुःत्वंतुतदीयमपिधनंनददासिकिंपुनःस्वजीवितम् तस्माद्येनधर्मोयशश्चभवतितदेवकुर्वितिभावः बद्धमुष्टेःकरात्पततीतिविरोधाभासःनेतिकाकुर्वा कर्णेस्वचर्मशिबिनासंजीवंजीमूतवाहनः । ददौदधीचिरस्थीनिकिमदेयंमहात्मनामिति वचनंजीवदानेप्रमाणं । नलोकेतिनिषेधादसूनितिद्वितीया धौतःभावेनिष्ठायामूठिवृद्धिः ॥ ८५ ॥

दत्वात्मजीवंत्वयिजीवदेपि शुद्ध्यामिजीवाधिक
दैतुकेन । विधेहितन्मांत्वद्गृणान्यशोधुमसमुद्रदा
रिद्र्यसमुद्रमग्नाम् ॥ ८६ ॥

त्वयामत्कार्येकृतेप्रत्युपकर्तुमशक्यत्वेनाहंनधमर्णायथास्यांतथाकुर्वित्याह ॥ दत्वेति ॥ हेहंसजीवदेत्वयिआत्मनोजीवंदत्वापिशुध्याम्यिअनृणीभवामिजीवाधिकंमसंददतित्वयिकेनपुनः प्रकारेणशुध्यामिकेवलजीवदत्वेतुजीवदानेनानृणीभवनंयुक्तं जीवाधिकदत्वेतुजीवेदत्तेऽपिअनृणीभवितुंनशक्यते जीवादधिकमन्यत् किमपिनविद्यतइतिभावः यतस्तस्मात्त्वदृणात्यशोद्धुमनपाकर्तुंमानमुद्रोनिर्मर्यादः दारिद्र्यसमुद्रस्तत्रमग्नांअतिदरिद्रांविधेहितवाधमर्णोयथास्यांतथाकुर्वित्यर्थः जीवाधिकदोभवेतिभावःऋणशब्दस्तत्रोपकारपरःअशोधनंप्रत्युपकाराकरणम् अत्रमेजीवएवजीवशब्देनगृह्यतेप्राणेभ्योप्यधिकंनसंददातीतिजीवाधिकदःएवंवि

धेजीवदेनलदानएवममप्राणानंयतएवंविवेत्वयिआत्मनःप्राणान्दत्त्वापि आत्मजीवव्ययसाध्यमुपकारंकृत्वापिकेनपुनः प्रकारेणानृणीभवाम्यपितु प्राणव्ययसाध्येउपकारेकृतेपिसमानृणःवंयथाभवेदितिवाक्ययोजना ॥ ८६ ॥

क्रीणीष्वमज्जीवितमेवपण्यमन्यन्नचेदस्तितदस्तु पुण्यम् । जीवेशदातर्यदितेनदातुं यशोपिता वत्प्रभवामिगातुं ॥ ८७ ॥

अस्मिन्कार्येकृतेफलसद्भावेमत्वयैतत्करणीयमित्यतआह ॥ क्रीणीष्वेति ॥ हेहंसत्वंमज्जीवितंजीवनमेवपण्यंविक्रेयंवस्तुक्रीणीष्व प्रियदानमूल्येनेतिभावः।मद्यमेवतत्क्रयेणयत्नननतुत्वंक्रयेणजीवदानेननकोलाभइत्याशङ्क्याह अन्यद्धनादिकंचेद्यदिपनास्तितथापिपुण्यमस्तुभवतुजीवितदानेजीवाधिकदानेनविनान्यन्मूल्यंयदिपिनविद्यतेतथापितस्यस्थानेश्रेयएवमवत्वित्यर्थः।ननुपुण्यंपारलौकिकमहमैहिकमपिकिंनपिवाञ्छामीत्याशङ्क्याह हेजीवेशदातःप्राणनाथदातु जीवाधिकतुल्यमूल्याभावेनयद्यपितेतुभ्यंदातुंनप्रभवामिसमर्थोस्मितथापितवयशस्तावत्सांकल्येनप्रथमतौवागातुंसमर्थोस्मिनमवाम्येवेतितावचद्भ्योऽवधारणार्थोवाऐहिकंपारलौकिकंचफलंतवविद्यतेतद्रूपेणमूल्येनमह्यंजीवदानंकुर्वितिभावःयद्वातावत्तस्यैव यदितेदातुंनप्रभवामितर्हियशःपुनर्गातुंनप्रभवामिअपितुप्रभवाम्येव । पण्यंपणपाद्येत्यादिनाऽप्यर्थेयत् ॥ ८७ ॥

वराटिकोपक्रिययापिलभ्यान्नेभ्याःकृतज्ञानथवा द्रियन्ते।प्राणैःपणैःस्वंनिपुणंभणन्तः क्रीणन्ति तानेवतुहन्तसन्तः ॥ ८८ ॥

पूर्वोक्तफलद्वयाभावेपिसाधवउपकुर्वन्तीत्याह ॥ वराटिकेति ॥ अथवेतिपूर्वोक्तापरितोषे इभ्याःधनिकाःधनलुब्धाएवेत्यर्थः वराटिकोपक्रिययाकपर्दकदानमात्रोपकारेणापिलभ्यान्सुलभान्कृतज्ञान्साधून् नाद्रियन्तेनसम्भावयन्तिआदरंनकुर्वतीत्यर्थः तुःपुनरर्थेहन्ताश्चर्येसन्तःसुसाधवः पुनः प्राणैरेवपणैर्मूल्यैनैवकृतज्ञान् क्रयेणक्रीणन्तिकृतज्ञोपकारार्थंप्राणानपित्यक्त्वातानर्जयन्तीत्यर्थः किंभूताःसन्तःस्वमात्मानंनिपुणंकुशलंभणन्तोब्रुवन्तःमानयन्तः प्राणाधिकंमूल्यमर्हन्तएतेस्माभिरल्पमप्राणमूल्येनल

निमित्ते स्पष्टस्य वीरणानामकतृणविशेषस्य मूलं मूलानलदत्वं शीरकपतां प्राप्यसन्तप्तस्य हृदयस्य चन्दनलेपेनयत्कृत्यं शीतलत्वरूपं कार्यं किंन कर्तासि काकुः आक्षेपो वातद्व्यापि नलदत्वाद्धृदयचन्दनलेपकृत्यं युक्तमेवनलप्रामा वेवा इह हृदय दनलेपङ्करिष्यामिनान्यथेतिभावः स्याद्वीरणं वीरतृणं मूलेऽस्योशीरमस्त्रियाम् अभयंनलदं सेव्यमित्यमरः कृत्यमिति विभाषा कृवृषोरिति कृञः क्यपितुक् ॥ ९० ॥

अलं विलम्ब्य त्वरितुं हि वेला कार्ये किल स्थैर्य्य सहे विचारः। गुरूपदेशं प्रतिभेव तीव्रा प्रतीक्षते जातु न कालमर्त्तिः ॥ ९१ ॥

शीघ्रमेवैतत्कर्तव्यमित्याह ॥ अलमिति ॥ हि यस्मादियं त्वरितुं त्वरां कर्तुं वेला एतत्कार्यं कर्तुं शीघ्रं गन्तुमयं समयः अतो विलम्ब्य अलं विलम्बो न कार्यः सम्यग्विचार्य करिष्यामीत्यत आह किल यस्मात् स्थैर्ये सहे विलम्बसहे कार्ये विषये विचारः क्रियत इति शेषः इदन्तु विलम्बसहं न भवतीति विचारो न युज्यत इत्यर्थः तत्र हेतुमाह अर्तिः तीव्रकामपीडा प्रकृते विरहपीडा जातु कदाचिदपि कालं न प्रतीक्षते तत्र दृष्टान्तः काकमिव तीव्रा कुशाग्रतुल्या शिष्यस्य प्रतिभा प्रज्ञा गुरूपदेशमिव गुरूपदेशात् सर्वमेव शास्त्रार्थं गृह्णाति लोकेपि यावद्विवाहादि समयः समायाति तावत्पूर्वमेव त्वरा भवति शीघ्रमेवैतत्कार्यं साध्यमेवेति भावः त्वरितुं कालसमयवेलेति तुमुन् ॥ ९१ ॥

अभ्यर्थनीयः स गतेन राजा त्वया न शुद्धान्तगतो मदर्थम्। प्रियास्य दाक्षिण्यबलात्कृतो हि तदोदये दन्यवधूनिषेधः ॥ ९२ ॥

श्लोकत्रयेण विज्ञापनावसरमुपदिशति ॥ अभ्यर्थनीय इत्यादिना ॥ इतो गतेन त्वया शुद्धान्तगतोऽवरोधमध्यस्थितः स्त्रीसमूहगत इति यावत् स राजा भैमी त्वया नानुग्राह्येति मदर्थं नाभ्यर्थनीयः सद्विषयं किमपि न वक्तव्यमिति स्पर्थः गतेन त्वया अभ्यर्थनीयः परं शुद्धान्तगतो नेतिवा एवमग्रिम श्लोकत्रयेपि विशेषणस्य नञा सम्बन्धः कार्यः किमिति नेत्याशङ्क्याह हि यस्मात् तदा तस्मिन्समये प्रियाणां स्त्रीणां आस्यानां तेषु वा दाक्षिण्यस्य अनुरोधस्य बलादाधिक्यात्कृतः अन्यवधूनिषेधः अन्यस्त्रीनिषेध उदये प्रादुर्भवेत् यद्यप्यन्यस्त्रीवसना ऽस्य

स्यात् तथापितस्स्वमत्तंप्रार्थितेतन्मुखावलोकनेनजनितयालज्जयाभीत्या वाएतान्यः सकाशादन्याकापिसुन्दरीनास्तीतिनिषेधउदयेत् इतिहेतोर्न प्रार्थनीयस्त्वदेत्यर्थः । शुद्धान्तस्त्ववरोधस्स्यादित्यमरः अर्थकृत्याचमे ॥ ९२ ॥

शुद्धान्तसंभोगनितान्ततुष्टे ननैषधेकार्यमिदंनि
गाद्यम् । अपांहितृप्रायनवारिधारा स्वादुःसुग
न्धिःस्वदतेतुषारा ॥ ९३ ॥

शुद्धान्तेति ॥ त्वयाशुद्धान्तसम्भोगेनान्तःपुरस्त्रीसुरतेननितान्ततुष्टेअतिशयेनसन्तुष्टेधान्तकामइतियावत् नलेइदंपूर्वोक्तं कार्यंननिगाद्यंनवक्तव्यं सतिसम्भोवा ह्रियस्ताह्यपांअद्भिस्तृप्तायपुरुषायस्वादुः सुरसासुगन्धिःकर्पूरादिना तुषाराशीतलापवारिधारा उदकधारानरोचतेपिपासायाअभावात् पीतादुदकादुःखदृष्टमप्युदकंयथातस्मैनरोचतेतथासंभोगेनशान्तमदनत्वात्तद्वधूर्न्याप्यधिकाहंतस्मैनरोचेयंतस्मात्तदापिनवक्तव्यमितिभावः निगाद्यं सोपसर्गाद्वदतेर्यत् तृप्तार्थयोगेपूरणगुणेतिषष्ठीसमासनिषेधाद्वापानिलिषष्ठी तृप्त्यर्थानांकरणेषष्ठीवेतिवा तृमायकव्यर्थानामिति चतुर्थी सुगन्धिरितिगन्धस्येत् तुषारेतिअभिधेयलिङ्गता ॥ ९३ ॥

त्वयाविधेयानगिरोमदर्थाः क्रुधाकटूष्णेहृदि
नैषधस्य । पित्तेनदूनेरसनेसितापि तिक्तायते
हंसकुलावतंस ॥ ९४ ॥

त्वयेति ॥ हेहंसकुलावतंसहंसवंशविभूषणनैषधस्यहृदिक्रुधाक्रोधेनकटूष्णेदुःखत्तप्तेसतिमदर्थामत्प्रयोजनागिरोवाचः त्वयानविधेयाःकर्तव्याः यतः पित्तेनपित्तदोषेणरसनेरसनेन्द्रियेदूनेदुष्टेसतिसितापिशर्करापितिक्तायते तिक्तेवाचरतिनिम्बतुल्यरसाभवति अहंशर्करातुल्यापितिक्ताकिमित्यर्थः । शर्करासितेत्यमरःकवंचोष्णेइतिचकारात्कदुष्णम् रस्यतेऽनेनेतिरसनं तिक्तेवाचरतीतिकर्तुः क्यङितिक्यङ्तिक्ताभवतीतीवार्थेलोहितादित्वात्क्यष् वाक्यषद्दत्वात्मनेपदम् ॥ ९४ ॥

धरातुराहिमदर्थयाञ्चा कार्यानकार्यान्तरचुम्बि
चित्ते । तदार्थितस्यानवबोधनिद्रा बिभर्त्यवज्ञा

चरणस्यमुद्राम् ॥ १५ ॥

चरेति ॥ हेसंसत्वयाधरायांतुराषाडिन्द्रस्तस्मिन्पृथ्वीन्द्रेमत्पूर्वोक्तस्य तिरिस्तकार्यान्तरचुम्बिकार्यमात्रासक्तंचित्तंयस्यएवंभूतेसतिमदर्थयाञ्चा नकार्याविधेया यतस्तदाकार्यान्तरसक्तिसमयेऽर्थितस्ययाचितस्यअनुव बोधअनाकर्णनंतत्रत्वयानिद्राअवज्ञायाअवहेलनायाः आचरणंकरणंतस्य मुद्रांसादृश्यंबिभर्तिधारयतिअसमयेकार्यान्तरासक्तत्वात्तवविज्ञापनांयदि नशृणुयात्सदाइदंकार्यमस्मैनरोचतइतिविधार्यतत्रापिपुनर्विज्ञापनायांबु द्धिर्नोदियादितिभावः । तुराषाडितिप्रयोगोभाषायांछंदसिसहइतिण्विप्र त्ययस्यछन्दसिविहितत्वाच्चिन्त्यः लोकेतुतुरंत्वरांसाहयतीतिण्यन्तात्क्वि प्वोच्यःअन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घः गिरिशादिवन्महाकविप्र योगादस्यापिछान्दसत्वस्यप्रायिकत्वाद्वापरिहर्तव्यम् प्रकारान्तरंतुधरातु राषराबत्पृथ्वीवद्तुराअनुत्तालाअसेगावाबापूर्वोक्ताप्रसिद्धावा याञ्चावि शेषसंहिनिम्नतनस्यत्पृथवत् चरबत्पर्वतवद्तुराचा स्वस्येनसमयंदृष्ट्वाक र्तव्यानतोत्तालेनेत्यर्थः यद्वाहेअहिमदर्थंअहीनमयातीतिअहिमत् गरुड समर्थयसेनिजरक्षेमाहुं प्रार्थयतेतस्त्वंबोधनंगरुडतुल्यपराक्रमेत्यर्थः । अ न्यत्पूर्ववत् ॥ १५ ॥

विज्ञेनविज्ञाप्यमिदंनरेन्द्रे तस्मात्त्वयास्मिन्समयंसमीक्ष्य । आत्यन्तिकासिद्धिविलम्बिसिद्ध्योः कार्यस्यकार्यस्यशुभाविभाति ॥ १६ ॥

निगमयति ॥ विज्ञेनेति । हेहंसतस्मात्कारणादस्मिन्नरेन्द्रेविज्ञेनविशे षज्ञेनत्वयासमयसरंसमीक्ष्यदृष्ट्वाइदंकार्यंविज्ञाप्यंविज्ञापनीयं । समयप्र तीक्षणेकार्यविलम्बःस्यादित्याशङ्क्याह ।अस्यकार्यस्यआत्यन्तिकीसर्वथा असिद्धिस्तथाविलम्बिनीसिद्धिस्तयोर्द्वयोर्मध्येआर्यस्यपूज्यस्यबुद्धिमतस्तव कासिद्धिः शुभासमीचीनाविभातिप्रतिभाति कथयेतिशेषः । असमयेविज्ञा पितस्यकार्यस्यसर्वथाअसिद्धिरेव समयंविचार्यकृतस्यविलम्बेनसिद्धिःदै वज्ञायसीतस्मात्समयंप्रतीक्ष्यविज्ञप्तिंकुर्विति भावः।आत्यन्तिकीचासावसि द्धिश्चेतिकोपधत्वेपिपुंवत्कर्मधारयेतिपुंवत् लक्षणहेत्वोरितिज्ञापकाद्ल्या

चतरमित्यस्यानित्यत्वादात्यंतिकाश्रिद्वविलम्बसिद्धोरित्यत्रपरनिपातःस मर्थनीयः ॥ ८६ ॥

इत्युक्तवत्यायदलोपिलज्जा सानौचितीचेतसिनश्चकास्तु । स्मरस्तुसाक्षीतददोषतायामुन्माद्ययस्तामवीवदत्ताम् ॥ ८७ ॥

बालायास्तरुणीवल्लज्जात्यागोनयुक्तइत्याशङ्क्यपरिहरति ॥ इतीति ॥ विनामुनास्वात्मनीत्यायुक्तवत्याभैम्यायल्लज्जाग्रलोपित्यक्तासाअनौचितीअनौचित्यंनोसाकवीनांचेतसिचकास्तुप्रकाशतां । बालायाःलज्जयाभाव्यमेवेतितद्त्यागेस्मत्सिद्धांतातिक्रमादस्माकंचेतसिअनौचित्यंस्फुरतुनामेत्यर्थः तुःपुनरर्थे तस्याअदोषतायांनिर्दोषत्वेपुनःस्मरःसाक्षीसाक्षाद्द्रष्टा कथंसाक्षित्वमित्यतआह यःकामउन्माद्यउन्मादावस्थांकृत्वातांभैमीतत्तद्विनामुनेत्यादिबालायायुक्तमयुक्तंअवीवदत्वादयतिस्मतेनैववलाद्वादितासेतितस्यानदोषः कवीनांवर्णनेऽनौचित्यं प्रातिभासिकंनतुतात्विकंअनुवादत्वादितिभावःशब्दकर्मत्वाद्वदेरण्यंतकर्तुर्णौकर्मत्वम् ॥८७

उन्मत्तमासाद्यहरःस्मरश्च द्वावप्यसीमांमुदमुद्वहेते पूर्वःपरस्पर्द्धितयाप्रसूनं नूनंद्वितीयोविरहाधिदूनं ॥ ८८

मदनेनापिसाकिमित्युन्मादितेत्यतआह ॥ उन्मत्तमिति ॥ द्वौउन्मत्तंउन्मत्तवस्तुआसाद्यप्राप्यअसीमांनिर्मर्यादांमुदंहर्षंउद्वहेतेधारयतः । कौद्वौहरोमहादेवःस्मरश्च तयोर्मध्येपूर्वोहरःप्रसूनंधत्तूरपुष्पलक्षणंमुन्मत्तंप्राप्यहर्षंधत्ते द्वितीयःकामःविरहाधिनाविरहपीडयादूनंदुःखितमुन्मत्तमुन्मादवंतंजनंप्राप्यहर्षंधत्ते नूनमुत्प्रेक्ष्ये उभयत्रहेतुःपरस्पर्द्धितयाअन्योन्यस्पर्द्धयाहरशत्रुःस्मरःहरस्यउन्मत्तंधत्तूरकुसुमंहर्षजनकंदृष्ट्वामयापिउन्मत्तंजनंप्राप्यहर्षितव्यं तथाहरेणापिकामस्युन्मत्तंप्राप्यहृष्यति तच्चेन्मयापिकामायुधमुन्मत्तपुष्पंप्राप्यहर्षितव्यमितिअन्योन्यस्पर्द्धा शत्रोरर्थादिलब्ध्वासर्वोपितुष्यति कामोपिउन्मत्तंपिशाचंहरसेवकमासाद्यहर्षंधत्ते शत्रुवस्तुलाभादित्यर्थःउन्मत्तउन्मादवतिधत्तूरमुचुकुन्दयोरितिविश्वः।वहेःस्वरितत्वादात्मनेपदम् ॥ ८८ ॥

तथाभिधात्रीमथराजपुत्रीं निर्णीयतां नैषधबद्धरागाम् । अमोचिचञ्चूपुटमौनमुद्रा विहायसा तेनविहस्यभूयः ॥ ९९ ॥

तथेति ॥ अथानन्तरन्तेनविहायसापक्षिणास्वामीप्सितसिद्धेर्विहस्यचञ्चूपुटस्यमौनमुद्रामौनभङ्गिः भूयःपुनरपिअमोचित्यक्ता । वक्तुमारब्धंकिं कृत्वा तथाभिधात्रींश्रुतश्चदृष्टश्चेत्यादिभाषमाणांतांराजपुत्रींभैमीनैषधेनलेबद्धोरागःप्रीतिर्ययाएवंभूतांनिर्णीयनिश्चित्य । विहायश्चशकुन्तेस्यादितिविश्वः ॥ ९९ ॥

इदंयदिक्ष्मापतिपुत्रितत्त्वं पश्यामितन्नस्वविधेयमस्मिन् । त्वामुच्चकैस्तापयतानृपंच पञ्चेषुणैवाऽजनियोजनेयम् ॥ १०० ॥

इदमिति ॥ हेक्ष्मापतिपुत्रिराजपुत्रियदिइदंपूर्वोक्तंसर्वंतत्त्वंसत्यं तत्तर्हिअस्मिन्कार्येस्वस्यआत्मनःविधेयंकरणीयंनपश्यामि मयाकरणीयंकिमपिनावशिष्यते तर्हित्वांविनास्वयमेवकथंभविष्यतीत्यतआह त्वांनृपंनलंचउच्चकैरतिशयेनतापयताउभयोरपिपरस्परराग़ात् विरहपीडांजनयतापञ्चेषुणैवकामेनैवेयंयोजनाघटनाअजनिजनिता अतएवमद्व्यापारोऽत्रनाकांक्षिष्यतइत्यर्थः । तत्रयोःसन्धिरितिलोहाद्दृश्यते ॥ १०० ॥

त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासव्रतिनां तपोभिः । त्वामद्यलब्ध्वामृततृप्तिभाजां स्वदेवभूयंचरितार्थमस्तु ॥ १ ॥

नैषधस्यावस्थांश्रुत्वानलस्यापिकाश्चिदवस्थाःसूचयन्नाह ॥ त्वदिति ॥ हेभैमितपोभिःपुण्यैरद्यत्वांलब्ध्वाप्राप्यअमृततृप्तिः पीयूषपानजनिततृप्तिस्तत्तुल्यतृप्तिभाजांतस्यनलस्यबहिरिन्द्रियाणां चक्षुरादीनांकेवलानांस्वंदेवभूयं „ आदित्यश्चक्षुर्भूत्वाक्षिणीप्राविशदित्यादिश्रुतिसिद्धंस्वीयंदेवत्वंचरितार्थंकृतकार्यमस्तु एतावत्कालशब्दमात्रेणातेषांदेवत्वमभूदिदानींत्वल्लाभेनामृततृप्तितुल्यत्वाद्देवत्वंसार्थकंभविष्यतीत्यर्थः । किंभूतस्यतस्यत्वय्येवबद्धानिवेशिताबुद्धिर्मनोयेन अनशनलियमव्रतश्च किंभूतानामिन्द्रिया

णांसंनसंस्त्वयिलीनत्वात्तेषुमनोव्यापाराभावात् उपवासव्रतंविद्यतेयेषां अन्यस्यापिआकृष्टेन्द्रियस्यानशनंनियमवतः परब्रह्मध्यायतः पुण्यैस्तदेवब्रह्मलब्ध्वामोक्षलक्षणानंदभाजोदेवत्वं सार्थकम्भवतीत्युक्तिः बहिरिन्द्रियाणांनिजव्यापारेष्वप्रवृत्तिःतपः " विषयभोगाभावश्चोपवासः ,, अमृतपानेहिदेवानादेवत्वं तथात्वभावेतदिन्द्रियाणामपिदेवत्वं कृतार्थमस्तु । देवभूयंभुवोभावेक्यप् उपवासश्चासौव्रतंचेतिकर्मधारयाद्विनिःसमर्थनीयः उपवासेनव्रतिनइतिवासमाधिः ॥ १०१ ॥

तुल्यावयोर्मूर्त्तिरभून्मदीया दग्धापरंसाप्यनताप्यतेति । इत्यभ्यसूयन्निवदेहतापं तस्यातनुस्त्वद्विरहाद्विधत्ते ॥ २ ॥

नलस्यतद्विरहेणकामजनितंविरहज्वरमाह ॥ तुल्येति ॥ हेभैमिअतनुःकामःत्वद्विरहात्तस्यदेहतापंविधत्ते करोति किंकुर्वन्निव इतिपूर्वोक्तप्रकारेणअभ्यसूयन्निवईर्ष्यां कुर्वन्निवइतीतिकिं आवयोःकामनलयोःमूर्तिःशरीरंपूर्वंतुल्यासमानाअभूत् अनन्तरंमदीयासामूर्तिर्दग्धा अस्यनलस्यसामूर्तिः परंअतिशयेनताप्यतेपिनएतच्छरीरस्यदाहोनक्रियते एवपरंचतापोपिकेनचिन्नक्रियतेइतिअनंगस्तद्विरहादेवदेहतापंकरोतिनान्यस्मादित्यर्थःममचतस्यचआवयोः त्यदादीनांमिथइतिएकशेषः ॥ १०२ ॥

लिपिंदृशाभित्तिविभूषणन्त्वांनृपःपिबन्नादरानिर्निमेषः । चक्षुर्भ्ररैरर्पितमात्मचक्षूरागं सघत्तेरचितंत्वयेव ॥ ३ ॥

दशावर्णयति ॥ लिपिमिति ॥ नृपोनलः दृशादृष्ट्याभित्तेर्विभूषणमलंकारभूतांलिपिंचित्रनिर्मितांत्वांआदरेणतात्पर्येणनिर्निमेषः नेत्रसंकोचरहितः सन्पिबन्सादरमवलोकयन्चक्षुर्भ्ररैर्निर्निमेषत्वादनुरागवशाच्चजातैर्नेत्रवाष्पप्रवाहैरर्पितंजनितंआत्मचक्षूरागंस्वीयनयनयोर्लौहित्यमानंधत्ते उत्प्रेक्षतेत्वयारचितमिवजनितमिव अयंबाष्पजनितलौहित्यमानमभवतिकिंतुत्वद्विषयकोनयनानुरागःप्रथमावस्था ॥ १०३ ॥

पातुर्दृशालेख्यमयींनृपस्य त्वामादरादस्तनिमी

लयास्ते। ममेदमित्यश्रुणिनेत्रवृत्तेः प्रीतेर्निमेष च्छिदयाविवादः ॥ ४ ॥

तामेवपुनराह॥ पातुमिति॥ आलेख्यमयींचित्रलिखितांत्वांआदरादस्त्र निमीलयाऽनिर्निमेषयादृशापातुंसादरमवलोकयितुंयस्यअश्रुखिविषये नेत्रवृत्तेर्नयनवर्तिन्याःप्रीतेरनुरागस्यनिमेषस्यच्छिदयाविच्छेदेनसहममेद मितिइदमश्रुमज्जन्यमिदंमज्जन्यमितिअहमहमिकयाविवादःआस्तेभव ति। अनुरागवशान्निमेषाभावस्तस्माच्चाश्रुभवति नयनानुरागजन्यंनिमेषच्छि दाजन्यमेववातदश्रुइतिलोकः संदिग्धइतिभावःनिमेषच्छिदयेत्यप्रधानेतृ तीयया।सुख्यानयनप्रीतिरितिद्योतितं भिदादिपाठाच्छिदासाधुः ॥१७४॥

त्वंहृद्गताभैमिबहिर्गतापि प्राणायितानासिकया स्यगत्या। नचित्रमाक्रामतितत्रचित्र मेतन्मनो यद्भवदेकवृत्तिः ॥ ५ ॥

द्वितीयामाह ॥ त्वमिति हेभैमिबहिर्गतापिबहिःप्रदेशेवर्तमानापिअनु रागवशादंतःकरणेविद्यमानात्वंकयागत्याकेनप्रकारेणप्राणायिताजीवा पितानासि अपितुसर्वप्रकारेणजीववत्प्रियासि अथचबहिर्गतात्वंनासि नासिकया आस्यगत्यामुखगत्याऽपिहृद्गतामनोरमाऽतएवप्राणायिताप्राण वत्प्रिया। तवनासिकामुखसौंदर्यंचित्रादौदृष्टंतेनहृदयेधारितेत्यर्थः । बहिर्गतापिहृद्गतेति विरोधाभासःतत्परत्वात्परिहारः प्राणाअपिनासि कामुखमार्गेणद्वादशांगुलपर्यंतंबहिर्गत्वापुनरंतःप्रविशंति प्राणाख्यांचल भंते तथात्वमपिभवतीत्वमेकाकेवलावृत्तिर्जीवनोपायोयस्यैवं। एतन्म नोमत्तंतःकरणंचित्रमालेख्यं यन्नाक्रामतितच्चित्रंमिवमभाति तत्रविषये आश्चर्यंविरहव्यथयाहिपंचत्वेनभवितव्यं तच्चयदाचित्रमिवलिख्यापारंजातं तत्राश्चर्यमित्यर्थः ॥ त्वदायत्तत्वात्त्वदन्यत्किमपितस्यचित्तेनजागतीति त्वंप्राणवत्प्रियेत्यर्थः चित्रंकर्तृएतन्मनःकर्म यन्नस्वाधीनंकरोतितत्रचित्र मपितुनेतिकाकुःयतस्त्वदेकवृत्तिइतिवा भवदेकवृत्त्येतन्मनोयच्चित्रंनाक्रा मति आश्चर्यान्नावलोकयतितत्रचित्रम् चित्रंहिसर्वैरवलोक्यते अनेननेत्या श्चर्यमितिवा एतन्मनोयच्चित्रमाक्रामति अवलोकयतितत्रचित्रंन यद्यपि

विरहिणश्चित्रंदुःखदंतथाप्याश्चर्यंन यतश्चित्रंभवदेकवृत्ति भवत्याएवैकावृ त्तिरवस्थानंयत्रएवंविधं यत्रत्वमेवलिखितासितदेवचित्रमवलोकयतीति अत्रकिमाश्चर्यमितिवा. चित्तमितिपाठेव्याख्या. तत्रभाग्यभवनेलोकस्यचि त्तं आश्चर्यंनगच्छतियस्मात्तदेतन्मनस्त्वदेकवृतित्वदासक्तम् यत्रयस्यास क्तिस्तत्तस्यप्राणवद्भवति अत्रकिमाश्चर्यमिति द्वितीयावस्थाऽऽक्रामती तिवाञ्छाशेतिशयन् विकल्पःभवत्याएकावृतिर्यत्र सर्वनाम्नोवृत्तिमात्रइति भवतीशब्दस्यपुंवत् ॥ १०५ ॥

**अजस्त्रमारोहसिदूरदीर्घां संकल्पसोपानततिंत दीयाम् । श्वासानविकर्षत्यधिकंपुनर्यद्ध्यानात्त वत्वन्मयतांतदाप्य ॥ ६ ॥**

तृतीयामाह ॥ अजस्रमिति ॥ त्वंदूरदीर्घामतिमहतींतदीयां नलसम्बन्धिनीसंकल्परूपांसोपानपरम्परांमेनी, प्राप्तिः कथभवेत् प्रा प्तेसत्यांअहमेवंकरिष्यामिसाएवंकरिष्यतीत्येवंरूपांनानाविचारलक्षणां अजस्रंनिरन्तरंमारोहसित्वत्प्राप्त्युपायादिसर्वदाविचारयतीत्यर्थः यत्पु नःसनलःअधिकमत्यर्थंश्वासान् निश्वासान् वर्षतिमुञ्चतितत्तवध्यानाच्चि न्तनात्त्वन्मयतांत्वत्सायुज्यं आप्यप्राप्यत्वत्प्रधानोभूत्वात्वय्यनुरागवाहु ल्यात्वच्चिन्तनात्त्वत्प्राप्तेरभावाद्दुःखवशादत्यर्थंनिश्वासान्मुञ्चतीत्यर्थः यो तिदीर्घांसोपानपङ्क्तिमारोहतिसनिश्वासान्मुञ्चति अत्रतुविपरीतमित्या श्चर्यं तच्चतवध्यानात्त्वन्मयत्वप्राप्तेसत्यांव्यधिकरणत्वाभावात्संगच्छतेत्व द्ध्यानलेयुज्यते तस्मात्त्वत्सायुज्यंतस्यजातमित्यनुमीयतेइतिभावःअथ मयोयंध्यायतिसतन्मयोभवति योगप्रभावात्प्रह्लादोजातोविष्णुमयोसुर इतिविष्णुपुराणम् आरोहणंस्यात्सोपानमित्यमरः आप्येत्यत्राहासमासः तृतीयावस्थानेनानुभूयतइति ॥ १०६ ॥

**हृत्तस्ययन्मंत्रयतेरहस्त्वां तद्यक्तमात्रंत्रयतेमुखं यत् । तद्वैरिपुष्पायुधमित्रचन्द्र सख्यौचितीसा खलुतन्मुखस्य ॥ ७ ॥**

संकल्पमेवाह ॥ हृदिति ॥ तस्यनलस्यहृदन्तःकरणंरहःएकान्तेयन्त्वां

न्मन्त्रयतेत्वामुद्दिश्यगुप्तंयद्भाषते नैमींप्राप्यतांप्रत्येवंवदिष्यामि आलिङ्गना दिकंदेहीतिगुप्तंविचारकरोति। मुखंनलमुखंकर्तृतद्गुप्तंजापणकर्म व्यक्तंयत आमन्त्रयतेभाषते मुखस्यपाण्डुताम्लानतादिगुणंदृष्ट्वात्वामेवध्यायतीति व्यक्तंज्ञायतेइत्यर्थः। सालन्मुखस्यनलमुखस्यतद्वैरीनलवैरीपुष्पायुधः काम स्तस्यमित्रंचंद्रस्तेनसहयत्तस्यमैत्रीतस्यौचिती खलुनिश्चयेउत्प्रेक्षायांवा। चंद्रतुल्यत्वान्नलमुखंचन्द्रमित्रं, नलःकामस्यशत्रुः पीड्यमानत्वात्, चन्द्रो पिमदनमित्रंतद्वृद्धिकरत्वात्, मित्रंचमित्रस्यकार्यंकरोति नलोमंत्रलक्षणांश क्तिप्रयुङ्क्ते।नलस्यविधंमित्रंकरोतीति नलशक्तेर्मदनस्याग्रेमदनमित्रेणाक थनीयं। नीतिज्ञाहिमित्रमित्रेणापिरिपुमन्त्रभेदंकुर्वन्ति, तच्चन्द्रमित्रेण न लमुखेनकृतमितिभावः॥ मुखेमपाण्डुत्वादिगुणदर्शनादतिशयेनत्वद्विषयां चिन्तांकरोतीतिस्पष्टंज्ञायतइत्यर्थः। खमन्यर्थेरहोव्ययमित्यमरः। मन्त्र गुप्तभाषणे॥ १७७॥

स्थितस्य रात्रावधिशय्यशय्यांमोहेमनस्तस्यनिम ज्जयन्ती॥ आलिङ्ग्ययाचुम्बतिलोचनेसानिद्रा धुनानत्वदृतेङ्गनावा॥ ८॥

क्रमतुल्ल ङ्घ्यलाघवार्थंनेकप्रयत्नेनैवचतुर्थींपष्ठींचावस्थामाह॥ स्थितस्ये ति॥ रात्रौशय्यामधिशय्याधिरुह्यस्थितस्यतस्यमनोमोहेवैचित्र्येसति हविश्ले षेचमोहोमदनयुद्धंतत्रवानिमज्जयन्तीतद्वशांकुर्वतीसतीया आलिङ्ग्याङ्गा निश्लथायित्वालोचनेचुम्बतितत्रनस्वङ्गाभवति। अथचलतावेष्टिताद्यालि ङ्गनादीनिकृत्वायानेत्रचुम्बनं करोतिसैवंविधानिद्रांगनावात्वदृतेत्वांविना अधुनाइदानींनविद्यते। त्वद्विरहात्तस्यननिद्रात्वद्व्यतिरेकेणैवंविधाङ्गनापि नरोचतइतिभावः। श्लेषप्रयत्नेननिद्राच्छेदविषयनिवृत्तिलक्षणे अवस्थेप्रो क्ते। क्रमोल्लङ्घनंदोषायनेतिज्ञेयम्॥ शय्यां अधिशीङ्स्थितिकर्मत्वं, ऋत् अन्यारादितिपञ्चमी॥ १७८॥

स्मरेणनिस्तक्ष्यवृथैवबाणै र्लावण्यशेषंकृशताम नायि॥ अनंगतामप्ययमाप्यमानः स्पर्द्धांनसार्द्धं विजहातितेन॥ ९॥

पञ्चमीमाह ॥ स्मरेणेति ॥ स नलः स्मरेण बाणैर्निस्तक्ष्य निर्भिद्य लावण्यं सौन्दर्यमेवशेषं यस्यास्तां कृशतां वृथैवानायि नीतः प्रापितः । लावण्यस्थितशरीरं क्षीणं, यतः असमकृतामतिकृशता मकृतवती तां मदनत्वं नीयमानोप्ययं तेन मदनेन सह स्पर्द्धां साम्यं न त्यजति । रूपसाम्यात्कृद्धेन कामेनातिकृशत्वं नीतः, तत ईषदङ्गो नङ्गः नञ्समास ईषदर्थे ऽनुदराकन्येतिवत्, कृतेपि कृशत्वे सुतरां साम्यमेवाभूदिति भावः ॥ अतएव लावण्यशेषामित्युक्तं तथैवेति पाठे लावण्यशेषामेव कृशतां तथानीयि यथानंगतामाप्यमानोपि तेन सहस्पर्द्धां न त्यजतीति व्याख्या ॥ १०९ ॥

त्वत्प्रापकात्त्रस्यति नैनसोवा त्वय्येष दास्येपि न लज्जते यत् ॥ स्मरेण बाणैरतितक्ष्य तीक्ष्णै र्लूनः स्वभावोपि कियान्किमस्य ॥ ११० ॥

सप्तमीमाह ॥ त्वदिति ॥ एषः नलः त्वां प्रापयति दापयतीति त्वत्प्रापकं तस्मादेनसोपि पापादपि, राजसायुद्धहरणादित्यादिबलादिरूपान्नत्रसति न बिभेति । यच्च त्वयि विषये दास्येपि न लज्जते ततो हेतोः स्मरेणातीक्ष्णैर्बाणैः अतितक्ष्या तिशयेनास्य शरीरं तनूकृत्य कियान् स्वल्पः स्वभावोपि लूनः छिन्नः किमिति सहेतुकोत्प्रेक्षा । धर्मशीलत्वादयं सर्वदा यातकाद्बिभेति दास त्वे च राजत्वाल्लज्जते इत्यस्य स्वभावः स तु त्वत्प्राप्तिलोभेन नष्ट इत्यतः शरीरस्या तिकार्श्यात्स्वभावस्यापि कार्श्यं जातमित्यनुमीयत इत्यर्थः । त्रपानाशावस्थो क्ता, त्वत्प्रापकादित्यादिना त्वदन्यविषयपरित्यागेन विषयनिवृत्तिरेव ताम यं वृत्त्यावर्ण्यत इति श्लोकतात्पर्यं ॥ अतितक्ष्येति स्वभावापगमे हेतुत्वार्थमुक्तं न तु तनुतावस्थाप्रतिपादनार्थं, शरीरस्यातितक्षणे स्वभावलूनत्वं संभाव्यत इति द्योतनार्थमतिशब्दतीक्ष्णशब्दप्रयोगौ । एनसः भीत्रार्थेति पञ्चमी ॥ ११० ॥

स्मारं ज्वरं घोरमपत्रपिष्णोः सिद्धागदंकारचये चिकित्सौ ॥ निदानमौनादविशद्विशाला साङ्क्रामिकीतस्य रुजेव लज्जा ॥ १११ ॥

पुनः त्रपानाशमेवाह ॥ यद्वा प्रथमतस्त्रपानाशं वर्णयितुमाह ॥ स्मारमिति ॥ तस्य नलस्य विशाला महती लज्जा सिद्धे चिकित्सासमर्थे अगदंकार

चयेवैद्यसमूहेनिदानमौनात् आदिकारणस्याज्ञानात् अविग्रतप्रविष्टा । किं नूतस्य अपत्र पक्ष्णोः लज्जाशीलस्य । किंमूनेस्मारंमदनजनितंघोरंदारुणा ज्वरंचिकित्सौप्रतिकुर्वाते। केंवसङ्क्रमणजनितासाङ्क्रामिकीसंसर्गजनि तारुजेवरोगइव,,यथाहिव्याधिः क्षयिणंपरित्यज्ययथान्यंसंसर्गिणंप्रविशति तथालज्जाशीलस्यनलस्यलज्जयाजवितव्यं, साचतंविहायवैद्यसमूहेदृश्यते कार्य्येनिदानाज्ञानात् अक्षिरोगोज्वरःकुष्ठंतथापस्मारएवच । सहभुक्त्या दिसंवधात्सङ्क्रामन्तिनरान्तरमितिवैद्यैः पृष्टेनतेनलज्जांविहायनिदानंय दैवकथितंतदैवा स्माभिर्ज्ञातमित्युक्त्वालज्जितं । लज्जाशीलोपत्रपिष्णु रित्यमरः । ज्वरमलोकेतिषष्ठीनिषेधाद्द्वितीया, अपत्रपिष्णोः अलंकृञि तिइष्णुच्, अगदंरोगरहितंकरोतीत्यगदंकारः, कर्मण्यणन्तेकारशब्देउत्तर पदेकारेसत्यागदस्येतिमुम्, सांक्रामिकी आध्यात्मादित्वाट्ठ, अनुशति कादित्वादुभयपदवृद्धिः ॥ १११ ॥

विभेतिरुष्टासिकिलेत्यकस्मा त्स्मृत्वांकिलापेतिहस त्यकाण्डे ॥ यान्तीमिवत्वामनुयात्यहेतोरुक्तस्त्व यैवप्रतिवक्तिमोघं ॥ १२ ॥

अष्टमीमाह ॥ विभेतीति ॥ नलः हेभैमित्वंरुष्टासिकुपितासिकिलेति संभाव्य कस्मात्त्वत्कोपेनविनैवविभेति भयंप्राप्नोति । तथाकिलनिष्याजू तांत्वां आपप्राप्तवानितिकृत्वाअकाण्डेऽनवसरएवत्वत्प्राप्तिं विनैवसुखा तिशयाद्धसति । तथायांतीमिवगच्छंतीमिवत्वां अनुलक्षीकृत्याहेतोःनि ष्कारणंयाति । तथ त्वयाउक्तइवसम्भाषितइव आगच्छामित्वदादर्शन यापूर्वमेवकृतमित्यादिमोघनिष्फलप्रतिवक्तिप्रतिवचनंददाति उन्मादाव स्था ॥ ११२ ॥

भवद्वियोगाच्छिदुरार्तिधारा यमस्वसुर्मज्जतिनिः शरण्यः ॥ मूर्छामयद्वीपमहान्ध्यपङ्के हाहामहीभृद्भ टकुञ्जरोयम् ॥ १३ ॥

नवमीमाह ॥ भवदिति ॥ भवंत्यावियोगेनविरहेणजनिताऽच्छिदुरासं तताया आर्तिःपीडातस्याधारामवालीपरंपरासैवयमस्वसायमुनातस्याः मू

र्छामयंमूर्छारूपंयद्द्वीपज्जलमध्यावकाशःतस्मिन्महान्ध्यलक्षणोमहाज्ञान लक्षणःपङ्कःकर्द्दमस्तस्मिन्निःशरणयोरक्षितृरहितो ऽयंनलःमहीश्वद्वटोरा जश्रेष्ठएवकुञ्जरोहस्तीनिमज्जतिबुडति, हाहाखेदातिशये । अन्योपि कुञ्जरोहस्तिपकंविनानद्याद्वीपपंकेबुडति, पङ्कमग्नोगजोनोद्धर्तुंशक्यते इ ति मूर्छावस्था एवंनवावस्थासूचकाःश्लोकाःलिपिमित्याद्योयथायथमू ह्याः । भवत्याविप्रयोगइति सर्वनाम्नोवृत्तिमात्रइति पुंवत् । अच्छिदुरेति विदिभिदोतिकुरच् ॥ ११३ ॥

सव्यापसव्यत्यजनाद्द्विरुक्तैः पञ्चेषुबाणैःपृथगर्जितासु ॥ दशासुशेषाखलुतद्दशाया तयानभःपुष्प्यतुकोरकेण ॥ ११४ ॥

उक्तिविशेषेणदशमीमवस्थामाह ॥ सव्येति ॥ सव्यापसव्याभ्यांत्यजनं मोचनंतस्माद् द्विगुणीकृतैः पञ्चभिःपञ्चेषुबाणैः कामबाणैः पृथक्प्रत्येकंमूर्जि तासुरचितासुदशास्वर्जितप्रायासुमध्ये शेषा ऽवशिष्टायातद्दशामृतिलक्षणा तयाकोरकेणकलिकयानभोगगनंखलुनिश्चितपुष्प्यतुपुष्पितंभवतु।सादशमी दशाखपुष्पातुल्यासर्वथाभवतीत्यर्थः । एकैकेनमदनबाणेनान्येपांदशाव स्थानवंति, अस्यतुनवदशमीनेतितस्याअवसरः, अस्याःकोरकत्वमननुभू तत्वात्,तवलाभश्चेन्नभविष्यतितर्हिसापिदशाभविष्यति सामाभूत्त्वत्प्राप्ति रेवभवत्वितिभावः ॥ दशायाअशुभत्वान्नामग्रहणानर्हत्वात्तच्छब्दप्रयो गः । द्विरुक्तशब्दोलक्षणयाद्विगुणपर्यायः, शेषशब्दःस्त्रीलिङ्गः अभिधेय लिङ्गत्वात्, पुष्पविकसनेआशिषिलोट् । चक्षूरागःप्रथमंचित्तासंगस्ततोथ संकल्पः ॥ निद्राछेदस्तनुतानिविषयनिवृत्तिस्त्रपानाश १ उन्मादोमूर्छामरणं चेतिदशावस्थाः ॥ ११४ ॥

त्वयिस्मराधेःसततास्मितेन प्रस्थापितोभूमिभृतास्मितेन ॥ आगत्यभूतःसफलोभवत्या भावप्रतीत्यागुणलोभवत्याः ॥ ११५ ॥

प्रकृतमाह। त्वयीति॥स्मराधेःकामजनितपीडातःसततंनियतमस्मितेनहा सरहितेनतेनभूभिभृताराज्ञा।त्वयिविषयेअहंप्रस्थापितोस्मि।भैमीमदर्थंत्व

याविज्ञापनीयेत्यर्थः मिहागत्य गुणेषु लोभवत्या अनुरागिण्या भवत्यास्तवभा वप्रतीत्या प्रेमपरिक्षणेन सफल कृत कार्यो भूतः जातः। नलसदृशो गुणी त्वं च गुणानुरागिणी त्वं तस्मात् त्वमस्मिन्ननुरक्तेति ज्ञात्वा कृतार्थो जातोऽस्मीति भावः ११५

धन्यासि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ॥ इतः स्तुतिः का खलु चंद्रिकाया यदब्धिमप्युत्तरलीकरोति ॥ १६ ॥

धन्यासीति ॥ हे वैदर्भि जैमिसात्वं धन्या दैवाधिकासि । यया त्वया उदारैर तिरमणीयैर्गुणैः सौन्दर्यादिभिः कृत्वा नैषधो धीरोदात्तो नलोपि समाकृष्यत स्ववशीकृतः याइदृशं धीरं वशीकरोति तत परा का धन्येत्यर्थः। दृष्टान्तेन धन्य त्वं समर्थयते खलु यस्माच्चन्द्रिकाया इतः परा का स्तुतिरस्ति यद्या गम्भीरमपि अब्धिं समुद्रं चञ्चलीकरोति अतिशयेन चञ्चलीकरोति, तद्वत्त्वं वशीकरणेन वत् वस्तुतिर्धन्यता अयं वैदर्भी काव्यकारीतिः गुणैः श्लेषादिभिरलङ्कारैः, अन्य दपि विशालैर्दारकैराकृष्यते ॥ ११६ ॥

नलेन भायाः शशिना निशेव त्वया स भायान्निशया शशीव ॥ पुनः पुनस्तद्युगयुग्विधाता योग्यामुपास्ते न युवां युयुक्षुः ॥ १७ ॥

नलेनेति ॥ हे भैमि त्वं नलेन कृत्वा भायाः शोभस्व । केनकेव पूर्णेन शशिना निशेव । स नलस्त्वया कृत्वा भायात् शोभतां । कया क इव निशया शशीव । उभयोः समागमे भावपि ब्यतिभातामित्यर्थः । नुत्प्रेक्षते पुनः पुनः प्रति मासं तद्युगं चन्द्रनिशालक्षणं युग्मं युनक्तीति युक् एवं विधो विधाता ब्रह्मा युवां उभावपि युयुक्षुः योक्तुमिच्छन् सन् योग्यामभ्यासं नूपास्ते करोति शिल्पी समयं वस्तु संघट्टयितुमभ्यासं करोति, अन्यथा चन्द्रनिशयोः पुनः पुनर्योजनं व्यर्थं स्यादित्यर्थः यतिः प्रमाणं स्वभ्यासमास्ते इतिपाठे अभ्यासस्य समृद्धार्थं समृद्धाव भावे चतुर्थ्या अव्ययीभावः ॥ योग्याभ्यासार्कयोरितिविश्वः ॥ ११७ ॥

स्तनद्वये तन्वि परं तवैव पृथौ यदि प्राप्स्यसि नैषधस्य ॥ अनल्पवैदग्ध्यविवर्द्धिनीनां पत्रावलीनां रचना समाप्तिम् ॥ १८ ॥

स्तनद्वयइति ॥ हेतन्विकृशाङ्गि नैषधस्यनलस्यानल्पवहुतरवैदग्ध्यंकौशलंतस्याविवर्द्धिनीनांख्यापिकानांपत्रावलीनांपत्र वल्लीपङ्क्तीनांवलमारचनास्समाप्तिंयदिप्राप्स्यसि, तर्हिपरकेवलंपृथौविशालेतवैवस्तनद्वये अतिपीनत्वात्नान्यस्याल्पकत्वात्अपृथुशब्दोभाषितपुंस्कः ॥ ११८ ॥

एकः सुधांशुर्नकथंचनस्या त्तृप्तिक्षमस्त्वन्नयनद्वयस्य ॥ त्वल्लोचनासेचनकस्तदस्तु नलास्यशीतद्युतिसद्वितीयः ॥ ११ ॥

एकइति । एकोऽसहायःसुधांशुश्चन्द्रोऽ तिविशालस्यत्वन्नयनद्वयस्यकथंचनकेनापि प्रकारेणतृप्तिक्षमःसंतर्पणसमर्थोयतोनस्यान्नभवेत् । ततस्तःकारणात्सचन्द्रोनलास्यलक्षणोयःशीतद्युतिश्चन्द्रस्तेनसद्वितीयः ससहायःसन्त्वल्लोचनयोस्तवनेत्रयोरासेचनकोनिर्मर्यादतृप्तिकारीअस्तु भवतुचकोरतुल्यस्यत्वन्नेत्रद्वयस्यैकेनचन्द्रेण तृप्त्यभावात् चन्द्रद्वयेनभवितव्यंतत्र चन्द्रसहकारीनलास्यचन्द्रोभवत्वित्यभिप्रायः तत्प्राप्त्यर्थंयत्नःकार्यइतिभावः त्वदासेचनकंतृप्तेर्नास्त्य तोयस्यदर्शनमित्यमरः ॥ ११९ ॥

अहोतपः कल्पतरुर्नलीय स्त्वत्पाणिजाग्रस्फुरदङ्कुरश्रीः॥तद्भ्रूयुगंयस्यखलुद्विपत्रीतवाधरोरज्यतियत्कलंबः ॥ २० ॥

अहोइति ॥ यस्तइतियुग्मम् नलीयोनलसंम्बन्धीतपोतरुः कल्पवृक्षः अहोआश्चर्यरूपः आश्चर्यरूपत्वमेवविशेषणैः प्रकटयति कीदृशःकल्पतरुःत्वत्पाणिजाग्राणितवनखाग्राण्येव स्फुरन्तीप्रकाशमाना अङ्कुरश्रीरङ्कुरशोभायस्यखलुनिश्चये अङ्कुरानन्तरंत्वद्भ्रूयुगमेवयस्य कल्पवृक्षस्यद्विपत्रीपत्रद्वयी तवाधरओष्ठएवयस्यकलंम्बः मध्यमांकुरोनालमित्यर्थः रज्यतिआरक्तोभवति प्रथमाङ्कुरापेक्षयामध्यमांकुरस्यातिरक्तत्वात् यस्तेकराभ्यांनवभूतनः पल्लवयुक्तोविद्यते मध्यमांकुरापेक्षया अतिरक्तत्वात्तवहस्तावेवपल्लवौजातौयस्तवस्मितेनकोरकितः कलिकायुक्तआस्तेपल्लवानंतरंकोरकाभवन्ति स्मितस्यसितत्वात्कोरकत्वं कोरकापेक्षयाविकस्वराणांपुष्पाणांमृदुत्वात् ॥ १२० ॥

यस्तेनवःपल्लवितःकराभ्यां स्मितेनयःकोरकित स्तवास्ते ॥ अङ्गम्रदिम्नातवपुष्पितोय स्तनश्रिया यःफलितस्तवैव ॥ २१ ॥

यइति ॥ यःतवअंगम्रदिम्नाशरीरमार्द्दवेनपुष्पितः पुष्पयुक्तोविभाति अतिमृदूनितवांगानियस्यपुष्पस्थानेजातानि यस्तवैवस्तन श्रियाफलितः फलयुक्तः तवस्तनावेवयस्यफलस्थानेजातौ अतीवाश्चर्यजनकोयंनलीय स्तपःकल्पवृक्षः एवंविधांत्वांप्राप्तुंतेनैवतपसमंनान्येनेतिभावः अन्यस्य शरीरेतेपदार्थाः क्रमेणभवन्तिएतस्यतुएककालमेवेति अहोशब्दआश्चर्यं द्योतयति कलम्बःसायकेनीपेनालेशाकेकलंव्यपीतिविश्वः नलीयःवा ना मधेयस्येतिवृद्धसंज्ञायावृद्धाच्छः रञ्जयति कुर्विरंजोरितिकर्मकर्तरिशवन्पर स्मैपदे पल्लवितस्तारकितः ॥ १२१ ॥

युग्मम् ॥ कांसीकृतासीत्खलुमंडलीन्दोःसंसक्त रश्मिप्रकरास्मरेण ॥ तुलाचनाराचलतानिजैवमि थोनुरागस्यसमीकृतौवाम् ॥ २२ ॥ रूपक

कांसीति ॥ खलूत्प्रेक्षे हेभैमिवांतवनलस्यचमिथः परस्परंयोनुरागस्त स्यतुलीकृतौसमीकरणेनलस्यत्वयियावाननुरागस्तावानेवतवनले ऽनुराग इति उभयोरनुरागस्यतुलनार्थंस्मरेणइन्दोश्चन्द्रस्य मण्डलीकांसीकृता परि मेयवस्तुधारणार्थंकांस्यपात्रमिवकृतासीत् किंभूतासंसक्ताः सम्बद्धावः र श्मिप्रकराः किरणसमूहाःरज्जुसमूहाश्चयस्याः सा निजैवस्वीयैवनाराचल ताशलाकाचतुलाचतुलादण्डश्चकृता कंसायपत्रंवशेषायहितंकंसीयंतस्मै हितमितिप्राक्क्रीताच्छः तस्यविकारःकंसीयपरशव्ययोरितियञ्लुक् कां स्यं अकांस्यंकांस्यंसंपन्नं कांसीकृतं चौअभूततद्भावेतिहलचहरस्यआदेः पर स्येतिचकांस्येतियकारमात्रस्यलोपः अवर्णस्यअस्यच्चाविति ईत्वं कंसीकृते तिपाठे कंसोद्दैत्यांतरेपिच कांस्येचकांस्यपात्रेचेतिविश्वः किरणप्रग्रहौर श्मीत्यमरः ॥ १२२ ॥

सत्वस्रुतस्वेदमधूत्थसांद्रे तत्पाणिपद्मेमदनोत्सवे षु ॥ लग्नोत्थितात्वत्कुचपत्रलेखायन्निर्गतास्तंप्र

विशन्तुभूयः ॥ २३ ॥

सत्वेति ॥ हेभैमिमदृतोत्सवेपुनस्पाणिपद्मेनलहस्तकमलेपूर्वंलग्नाः पश्चादुत्थितास्त्वत्कुचयोः पत्रलेखापत्रावलयः तन्निर्गताः नलपाणिपद्मे नैषलिखिताभूयस्तमेवपाणिपद्मंप्रविशन्तु किंभूतेपाणिपद्मे सत्वेनसत्वभावेनश्रुतोजनितः स्वेदःघर्मोदकंतस्मनवर्णमधूत्थसिक्यकन्तेनसान्द्रे निबिडे वृतोत्सववशात्पत्रावल्योमार्जनंभवत्वित्यर्थः कारणेकार्यस्यलयउचितइतिभावः मधूत्थेयथालिखितमेतीतिमधूत्थपदं पद्म.पुल्लिङ्गेपि ततः तस्मितियुज्यते ॥ १२३ ॥

बंधाढ्यनानारतमल्लयुद्धप्रमोदितैः केलिवनेमरुद्भिः प्रसूनवृष्टिंपुनरुक्तमुक्तां प्रतीच्छतंभैमियुवां युवानौ ॥ २४ ॥

बंधाढ्येति ॥ हेभैमियुवांनौतरुणौयुवांकेलिवनेक्रीडावनेमरुद्भिर्वायुभिः पुनरुक्तंपुनःपुनर्मुक्तांत्यक्तां प्रसूनवृष्टिंप्रतीच्छतांङ्गृह्णीत किंभूतैर्मरुद्भिःबंधैःपङ्कजासनादिसुरतबंधैराढ्यंविस्तृतंनानारतं अनेकप्रकारंरततदेवमल्लयुद्धन्तेनप्रमोदितैप्रकर्षेणपरिमलंप्रापितैः सम्भोगेनपुष्पेषुच्युतेषुपुनः पुनर्मोचनंमङ्गलते अथच मल्लयुद्धदृष्टैर्देवैर्मुक्तांपुष्पवृष्टिमङ्गीगृह्णीतः मरुतौपवनामरावित्यमरः युवतिश्चयुवाचपुमान् स्त्रियेत्येकशेषः ॥ १२४ ॥

अन्योन्यसंङ्गमवशादधुनाविभातांतस्यापितेपिमनसोविकसद्विलासे ॥ स्रष्टुंपुनर्मनसिजस्यतनुंप्रवृत्तमादाविवद्व्यणुककृत्यरमाणुयुग्मम् ॥ २५ ॥

अन्योन्येति ॥ अधुनाअन्योन्यसङ्गमवशात्परस्परसंयोगवशात् विकसन्विलासोविभ्रमोययोस्तेतस्यापि नलस्यापितेपितवापिमनसीपरमाणुयुग्ममिवविज्ञातांशोभेतां ॥ किंभूतंपरमाणुयुग्मं मनसिजस्यकामस्यतनुंशरीरंपुनः स्रष्टुंप्रवृत्तं अतएवादौद्व्यणुकङ्करोतीतिद्व्यणुककृत् सक्रियाभ्याद्वाभ्यापरमाणुभ्यांएकंद्व्यणुकमारभ्यते एवंक्रमेणमहत्कार्यमारभ्यतइति सिद्धान्तः दग्धस्यकामस्यमनोजन्यत्वान्मनसिजत्वं ततश्चतदुत्पत्यर्थंमनो

द्वयेनद्यणुकमारब्धव्यं तत्तुयेनकेनचिन्मनोद्वयेनकर्तुंनशक्यते एताद्रृशपर स्परानुरागस्यकुत्रचिदप्यभावात् ततश्चयुवयोरेवमनोद्वयेनकर्तुंशक्यं नान्ये नेतिभावः युवयोःपरस्परानुरागस्सूत्रतुल्यात्कामः शरीरीस्यादितिभावः ॥ १२५ ॥

कामः कौसुमचापदुर्जयममुंजेतुंनृपंत्वांधनुर्वल्लीम
व्रणवंशजामधिगुणामासाद्यमाश्यत्यसौ ॥ ग्रीवा
लंकृतपट्टसूत्रलतया पृष्ठेकियल्लंबया भ्राजिष्णुंकषरे
खयेवविलसत्सिंदूरसौंदर्यया ॥ २६ ॥

कामइति ॥ असौकामः कौसुमेनचापेनदुर्जेयंजेतुमशक्यं अमुंनृपंनल त्वांतु अव्रणेतिद्रोषेवंशेजातां अयचयुवाद्दिजन्यछिद्ररहितवेणुजाताञ्च धिगुणांअतिशयितसौन्दर्यादिगुणयुक्तां आरोपितमौर्वीकाञ्चत्वांतन्मयीं धनुर्वल्लींधनुर्लतां आसाद्यप्राप्यमाद्यति अधुनानलञ्जेष्यामीतितुष्य ति किंभूताधनुर्वल्लींधनुर्वल्ल्यांनिवसताविद्यमानेनसिन्दूरेण सौन्दर्यंलौ हितिमायस्यातयाधनु: पृष्ठभागेअयचपश्चाद्भागेकियल्लंबयाकियद्दीर्घया ग्रीवामध्यकण्ठश्चतस्याः अलङ्कृतिरलङ्कारभूतापट्टसूत्रलताढीर्घयापट्टसूत्रे णेत्यर्थः तयाभ्राजिष्णुं शोभमानां कयेव कषरेखयेवपरीक्षारेखयेव कषणा धारयःधनुर्योग्यवेणुपरीक्षायांनिघृष्यमाणं सिन्दूरंचलसिपेक्षदापरिपाको ऽयं इतिधानुष्कप्रसिद्धिः कामस्त्वांविनानलवशीकरणकार्यंकिमपिन विद्यतइत्यर्थः भ्राजिष्णुंभुवश्चेतिचकारादिष्णुच् ॥ १२६ ॥

त्वद्गुच्छावलिमौक्तिकानिगुलिकास्ते राजहंसंवि
भोर्वेध्यविद्धिमनोभुवः स्वमर्पितामंजुधनुर्वल्लमरी
यन्नित्यांक्रनितासलालिततमज्याभुज्यमुनंलसल्ला
भीमध्याविलर्टविलासमखिलरोमालिरालंम्बते २७

त्वदिति ॥ हेभैमित्वंविभोर्मनोभुवः कामस्यत्वद्गुच्छावलेस्तवहारविशेष पड़क्तेर्मौक्तिकान्येवगुलिकाः मृत्पाषाणगोलकान्विद्धिजानीहि तथातंराज हंसंनृपश्रेष्ठंनलस्वेध्यं अथचतंनलमेवराजहंसाख्यंपक्षिविशेषंकामस्यवे ध्यलक्ष्यंविद्धि तथास्वमात्मानमर्पितांवद्यमाणगुणयुक्तांमञ्जुंमनोज्ञांध

नुर्मञ्जरीधनुर्लतांजानीहि तवरोमावलिः रोमराजिःयस्याः धनुर्लतायाः नित्यंसर्वदाअङ्कनिवासोमध्यवसतिस्तयालालितया अतिशयेननर्तितयाशो भमानात्युत्मौर्वीतयामुल्यमानंसेव्यमानं भुज्यमानमनुभूयमानंवाऽखिलं विलासम्बापनध्यमतिशोभमानमौर्व्याः सम्पूर्णालीलामालम्बते अङ्गी करोति रोमराजिरेवमौर्व्याः स्थानेजातेत्यर्थः किंभूतारोमालिःलसन्ती नाभ्येवमध्यंविलयस्याः साङ्गुलिकाधारणछिद्रस्थानेनाजिरेवजातेत्यर्थः गु लिकाधनुरितिनाम त्वद्रूपेणशक्तेणनतः कामस्यकथ्योलान्येनेनिभावः धनुर्मौर्वीमध्यंगुलिकारोपणस्थानेजिलम्भवति तदङ्गनाभिरेव रोमालि र्मौर्वी अङ्कयष्टिर्धनुः राजहंसोवेध्यइत्यर्थः विमुक्तगुलिकाधनुः क्रीडांक रोति हारभेदायष्टिभेदागुच्छगुच्छार्द्धगोस्तनाइत्यमरः राजहंसोनृपश्रेष्ठेका दम्बकलहंसयोरितिविश्वः ॥ २७ ॥

पुष्पेषुश्चिकुरेषुतेशरचयंस्वंभाल मूलेधनूरौद्रेचक्षु-
षितज्जितस्तनुमनुभ्रष्टंचयन्निक्षिपे ॥ निर्विघ्ना
श्रयदाश्रमंसविनुतनुस्त्वांतज्जयायाधुना पत्राालि
स्त्वदुरोजशैलनिलयात्तृणशालायते ॥ २८ ॥

पुष्पेषुरिति ॥ तेननलेनसौन्दर्यादिनागुणेनजितोऽतएवनिर्विन्नवैरा ग्यंप्राप्यमयः पुष्पेषुःकामःसतेतवचिकुरेषुकेशपाशेषुपुष्पेषुस्वात्स्वंशरचयं वाणसमूहंचिक्षिपेत्यक्तवान् तवभालमूलेललाटमूलेभ्रूस्थानेस्वंधनुस्त्यक्त वान् रौद्रंरुद्रसम्बन्धिनिदाहकेचक्षुषि अनुत्वाद्गृतीयनेत्रलक्षणेअञ्जन पात्रेस्वीयान्तनुंचचिन्निक्षिप्तवान् सकामोधुनाविततुः शरीररहितोऽय थविशेषेणकृशःसन्तज्जयायतंनलञ्जेतुंत्वामेवाश्रमं आश्रयत् तथातवउरो जौस्तनावेवशैलौताविवनिलयः स्थानंयस्याः सातत्रविद्यमानापत्रालिः प त्रवल्लीपंक्तिस्तस्यकामस्यपर्णशालेवाचरतिजयति भैमीकेशपाशपुष्पाणां कामजनकत्वात् कामवाणत्वंभ्रुवोरपिकामजनकत्वाद्धनुष्टुं स्तनपर्वतनिम्न यपत्रवल्लीनामपितज्जनकत्वात्गृहत्वं त्वय्येवशक्तेरकालेनमनेतव्योनान्यत् किञ्चित्तज्जयायेतित्वदाश्रयेणमदनंतंपीडयतीत्यर्थः अन्योपिजितः श स्त्रादित्यक्त्वाशत्रुंजेतुंपर्वतेपर्णशालामचिटायतपस्यति अनुत्वाद्रुसहस्यर्थं सादृश्येवाव्ययीभावः लिपेःस्वरितत्वातङ् ॥ २८ ॥

नंप्रापतंसज्वलदसमशरेषुस्पार्द्धपुष्पार्द्धमौलेः ३३॥

सरसीति ॥ सहंसःयत्रसंरसिनृपंपूर्वं अपश्यत्तस्यसरसस्तीरंभजतीति
स्य अशोकांनोकहस्य अशोकवृक्षस्यउपमूलंमूलसमीपेतंनलंप्राप किंभूतं
स्मरतरलंमदनजनितपीडयाचञ्चलं तथाकिसलयानामग्रपल्लवानान्दलानि
कोमलाङ्कुरास्तैपान्तल्पंशय्यातस्यामपिस्लापयिनंम्लानशीलं किंभूतस्यज्व
लन्तांदेदीप्यमाना असमशरेषवः कामवाणास्तैःसहस्पर्द्धतेएवं शीलानि
पुष्पाणितेषामृद्धिः समृद्धिःतद्युक्तोमौलिरग्रभागोयस्य विरहव्यथयाहंसं
प्रतीक्षमाणस्तत्रैवस्थितोयत्रपूर्वंहंसेनदृष्टः अशोकपुष्पाणां रक्तत्वाज्ज्वल
त्कामवाणतुल्यत्वम् ॥ १३३ ॥

परवतिदमयन्तित्वां नकिंचिद्वदामिमतमुपनद्रुकिं
मामाहसाशंसहंस । इतिवदति नलेसोतच्छ्वासो
पनम्रः प्रियमनुसुकृतांहिस्वस्पृहायाविलम्बः॥३४॥

परवतीति ॥ नलेउन्मादवशात्इति वदतिसति असौहंसःउपनम्रः स
मीपमागतः सन्तद्वैमीवृत्तान्तसर्वंशंसकथयतिस्म इतीतिकिंचित्प्र
त्यक्षीकृतामैमीमित्याह एवहमनपि हेपरवतिपित्राद्यधीनत्वात्परतन्त्रेद
मयति अहत्वांप्रति अद्यापिनागच्छसीत्यादि किञ्चिदपिनवदामिस्वातं
त्र्याभावात् हेहंसत्वंद्रुतंशीघ्रमुपनम्रःसमीपमागच्छ सामैमीमानुत्तरंकिं
मामवक्षीत् तदुत्तरंकथयेतिवाक्यार्थः । कथंतद्वचनानंतरमेवअयंगत्वाकथं
कथितवानित्याशंक्याह प्रियमिति हियस्मात्सुकृतांधार्मिकाणांप्रियंस्वा
भीष्टमनुलक्षीकृत्यस्वस्पृहायाएवविलम्बः नत्वन्यस्य यदैवतेषांवस्तुप्राप्ति
मिच्छाभवतितदैवपुण्यवशात् प्राप्नुवन्तीतिभावः स्वस्पृहायाइतिक्वचित्
स्पृहायाविलम्बःक्वेतियोजनीयम् सुकृतांपुण्यकर्मं पापमन्त्रपुण्येषुकृञइ
तिक्विप् आहेतिविभक्तिप्रतिरूपकमव्ययम् भूतार्थे ॥ १३४ ॥

कथितमपिनरेन्द्रैः शंसयामासहंसंकिमितिमिति
किपृच्छन्भाषितंसप्रियायाः ॥ अधिगतमपिसांद्रा
नंदमाध्वीकमत्तः स्वयमपिशतकृत्वस्तत्तथान्वाचच
क्षे ॥ ३५ ॥

कथितमपीति ॥ सनरेंद्रोनलः हंसेनकथितमप्रियायाः भैम्याःभाषितंवचनंकिमिति २ कीदृक् २ इत्येवं आदरातिशयेनहंसंपृच्छन् पुनरपि हंसमापयामासवादयतिस्म अथअनन्तरंसान्द्रोनिविडः आनन्दएवमाध्वीकंमधुतेनमत्तोहृष्टःसन् अधिगतंश्रोतार्थंतद्भैमीभाषितंस्वयमपिशतकृत्वः अनेकवारंहंसेनयथोक्तंतथैवेदृक्भैम्योक्तमीदृग्भैम्योक्तमितिशिरःकम्पाद्यभिनयेनान्वाचचक्षे अनूदितवान् अत्याद्दृतस्येयंजातिः मद्यविशेषश्चोक्तमपिपुनर्वादयति स्वयमपिपुनर्वदतिमधुमाध्वीकमद्ययोरित्यमरः मार्द्वीकमितिपाठे मृद्वीकायाद्राक्षायाविकारोमार्द्वीकं रासे शब्दकर्मत्वाद्वीकर्तुर्णयन्तेकर्मसंज्ञा शतवाराञ्छतकृत्वः संख्यायाःक्रियाभ्यावृत्तिगणन इति कृत्वसुच् ॥ १३५ ॥

श्रीहर्षंकविराजराजिमुकुटालंकारहीरसुतंश्रीहीरस्सुतेन्द्रियचयमामल्लदेवीचयं ततीयीकथामितोयमगमत्तस्यप्रणवन्धे ॥ महाकाव्येचारुणिनैषधीयचरिते सर्गोत्रिसर्गोज्ज्वलः ॥

श्रीहर्षमिति ॥ तार्तीयीकेतिद्वैतीयीकवत् ॥ इति श्रीवेदकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतेनैषधीयप्रकाशेतृतीयः सर्गः ॥३॥

अथ नलस्य गुणं गुणमात्मभूः सुरभितस्य यशःकुसुमंधनुः ॥ श्रुतिपथोपगतंसुमनस्तयातमिषुमाशु विधाय जिगाय ताम् ॥ १ ॥

श्रीगणेशायनमः ॥ अथेति । अथहंसगमनानन्तरमात्मभूः कामःश्रुतिपथेंकर्णमार्गेउपगतंप्राप्तमपकर्षितंनतथानलस्य सौन्दर्यादिगुणंगुणांमौर्वींविधायकृत्वातथाकर्णिलसुरभिख्यातसुगन्धिचतस्ययशोलक्षणकुसुमधनुर्विधाय तथाश्रुतिपथोपगतंश्रुतमाकर्णंकृष्टंचतमेवनलंसुमनस्तयामनोज्ञतयाकुसुमत्वेनचइषुंबाणंविधाय आशुतांभैमींजिगायजितवान् अन्यस्यान्यत्वमरणादिषुत्वेनसंभाव्यते । हंसमुखात्तंश्रुत्वाझटितिकामपीडा

सहितालातेतिभावः । नलेतदनुरागपोषार्थं विप्रलम्भवर्णनमनेनसर्गेण क्रियते । निर्वेदादयोविभावाश्चालस्यादयश्चविप्रलम्भशृंगारपोषार्थंयथाय थ मूहनीयाः । सुगन्धेचमनोज्ञेचसुरभीति विश्वः । जिगायसत्तिलटोजेरि तिकुत्वम् ॥ १ ॥

**यदतनुज्वरभाक्तनुते स्म सा प्रियकथासरसीरस मज्जनम् ॥ सपदि तस्य चिरान्तरतापिनी परि णतिर्विषमा समपद्यत ॥ २ ॥**

यदिति । यद्यस्मादतनुज्वरभाक्कामजनितसन्तापभाक्सा भैमी प्रिय कथानलगोष्ठ्यस्तल्लक्षणासरसीतस्याः विप्रलम्भाख्य शृङ्गारकूपेरसेनमज्जनं तस्यांरसेनप्रीत्यामज्जनं यासादरमाकर्णनमित्यर्थः । तनुतेस्मचकार । तस्ययन्मज्जनस्यसपदिपरिणतिःपरिपाको विषमादुःसहासमपद्यतजाता। चिरंचिरकालमन्तरंमनस्तापयति एवंशीलानलगुणाकर्णनेनकामपीडाश न्त्यर्थंतत्कथयाविरहपीडानाशोभविष्यतीति बुद्ध्यासादरंतथाऽऽकर्णि तायांप्रत्युततस्याउद्दीपकत्वात्तस्याः पूर्वापेक्षयाऽतितमासाकथाविरुद्धा र्थजनिकाजातेतिभावः । योपिज्वरीसरोजलस्नानकरोतितस्यचविषमाख्यो ज्वरोभवतिज्वरिणस्तदास्नान मपिविषमजनकं भवतिसरसीस्नानंतुसुत रामितिसरसीपदं ॥ २ ॥

**ध्रुवमधीतवती यमधीरतां दयितदूतपतत्त्रवेग तः ॥ स्थितिविरोधकरीं द्यणुकोदरी तदुदितः स हि योयदनन्तरः ॥ ३ ॥**

ध्रुवमिति । द्यणुकोदरी अतिकृशोदरीइयंभैमीदयितस्यनलस्यदूतो हंसस्तस्यपतत्त्रां पक्षाभ्यांगतोयोवेगस्तस्माद्दयितदूतस्यपततोः पक्षयो र्गतेगमनेयोवेगस्तस्माद्वापक्षाभ्यांगतंगमनंयस्यसपक्षीदयितदूतश्चासौपत त्त्रश्चेतितस्यवेगस्तस्मात्सकाशात्स्थितिः स्त्रीमर्यादातस्याविरोधकरीविरो धिनीमधीरतांधैर्याभावश्चैव्यं चाधीतवतीपठितवती स्वीचकारध्रुवमुत्प्रे क्षाअध्ययनेन्यायंप्रमाणयतिहियस्मात्योयस्मादनन्तरएवव्यवहितः सत दुदितस्तस्मादेवोत्पद्यते । यदनन्तरमेवयद्दृश्यतेतत्तस्यकारणमितिगौत

मः । तस्मिन्हृंसेगतमात्रएवतस्या १ अधीरताजातेतितस्मादेवाधीनेनि सहेतुकोत्प्रेक्षा । वेगतआस्यतोपयोगइत्यपादानत्वम् । विरोधकरीहृंवी टः ॥ ३ ॥

अतितमां समपादि जडाशयं स्मितलवस्मरणेपि तदाननम् ॥ अजनि पङ्गुरपाङ्गनिजोङ्गणभ्रमि कणेपि तदीक्षणखञ्जनः ॥ ४ ॥

अतीति । भैमीमुखंस्मितलवस्यहास्यलेशस्यस्मरणविषयेपि अतितरां जडाभिप्रायंसमपादिजातं ॥ विरहपीडयास्मितलेशमपिनाकार्षीत्स्मितं नाकरोदित्यत्रकिंवाच्यंतदीक्षण खञ्जनस्तस्यानयनरूपःखञ्जरीटोऽपाङ्ग नेत्रप्रान्तलक्षणेनिजाङ्गणेभ्रमिकणेपिभ्रमणलेशेपिपाङ्गुः खञ्जोऽज निजातः । अन्योपिनिजाङ्गणेसुखेनभ्रमतितस्यपत्यङ्गनेभ्रमतिभ्रयंनत त्राप्यसमर्थीभूत्खञ्जयति अन्यान्विलोकनमात्रेणपङ्गुन्करोतिमृगीगमने प्रिपङ्गुर्जातइत्याश्चर्यम् । विरहपीडयाकटाक्षावलोकनमपिविसस्मार । अतितमांस्वार्थेतमप् । समपादिकर्तरिचिण् अङ्गनमत्वमपपाठः । अजि रंत्वङ्गनंतदस्मात्कानिन्यामङ्गनामतेश्वतिविश्वः ॥ ४ ॥

किमु तदन्तरुभौ भिषजौ दिवः स्मरनलौ विश तःस्म विगाहितुम् ॥ तदसिकेन चिकित्सितुमा शु तां मखभुजामधिपेनानियोजितौ ॥ ५ ॥

किम्विति । स्मरनलौतदन्तस्तस्याअन्तर्हृदयंविगाहितुमालोडयितुंवि शतःस्मप्रविष्टौ । उत्प्रेक्षते । तदसिकेनतस्याभैम्याःकामुकेनमखभुजांदे वानामधिपेनइन्द्रेण आशुशीघ्रंतांभैमींचिकित्सितुंनिरोगांकर्तुंशरीरस्थि तिंविचारयितुंचनियोजितौ आज्ञप्तौउभौदिवोभिषजौस्वर्वैद्यौ आश्विने यौकिमु । नलोनलविषयोमदनश्चभैम्यन्तःकरणेअधितिष्ठतः स्मेतिभा वः । अनुकाम्चिकेत्यभिकमन्दःसाधुः । नियोजितौचौरादिकाद्युजेःक्तः ५

कुसुमचापजतापसमाकुलं कमलकोमलमैक्षत त न्मुखम् ॥ अहरहर्वहदभ्यधिकाधिकां रविरुचि ग्लपितस्य विधोर्विधाम् ॥ ६ ॥

श्लोकप्रपञ्चकेनतापमाह ॥ कुसुमेति । तन्नु खंरविरहवाग्लापितस्यविधो श्चन्द्रस्यअहरहः प्रत्यहमभ्यधिकाधिकांपूर्वेदिनापेक्षयापरेदिनेमहतींवि धांअवस्थांवहतुपेक्षन दृष्टंसखीजनेनेत्यर्थः । किंभूतंकुसुमचापजःकाम जस्तापोज्वरस्तेनसमाकुलंम्लानमित्यर्थः ॥ अतःकमलवत्कोमलंसुकुमारं विरहव्यथयासूर्यकिरणम्लानंचन्द्रसदृशंजातमितिभावः । अहरहर्वीप्सा यांद्विर्वचनम् । याअत्यन्तसंयोगेद्वितीया अभ्यधिकाअधिकामहती यस्मादधिकमितिद्योतकात्पञ्चमीतियोगविभागात्समासः ॥ ६ ॥

तरुणतातरणिद्युतिनिर्मि तद्रढिमतत्कुचकुम्भयुगंत दाऽनलसंगतितापमुपैतु नो कुसुमचापकुलालवि लासजम् ॥ ७ ॥

तरुणेति ॥ तस्याःकुचावेवकुम्भयुगंतदातस्मिन्समयेऽनलसंगत्यानलप्रा प्त्यभावेनअथवावन्हिसंगत्यातापंतज्जनितज्वरमौष्ण्यंचनोपैतुनप्राप्नोतु । अपितुकिंभूतंकुसुमचापःकामःसएवकुलालः कुम्भकारस्तस्यविलासःक्रीडा तयाजातंविरचितं तथाप्रशस्तत्वात्तरुणतातारुण्यंसएवतरणिस्तस्यद्युत्या सूर्यदीप्त्यानिर्मितः कृतोद्रढिमादार्ढ्यं यस्यकुलालोपिघटंकृत्वाआतपेशुष्कं कृत्वाअग्नौप्रक्षिपति विलासजमितिपापविशेषणंवा द्रढिमइत्यत्रवर्णदृ ढादिभ्यः ष्यञ्चेतीमनिचिरऋतइतिरः ॥ ७ ॥

अधृत यद्विरहोष्मणि मज्जितं मनसिजेनतदूरु युगं तदा ॥ स्पृशति तत्कदनं कदलीतरुर्यदि म रुज्ज्वलदूषरदूषितः ॥ ८ ॥

अधृतेति ॥ तदातस्मिन्समयेमनसिजेनकामेनविरहोष्माग्निमाधिजनि तेदाहेमज्जितंयत्तदूरुयुगमधृतजीवशेषमतिष्ठत् । कदलीतरुस्तत्कदनं तस्योरुयुग्मस्यकदनसाम्यमवस्थांवातर्हिस्पृशति प्राप्नोतितदूरुयुगसमानः स्यात् यदिसकदलीतरुर्मरौधन्वदेशेज्वलद्वन्हिदग्धऊखरंक्षारमृत्तिकास्थ लंतेनदूषितः पीडितःस्यादतिमृदोःकदलीतरोःवन्हिदग्धेऊखरेयदिस्थि तिःस्यात्तर्हितदूरुयुगदुःखंकदलीतरुणाप्यनुभूयते तदूरुयुगमखिलरांस्तंत समभूदितिभावः मनसिजेतिसप्तम्यांजनेर्डः । हलदन्तादितिसप्तम्या अलुक् । स्पृशतीतिकालसामीप्येलट् । स्यादूषःक्षारमृत्तिकाअस्त्यर्थे

उपसुपिलुक्तिरः । अधृतपृक्तवस्थाने ॥ ८ ॥

**स्मरशराहतिनिर्मितसंज्वरं करयुगं हसतिस्मद मस्वसुः ॥ अनपिधानपतत्तपनातपंतपनपीतस रःसरसीरुहम् ॥ ९ ॥**

स्मरेति । दमस्वसुर्भैम्याःकरयुगंस्मरशरैराहतिर्हननंतयानिर्मितःकृतः सज्वरःसंतापोयस्यएवं भूतंसत् तपनेनग्रीष्मेनपीतंसरस्तस्मिन्विद्यमानंस रोरुहंकमलंहसतिस्मतत्तुल्यंजातमित्यर्थः । किंभूतंकमलमनपिधानो निष्प्रतिबन्धः पतन्तपनातपःसूर्यतापोयस्मिन् ग्रीष्मसंबन्धिकमलवदति तरंसंतापोनुभूयतइत्यर्थः ॥ ९ ॥

**मदनतापभरेण विदीर्यतो यदुदपादि हृदादम नस्वसुः ॥ निविडपीतकुचद्वययन्त्रणो तमपरा धमधात्प्रतिबध्नती ॥ १० ॥**

मदनेति । दमनस्वसुर्हृदाहृदयेनमदनतापभरेणमदनजनितज्वराधि क्येनकृत्वाविदीर्यस्फुटित्वायत्तदुदपादि उत्पत्तितंनिविडंनिरन्तरंपीनंपीव रंकुचद्वयंतेनकृतायन्त्रणाबन्धनंप्रतिबध्नतीसतीतुंविदीर्यानुत्पतनलक्षण मपराधमधाद्धार विरहसन्तापभयाभैमीहृदयंविदीर्यगन्तुकामंजातमपि स्तनद्वयेनतमपराधंसोपिरक्षितुमन्यथागतंमेवस्यात् । स्तनद्वयस्यायमपरा धोमनुहृदयस्य अयचतमपराधमधात्पीतवती उत्पतनशीलस्यवक्षादेः पाषाणादिनाकृतायन्त्रणाप्रतिबद्धंकरोति पूर्वनिपातभियापूर्वंपीनशब्द स्योत्तरेणसमासंकृत्वानिविडपदेनसमासःकर्तव्यः । अथ धूधाञ्धेटोरपि लुङिगातिस्थेतिसिचोलुकिरूपम् ॥ १० ॥

**निविशते यदि शूकशिखा पदे सृजति सा कि यतीमपि नव्यथाम् ॥ मृदुतनोर्वितनोतुकथन्न तामवनिभृत्तु निविश्य हृदि स्थितः ॥ ११ ॥**

चिन्तामाह । निविशतइति । शुकोऽस्त्रीसूक्ष्मतीक्ष्णाग्रोशूकशिखाधान्य कण्टकाग्रमात्रंपदेचरणेयदिनिविशतेप्रविशतिसाशूकशिखाकियतीमिवव्य थांपीडांनसृजतिकरोति अपितुमहतींपीडांकरोति । अतःकारणान्मृदु

तनोरतिसुकुमार्यो दैम्याहृदिनिविश्यप्रविश्यस्थित अवनिजत्यवंतो नलस्वतुपुनस्तांव्यथांकथंनविलनोतुकरोतु किंतुकरोत्येवनलस्तुतस्या । हृदयंप्रविश्यस्थितःपरतयानप्राप्नोर्वेतस्तंसर्वदाचिन्तयन्त्यास्तस्याजूयसौव्ययाजातेतिभावः । इवशब्दोवाक्यालङ्कारे । निविशति । नेर्विशइति तङ् ॥ ११ ॥

मनसि सन्तमिव प्रियमीक्षितुं नयनयोः स्पृहयां तदुपेतयोः ।-ग्रहणशक्तिरभूदिदमीययोरपि नस न्मुखवास्तुनिवस्तुनि ॥ १२ ॥

चिन्तयाविषयान्तराग्रहणमाह ॥ मनसीति ॥ इदमीययोरेतदीययो र्नयनयोः सन्मुखेअग्रंवास्तुस्थानंयस्यैवंभूतेपुरोवर्तिन्यपिवस्तुनिघटादौ ग्रहणशक्तिर्ज्ञानसामर्थ्यंनाभूत् कथंभूतयोर्मनसिसन्तंस्थितंप्रियंनलमी क्षितुमपिवस्तुस्पृहयेव अन्तर्हृदयप्रदेशस्वंवतदुपेतयोः प्रविष्टयोःविरह व्यथयानेत्रयोर्निजदेशत्वेननिःसहत्वात्पुरः स्थितमपिवस्तुताभ्यांगृहीतुंन शक्यते । तत्रान्तरङ्गत्वेप्रियालोकनवाञ्छायाः कारणत्वेनोत्प्रेक्षा । इदमी ययो त्यदादित्वाद्वृद्धाच्छः ॥ १२ ॥

हृदमस्त्रसुगस्त्रुपरिप्लुते प्रतिफलद्विरहोत्तमुखानतेः ॥ हृदयभाजमराजत चुम्बितुं नलमुपेत्यकिलागमि तन्मुखम् ॥ १३ ॥

चिन्तानुभावंरोदनंमुखानतिमाह ॥ हृदीति ॥ विरहेणात्तास्वीकृतामुखानतिर्मुखनम्रतायया तस्यादमयन्त्याः अस्रुपरिप्लुतेबाष्पप्रवाहपरिपूर्णेहृदिवक्षसिप्रतिफलत्प्रतिबिम्बितंतस्यादमयन्त्यामुखंकर्तृहृदयमध्यवर्तिनंनलंचुम्बितुमुपेत्यसमीपगत्वाहृन्मध्यादागमिकिल आगमिष्यदिवअराजतशुशुभे उपेत्यचुम्बितुमागमिष्यतिवा विरहवशान्मुखंनम्रंजातं अश्रुषनिर्गतमित्यर्थः । विरहेणात्तायामुखानतिस्तस्याहेतो प्रतिफलदितिवा । आगम्भिभविष्यतिगम्यादयइतिसाधुः ॥ १३ ॥

सहृदमग्निमुदञ्चयितुंस्मरंमनसिगंधवहेन मृगीदृशः ॥ अकलिनिश्वसितेनविनिर्गमानुमितमिन्दु

त्वेशनमादिता ॥ १४ ॥

चिन्तानुभावनिश्वासमाह । सुहृदमिति ॥ मृगीदृशोभैम्याः निःश्वसितेनतिश्वासलक्षणेनगन्धवहेनमलयानिलेनमनसिविद्यमानसुहृदं स्मरंसरलतयामग्निमुदञ्चयितुमुत्तेजयितुंविनिर्गमेनानिः सरणेनानुमितमनुमानज्ञानविषयीकृतनिह्नुतवेशनंयस्यसचासौमायीचतस्य भावस्तत्तास्यस्फुलिङ्गीकृताभ्यस्तेत्यर्थः । विरहान्निश्वासवायुर्बहिर्निःसरतिबहिर्निः सरणात्तः प्रवेशनंविनानुपपद्यमानंतमनुमापयति वायुनास्वमित्रस्यस्मरः‍स्यैवंद्धनार्थमन्तः प्रवेशकृतइतिलुप्तोत्प्रेक्षावाङ्मेनवायुनान्तः प्रविश्य निश्वासरूपेणवहिर्निर्गतमिवेत्यर्थः । विरहवशाद्भृशनिश्वासेतिभावः । अन्योपिमायीदुर्गमध्येस्थितस्यमित्रस्यबहिर्निर्गमनार्थंगुप्तंप्रविशतिनिर्गमनानन्तरंचतस्यगुप्तप्रवेशोदुर्गस्थैरनुमीयते पद्मिनीत्वान्निश्वासस्यगन्धवहत्वम् । व्रीह्यादित्वान्मायी ॥ १४ ॥

विरहपांडिमरागतमोमषीशितिमतन्निजपीतिमवर्णकौ ॥ दशदिशः खलुतद्दृगत्कल्पयल्लिपि करीनलरूपकचित्रिताः ॥ १५ ॥

विरहेति । तद्दृक् भैमीदृष्टिलक्षणालिपिकरीचित्रकारिणीविरहेणजनिता पाण्डिमापाण्डुत्वंतथारागोलोहितिमाचतमोमूर्च्छातल्लक्षणामषीतस्या शितिमाकृष्णतासमदिक्षोनिजस्वीयः पीतिमागौरत्वंतद्रूपैर्वर्णैः कृत्वाखलुअप्यर्थः दशापिदिशःनलरूपकैर्नलप्रतिच्छन्दकैः चित्रिताश्चित्रकृताअकल्पयत् पाण्डिमातुरुखएवप्रकटः । अन्यत्रतुपीतिमासचासौनिजइति विग्रहः । निजोद्भूत्वंवर्णपीतस्याः भैम्या सहजोयःपीतिमेतिवाविरहवशात्पाण्डिमादयोवर्णाजाताउन्मादवशाद्दृशमप्यदिक्षुनलमेवा पश्यदितिभावः । खलुइवार्थोवा । लिपिकरीवेत्युत्प्रेक्षा । लिपिकरीदिवाविभेतिटः, टित्वान्ङीप् ॥ १५ ॥

स्मरकृतां हृदयस्य मुहुर्दशां वहु तदन्तिष निश्वसितानिलःव्यधित वासिसि कुम्भमदःश्रितेत्रसति कःसतिनाश्रयबाधने ॥ १६ ॥

सरक्तामिति । निश्वसितानिलैः श्वासवायुभिर्भैम्या हृदयस्य सरक्ततां दशां पीडां मुहुर्बहु तिशयेन सखीजनस्य पुरस्तादुद्दर्शितवत्कथयन्निव अदो हृदयं श्रिते आश्रिते वासस्य कम्पव्याधि दत्तवान् विरहवशान्निश्वासानां बाहुल्यात्तस्या हृदयं चकम्पे । तत्कम्पवशाद्वस्त्रमपि चकम्पइत्यर्थः । उचितमेतत् । आश्रयस्य बाधने पीडायां सत्यामाश्रितः कोन बिभ्येति अपि नु सर्वोपि बिभ्येत्येव कम्पितहृदयाश्रितस्य वस्त्रस्यापि कम्पो युक्तः । वदन्निति वदितुमिति हेतौ शता । या विचारं बहु वदतीत्यधरादिकम्पं करोति ॥ १६ ॥

**करपदाननलोचननामभिः शतदलैः सुतनोर्विरह ज्वरे ॥ रविमहो बहुपीतचरं चिरादनिशतापमिषादुदसृज्यत ॥ १७ ॥**

संज्ञतमन्तज्वरमाह ॥ करपदेत्यादि । सुतनोर्भैम्या विरहज्वरे वियोगजनिते ज्वरे करपदाननलोचनानि नामानि संज्ञा येषां तत्संज्ञैः शतदलैः कमलैः दिने बहु अपरिमितं पीतं चरं पूर्वं पीतं रविमहः सूर्यतेजो अनिशतापमिषात् संततसंतापव्याजात् चिरकालं उदसृज्यत उत्सृज्यते स्म करकमलं चरणकमलं मुखकमलं लोचनकमलमित्यादि संज्ञम् ॥ १७ ॥

**उदयति स्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विमृश्य यत् ॥ अनुमितोऽपि च वाष्पनिरीक्षणाद्व्यभिचचार न तापकरोऽनिलः ॥ १८ ॥**

अश्रुपातमाह ॥ उदयतीति । आलिभिः सखीभिस्तत्र तस्यां धरणिभृद्भुवि राजभीमस्तस्माद्भूरुत्पत्तिर्यस्यास्तस्यां भैम्यां विमृश्य विचार्य वाष्पनिरीक्षणादश्रुदर्शनादपि तापकरोनुमितोनलो यन्न व्यभिचचार तदेवव्यभिचारलक्षणं यदद्भुतमुदयति स्म उदितः अपि श्वकारार्थो वा अकथितेप्यश्रुदर्शनमात्रादेव नलविरहजनितमेवेदं दुःखमिति यत्सानिश्चयज्ञानं तदाश्चर्यमित्यर्थः ॥ पूर्वपद्युत्वादिनानलस्य तापकारित्वमनुमितमश्रुदर्शनादपीति अपि चेति समुच्चयार्थो वा पर्वते वाष्पदर्शनाद्वह्न्यनुमितिराश्चर्यकारिणी भवति तद्वद्वाष्पदर्शनानुमितवन्हेर्येतापकारित्वं तदाश्चर्यम् । वाष्पं नेत्रजलोष्मणोरिति विश्वः । उदयति स्म गतौ भौवादिकस्य रूपम् ॥ १८ ॥

हृदि विदर्भभुवः प्रहरञ्छरै रतिपतिर्निषधाधिपतेः कृते ॥ कृततदंतरगः स्वदृढव्यथः फलदनीतिरमूर्च्छदलं खलु ॥ १९ ॥

हृदिति । रतिपतिः धाम निषधाधिपतेर्नलस्यकृते नलस्यधार्थं विदर्भजन्मन्या हृदिशरैः प्रहरन्प्रहारंकुर्वन् नलनिमित्तं भैमीपीडयन्स्वयमेवात्यर्थंमत्यर्थंन मूर्च्छांप्रापयत । किंभूतस्तदन्तरगस्य भैमीहृदयवर्तिनः स्वस्यात्मनोदृढव्यथाताडनंयेनसः । खलुएवंविधइवातएवंफलनीफलदाफलनीतियस्यकामोनलश्चभैम्या हृदयमध्यवर्तिनौस्ववैरिणोनलस्यप्रहारकुर्वन्भैमीहृदयंप्रहृतवान् । ततश्चात्मानमेवप्रहृतवानलंयोवात्मानंरक्षित्वाअपरंप्रहरति अनेनतुनलार्थंभैमीहृदयंप्रहृततेनफलदनीतिनास्वयमेवमूर्छितम् । अथमदनोमूर्च्छन्नधिकीभवंस्तामतितरांपीडयतिस्मेतिभावः । नलव्यथालक्षणाऽनीतिःफलदाइतिवा । अन्यथायेनान्यस्यप्रहारइत्यनीतिः । मूर्छामोहसमुच्छ्राययोः । कृतेतादर्थ्येविभक्तिप्रतिरूपकमव्ययम् ॥ १९ ॥

विधुरमानि तया यदि भानुमान् कथमहो स तु तद्धृदयं तथा ॥ सोऽपि वियोगभरा स्फुटनस्फुटीकृतदृपत्वमतिज्वलदंशुभिः ॥ २० ॥

शङ्कामाह । विधुरिति ॥ तयाभैम्याविधुश्चन्द्रोयदिभानुमान् सूर्योमानि । दाहकत्वाच्चन्द्रएवसूर्यत्वमारोपितं चेत्तर्हिसतुपुनःसूर्योवियोगभरेणविरहव्याकुल्येनापियदस्फुटनमविदीर्णत्वंतेनस्फुटीकृतंदृपत्त्वंपाषाणत्वंयस्ययेनवाएवंविधमतिकठिनमपितस्यास्तद्धृदयमंशुभिः कृत्वाकथंतथाऽनिर्वाच्यमतिज्वलद्दाहनत्वारोपितेऽग्नित्वेऽग्नितुल्योयमितितस्यदाहसामर्थ्यंदृषत्पाषाणादाहत्वनिर्वाच्यमतएव अहोआश्चर्यंमानितेपिसूर्यत्वेनविरहिणःसूर्यस्यचपरस्परमित्रत्वात्कथंदाहकत्वमत एवाश्चर्यंयदिचन्द्रः सूर्योमानितोनतुतात्विकस्तर्हितापातिभारा स्फुटनलक्षणेनसाम्येनप्रकटीकृतसूर्यकान्तत्वंयेनएवंविधंभैमीहृदयंकरैः कृत्वाकथंतथा ज्वालितवद्दलचन्द्रस्यक्वापिदाहकत्वमदृष्टचरमश्रुतपूर्वंच सूर्यस्यतुप्रसिद्धमतोयंतात्वि

कः सत्यएवअन्यचसूर्यकान्तज्वलनंसूर्यएवकरोतिनत्वन्योतस्तात्विकः सूर्य एवमस्वारोपितः । आरोपितत्वाद्दग्धमित्यर्थः विरहितत्वाच्चन्द्रकिर णास्तयाणसोढाइतिभावः ॥ २० ॥

हृद यदत्तसरोरुहया तया क्व सङ्गमस्तु वियोग निमग्नया । प्रियधनुःपरिरभ्य हृदारतिः किमनु मर्तुमशेत चितार्चिषि ॥ २१ ॥

द्वाभ्यांमृतिंसूचयति ॥ हृदयेति । वियोगनिमग्नयाविरहाग्निपीडित त्वाद्धृदयदत्तसरोरुहयाज्ञेत्यार्थं हृदयेदत्तंकमलंययातयाजैम्यासङ्गतुल्या क्वकस्मिन्देशेअस्तुअपितुनतत्वान्याकुत्रापिकापिनास्तिरतिर्भवेदित्या शङ् क्यदूषयति । रतिःप्रियधनु हृदापरिरभ्यालिङ्ग्यानुमनु मदनस्यपश्चा न्मरणार्थंचितार्चिषिचितान्नौकिमशेतनिद्रिता अपितुनतस्माद्रतिसमाना जाता नप्रियाणांदेशान्तरेमृतानांस्त्रियोधनुरालिङ्ग्यानुम्रियन्तेइत्याचा रः । विरहसंतप्तत्वाच्छीतलत्वोपचारः । विप्रयोगस्यवन्हित्वंव्यङ्ग्यं वि तार्चिषीत्यनेनतदारतिपाठः समीचीनः । सङ्गसमानान्ययोरेति । स्व दाङ्गिवितिक्लिन्नत्वदूषवतुदुइतिसभावः ॥ २१ ॥

अनलभावमियं स्वनिवासिनो नु विरहस्य रहस्यमबुध्यत ॥ प्रशमनाय विधायतृणान्यसून्ज्व लतितत्र यदुज्झितुमैहत ॥ २२ ॥

अनलेति । इयंजैमीस्वनिवासिनः स्वीयस्यविरहस्यरहस्यंतात्विकमना सजावमग्नित्वं नअबुध्यतनाजानात् यद्यस्मात्तत्रविरहेज्वलतिदीप्यमाने सति असून्प्राणान्तृणानीवविधायकृत्वाप्रशमनायविरहवन्हिशान्त्यर्थमु ज्झितुंत्यक्तुमैहतऐच्छत् विरहस्यवन्हित्वंचेज्ज्ञातंस्यात् तर्हितच्छान्त्यर्थं तृणवत्प्रक्षेपंनकुर्यादितोविरहस्यवन्हित्वंनाजानादित्यर्थः । किंदस्वीयवि रहस्य अनलभावंनलभावोनलप्राप्तिस्तदभावंनलप्राप्त्यसंभवलक्षणंरहस्यं मूलकारणनाज्ञासीत् ॥ अपितुजानातिस्मैवनलविरहेमरणमेव ज्यायोन तुजीवितमित्यैच्छेदितिभावः । यतःस्वविरहस्यरहस्यस्तेनज्ञायतेतस्मा त्स्वीयान्प्राणान् प्रशमनायोद्घाटायमायतृणतुल्यान्कृत्वात्यक्तुमैच्छत् ॥ एतद्दुः सहत्वनाम्नेनविनानघटतेविरहस्याग्निवद्दुःसहत्वंजातमितिभा

वः ॥ शमनोयमराड्यमइत्यमरः ॥ २२ ॥

प्रकृतिरेतु गुणः स नु योषितां कथमिमांहृदयं मृदुनामयत् ॥ तदिषुभिः कुसुमैरपिदुन्वता सुविवृतं विबुधेन मनोभुवा ॥ २३ ॥

प्रकृतिरिति । नामप्रसिद्धौयोषितांहृदयमन्तः करणंमृदुकामेनालमिति यत्साप्रकृतिर्योषितामेवस्वाभाविकोगुणः इमांयोषितंभैमींकथंकुतोनेतु ममाप्नोत्वपितुप्राप्तः । इमांप्राप्तइत्यस्मिन्नर्थेप्रमाणमाह । विबुधेनदेवेन विदुषाचमनोभुवाकामेनकुसुमैरपिपुष्परूपैरपिइषुभिर्बाणैः हृदयंदुन्वता पीडयता । तन्मृदुत्वलक्षणंप्रमेयंसुविवृतंसुतरांस्पष्टीकृतंप्रदिशगुणोनस्यात्तर्हिपुष्पबाणैः पीडानस्यात्सातुजाता तस्मात्सगुणःसमायातइति सुतरांमदनबाणैःपीडितेतिभावः । दुर्बोधंप्रमेयंविदुषाविव्रियते ॥ २३ ॥

रिपुतरा भवनाद्विनिर्यती विधुरुचिर्गृहजालविलैर्नु ताम् ॥ इतरथात्मनि वारणशङ्कया ज्वलयितुं विसवेषधराविशत् ॥ २४ ॥

निर्वेदानुभावंबहिर्निर्गमनमाह ॥ रिपुतरेति ॥ विधुरुचिश्चन्द्रकान्तिर्भवनाद्गृहाद्विनिर्यतींबहिरनिर्गच्छन्तींताभैमींज्वलयितुंसंतापयितुंगृहगवाक्षच्छिद्रैरविशत् । किंभूता यतोविरहित्वादतिवैरिणीतयाविसवेषधरा विसरूपधारिणी ॥ विसरूपधारित्वे हेतुनाह । इतरथाअन्यथा आत्मनिवारणशङ्कयाआनिर्षेधस्त्रियोवैरिण्याचन्द्रदीप्त्यावैरिणी भैमीवध्यासाच तद्भियावहिर्ननिर्गच्छतिअतः पद्मदण्डसमानाचन्द्रदीप्तिस्तांहतुंसंतापशान्त्यर्थंशरीरेस्थापितानांविसानांरूपेणजालमार्गेण अन्तरेवप्रविष्टावैरिणीमुख्यमार्गप्रवेशाभावाद्गवाक्षैरेवप्रविष्टानतुस्वीयरूपेण अन्तर्गतवैरिमारणार्थंमियमेवरीतिरन्येनाप्यनुष्ठीयते । अविनिर्यतीतिद्वयः शतरिरूपम् ॥ २४ ॥

हृदि विदर्भभुवोऽस्तुभाति स्फुटं विनमदास्यतया प्रतिबिम्बितम् । मुखद्वगोष्ठमरोपि मनोभुवा तदुपमाकुसुमान्यखिलाः शराः ॥ २५ ॥

अतिरिक्तांमृगान तिमाह ॥ हृदीति । मनोभुवाकामेनतदुपमाकुसुमानिमुखनयनौष्ठोपमानयोग्यानिकुसुमानिकमलनीलोत्पलबन्धूकानि अखिलाः शराःपूर्वोक्तकुसुमरूपाः पञ्चापिबाणा अश्रुभृतिअश्रुपूर्णेविदर्भभुवोभैम्याहृदिदु.खवशाद्दीनमदास्यतयानम्रमुखत्वेनप्रतिविम्बितंप्रतिफलितंमुखदृगोष्ठमेवारोपिआरोपितं स्फुटमुत्प्रेक्ष्यतेप्रकटंप्रतिविम्बितमितिवा । प्रतिविम्बितं भैमीमुखदृगोष्ठमेव भैमीवधार्थंकामेनपञ्चापिबाणाः प्रायेणसमारोपिताइत्यर्थः । पीडावशाद्दुःअश्रुनम्रमुखत्वंचतस्याजातमितिभावः । मुखदृगोष्ठंशराइतिव्यस्तरूपकम् । प्राणयन्त्रत्वादेकवद्भावः ॥ २५ ॥

विरहपाण्डुकपोलतलेविधु र्व्यधितभीमभुवः प्रतिविम्बितः ॥ अनुपलक्ष्य सितांशुतया मुखं निजसखं सुखमङ्कमृगार्पणात् ॥ २६ ॥

विरहेति । विधुश्चन्द्रोऽभीमभुवोभैम्याः विरहेणपाण्डुनिकपोलतलेप्रतिविम्बितः सन्भैमीमुखमङ्कमृगार्पणाद् अङ्केमुखेवामृगस्यारोपणात्सुखमनायासेननिजसखंस्वीयंमित्रंव्यधितचकार, कया अनुपलक्ष्याविवेकेनअज्ञातुमयोग्याः सिताअंशवःकिरणायस्यचन्द्रस्यभावस्तत्तातया चन्द्रकपोलयोःपाण्डुत्वात्प्रतिविम्बितस्यापिचन्द्रस्यानुपलब्धिः कलङ्कस्यश्यामत्वादुपलब्धिः । ततश्चमृगाङ्कलाञ्छद्वदनस्यनिजमित्रत्वंयुक्तमित्यर्थः । सवर्णोस्थितंसवर्णंशङ्खदुग्धादिवन्नलक्ष्यते विरहात्पूर्वंमुखस्यगौरत्वा त्प्रतिविम्बितश्चन्द्रःपृथक्लक्ष्यतेस्म । विरहेतुपाण्डुनिमुखेसवर्णत्वाच्चन्द्रोनदृश्यतेऽतोभैमीमुखंचन्द्रएवेतिसर्वस्यापिप्रतीतिरभूत् पूर्वमतिचन्द्रं मुखमासीदधुनातुचन्द्रतुल्यपाण्डुरंजातमितिभावः । अन्येनचतुरेणकिंचिदुत्कृष्टंवस्तुदत्त्वासख्यंसंपादनीयमित्युक्तिः । दुष्टोनिर्दोषेपिसंसर्गेणस्वदोषंसंक्रमय्यसाम्यंकरोति । निजसखंराजाहेतिटच् ॥ २६ ॥

विरहतापिनि चन्दनपांसुभिर्वपुषि सार्पितपाण्डिममण्डना ॥ विषधरःभात्रिसामरणा दधे रतिपतिं प्रति शंभुविभीषिकाम् ॥ २७ ॥

विरहेति ॥ साभैमीरतिपलिंकामंप्रतिगंजुसंवन्धिनीविभीषिकांभयान कतांदधेऽङ्गीकृतवती । किंभूतां विरहतापिनिविरहसंतप्तेहृदिवपुषिसं तापिनिग्धत्वाच्चन्दनपांसुभि श्चन्दनरजोभिरर्पितंविरचितंपाण्डिमापाण्डु त्वमेवमण्डनमलङ्कारोयस्याः सा तथादैर्घ्याच्छुक्लत्वाच्चविषधराभानिवा सुक्यादिसर्पतुल्यानिविलासभरणानिविलासकरणानियस्याः सा,चन्द्रसपाण्डु रंविलासकरणंसदीर्घंवपुर्दृष्ट्वाभुजान्त्यामीतः कामोमांनपीडयिष्यतीति बुध्याचन्दनंविसानिधृतानीतिभावः ॥ २७ ॥

विनिहितं परितापिनि चन्दनं हृदितयाप्यधृतबु द्बुदमावभौ ॥ उपनमन् सुहृदं हृदयेशयं विधु रिवोङ्गगतोडुपरिग्रहः ॥ २८ ॥

विनिहितमिति ॥ परितापिनिविरहसंतप्तेहृदितयाभैम्याविनिहितंनि हितंधृतबुद्बुदंधृतचन्द्रकंचन्दनंविधुरिवचन्द्रइवाबभौशुशुभे किंभूतोवि धुर्हृदयेशयहृदिविद्यमानसुहृदंकामसुपनमन्नुपागच्छन्नथाङ्कगतः समी पमागतः उडूनिनक्षत्राण्येवपरिग्रहोयस्य तथासखीत्वादुत्सङ्गवर्तिनक्षत्र समूहोचनस्यचन्दनस्यचन्द्रतुल्यत्वंबुद्बुदानांचनक्षत्रतुल्यत्वम् । अन्योपि परिग्रहोमित्रमुपागच्छति ॥ हृदयेशयंशयवासेतिसूत्रस्याअलुक् ॥ २८ ॥

स्मरहुताशनदीपितयातया वहु मुहुः सरसं सर सीरुहम् । श्रयितुमर्धपथे कृतमन्तरा श्वसितनि र्मितमर्मरमुज्झितम् ॥ २९ ॥

स्मरेति । स्मरएवहुताशनोग्निस्तेनदीपितयातयाभैम्यावहुअनेकसरसं रसयुक्तंसरसीरुहंकमलंश्रयितुमाश्रयितुंमुहुर्मुहुर्वारंवारमर्द्धपथेर्द्धमार्गेकृतं श्वसितेननिश्वासवायुनानिर्मितोमर्मरःशुष्कपर्णध्वनितंयस्य एवंभूतंनिरुप योगित्वादन्तरामध्यएवनिकटमानीत्यैवउज्झितंत्यक्तं, संतापाधिक्यंसूचि तम् । अथमर्मरः स्वनितेवस्त्रपर्णानामित्यमरः । अर्द्धपथेअर्द्धंनपुंसकमि तिसमासः । ऋगादिनासमासान्तः । अर्द्धपथमिति अत्यन्तसंयोगेद्वितीया ॥ २९ ॥

प्रियकरग्रहमेत्रमवाप्स्यति स्तनयुगं तव ताम्य

ति किं त्विति ॥ जगदतुर्निहिते हृदि नीरजेद्य थुकुड्मलनेन पृथुस्तनी ॥ ३० ॥

प्रियेति । हृदिनिहितेस्यापितेनीरजेकर्तृ णिदृवथुनासंतापेनकुड्मल नसंकोचस्तेनकत्वापृथुस्तनीजिर्भोप्रतिश्वतिजगदतुरिव । इतिकिं हेभेमि तवस्तनयुगमसम्मुकुलकृतग्रहणंममरीत्याएवंअनेकप्रकारेणमयथासंको चोजायतेलयातदाकारेणप्रियकरग्रहणंनलसंबंध भावाप्स्यतिकिन्तुताम्यति ग्लायति तुग्रग्लानिर्नकार्येत्यर्थः । संतापवशात्कमलसंकोचः ॥ ३० ॥

त्वदितरोपि हृदा न मयाधृतः पतिरितीव नलं हृदयास्थितम् ॥ स्मरहविर्भुजि बोधयति स्म सा विरहपाण्डुतया निजशुद्धताम् ॥ ३१ ॥

त्वदिति । साहृदयेशयंनलंविरहेणापाण्डुतातयास्मर एवहविर्भुजिव ह्नौनिजशुद्धतांस्वीयपातिव्रत्यमितिबोधयतिस्मेवज्ञापयतिस्म । इतिकिं हेप्रियनयात्वदितर·त्वत्तोन्यःपतिः हृदापिमनसापिनधृतः । ननुहस्ता दिनेतिजेम्यन्तःकामः पाण्डुतावचिह्नतइति अन्यापिसतीवन्हौस्वीयशुद्ध तांपतिंबोधयति । नलंबुध्यर्थत्वाद्गणिकर्तुर्णौकर्मत्वम् ॥ ३१ ॥

विरहतप्ततदङ्गनिवेशिता कमलिनी निमिषद्दलमुष्टिभिः ॥ किमपनेतुमचेष्टत किं पराभवितुमैहत तद्दवथुं पृथुम् ॥ ३२ ॥

विरहेति ॥ विरहेणतप्तेतदङ्गेभैम्यङ्गेनिवेशितानि कमलकमलिनीनिमिष न्तिसंकुचन्तिदलानिपर्णान्येवमुष्टयस्तै· कत्वापृथुंमहान्तंतद्दवथुंभैमीसन्ता नमपनेतुंदूरीकर्तुमचेष्टतकिमुद्योगंचक्रे । अथवापराभवितुंताडयितुमैच्छ त्किमन्यदपिदुःखदंमुष्टिभिरपनीयते। संतापवशात्कमलिनीसंकुचितेतिभा वः ॥ ३२ ॥

इयमनङ्गशरावलिपन्नगक्षतविसारिवियोगविषावशा ॥ शशिकलेव खरांशुकरार्दिता करुणनीरनिधौनिदधौ नकम् ॥ ३३ ॥

विवशतामाह । इयमिति ॥ इयंभैमीखरांशोःसूर्यस्यकरैरहितापीडि ताशशिकलेवकरुणानीरनिधीकरुणासरसमुद्रे कंनजिदधीचिदेप अपितुस र्वमपि । किंभूता अनङ्गशरावलिलक्षणाःपन्नगास्तैः क्षतंदशनंतेनविसारि प्रसरणशीलवियोगएवसंतापकारित्वाद्विषंतेनावशाविह्वला एवंविधांतां दृष्ट्वासर्वैपिशुश्रुवुरन्योपिसर्पदष्टोविषविह्वलः सर्वलोकंकरुणायांक्षिपति अथचसर्पदंष्ट्रएवविषनिरासार्थंजलाशयेक्षिप्यते, तयात्वन्यएवनिक्षिप्तइ त्याश्चर्यंकलाशब्देनभैम्या अतितनुत्वंसूचितं । पन्नगक्षताचासौविसारि वियोगविषवशाचेतिवा ॥ ३३ ॥

ज्वलति मन्मथवेदनया निजेहृदि तयार्द्रमृणाल लतार्पिता ॥ स्वजयिनोस्त्रपया सविधस्थयो र्म लिनतामभजद्भुजयोर्भृशम् ॥ ३४ ॥

ज्वलतीति ॥ तयामन्मथवेदनयामदनजनितपीडयाज्वलतिसंतप्ते नि जेहृदि अर्पितानिहिता आर्द्रमृणाललतासरसामृणालवल्लीस्वजयिनोः कान्त्यामृणालजैत्रयोःसविधस्थयोर्हृदयसमीपस्थितयोर्भुजयोः सकाशा त्त्रपयालज्जयात्भृशमतितमांमलिनतामभजत् । संतापशान्त्यर्थंसरसामृ णाललताहृदयेस्थापितातदङ्गवशान्म्लानताजाता मृणालजैत्रहृदयस्थित मृणालसमीपस्थयोर्भैमीभुजयोर्लज्जयाश्यामत्वजातमिति प्रतीयमानो त्प्रेक्षा । अन्योपिस्वजयिनासह कुत्रस्थितौसत्यांतन्मुखंपश्यन्मलिनोभव ति । भुजयोः सविधस्थयोरितिसप्तमीवा । अथोत्प्रेक्षामेवत्रपा ॥३४॥

पिकरुतश्रुतिकम्पिनि शैवलंहृदि तया निहितं विचलद्बभौ ॥ सततहृद्गतहृच्छयकेतुना हतमिव स्वतनूघनघर्षिणा ॥ ३५ ॥

पिकरुतेति । पिकरुतंश्रुत्याविरहित्वात्कोकिलालापश्रवणेनोत्कम्पिनि हृदितयासंतापनिवृत्त्यर्थंनिहितंनिक्षिप्तहृदयस्यकम्पत्वाद्विचलद्विशेषेणाक म्पमानंशैवलंसततंतद्गतोनिरन्तरंभैमीगतोहृद्गतोशाद्वृच्छयः कामस्तस्यके तुनाध्वजेनाहतमिवबभौशुशुभे । किंभूतेनकेतुना स्वतनुंशरीरंघनंनिबिडं घर्षयतीत्येवंशीलेन मत्स्योपिशैवलेघर्षणंकरोतीतिजातिः । घर्षणस्यघन

स्वंकम्पबाहुल्यसूचनार्थं निखिलेपिशैवलेकोकिलालापस्तांदुनोतिस्मेतिभा वः । दुच्छयेत्यत्रशयवाबेतिविकल्पितत्वाल्लुक् ॥ ३५ ॥

न खलु मादवशेन तदाननं नलमनःशशिकान्तम बोधियत् ॥ इतरथा शशिनोऽभ्युदये ततः कथम् सुस्रुवदश्रु मयंपयः ॥ ३६ ॥

वाष्पातिरेकमाह ॥ नेति । नलमनोनलान्तःकरणंतत्सुन्दरमथवाय स्यवेदात्उन्मादवशेनपश्यतिसतदाननं भैमीमुखंकर्म उन्मादवशाच्छशिव त्कान्तंरमणीयंचन्द्रकान्तमणिविशेषरूपंमखलुनवाऽबोधि । अबुद्वेतिका कुः । किंतुसम्यगेवाबोधीत्यर्थः । किंतुतस्वतएवचन्द्रकान्तत्वतस्यान ज्ञातमित्यर्थः । इतरथापूर्ववदधुनापिभ्रान्तमेववेत्तस्यचन्द्रकान्तत्वंतस हिशशिनोऽभ्युदयेसतितलोमुखादश्रुमयंबाष्परूपंपयउदकंकथमसुस्रुवत् । स्रवतिस । चन्द्रोदयेचन्द्रकान्तादुदकंस्रवतिनान्यस्मात् चन्द्रोदयेमुखा श्रुजलंस्रवतितिइतात्विकमेवचन्द्रकान्तत्वंनतुभ्रान्तमित्यर्थः । चन्द्रव त्कान्तमितिपक्षेवैरिणाचन्द्रेणासहस्पर्द्धमानत्वात्तदुदयेदुःखवशात्तोऽश्रुरू पंनिसृतवैरिणउदये ऽन्यस्यापिदुःखादश्रु निर्गच्छति । नत्वन्यस्य तस्मा च्चन्द्रसंस्पर्द्धितिइति तावज्ज्ञातं चन्द्रवत्कान्तं चन्द्रःकान्तोयस्येतिवोक्ते चन्द्र मित्रत्वप्रतीतिस्तसखमित्रोदये आनन्दाश्रु निर्गच्छतीतिवा ,चन्द्रोपिताश्रु श्रुमपीडयदित्यर्थः । असुस्रुवदितिणिश्रिद्रुस्रुभ्यः कर्त्तरिचङ् ॥ ३६ ॥

रतिपतेर्विजयास्त्रमिषुर्यथा जयति भीमसुतापि तथैव सा ॥ स्वविशिखानिवपञ्चतया ततोनिय तमैहत योजयितुं मताम् ॥ ३७ ॥

रतीति ॥ रतिपतेःकामस्य इषुर्यथाविजयास्त्रंदिग्जयसंबन्धिविजयसा धनमस्त्रंजयति । तथैवकामवाणवदेवसाभीमसुतापिविजयसाधनमस्त्रंस र्वोत्कर्षेणवर्त्तते । कुतोज्ञातमित्यतआह । ततएवहेतोःसकामः पञ्चत यापञ्चत्वसंख्ययास्वविशिखानिवस्ववाणानिवतांभैमीं नियतनियमेनप ञ्चतयायोजयितुमैहत,पञ्चतयायोजनयुक्तमितिच्छलना । अत्रानुभूतोक्ता । पञ्चतापञ्चभावः । स्यात्पञ्चतामरणेतिविश्वः ॥ ३७ ॥

शशिमयं दहनास्त्रमुदित्वरं मनसिजस्य विमृश्य वियोगिनी ॥ झटिति वारुणमस्त्रमिषाद् असौ तदुचितं प्रतिशस्त्रमुपाददे ॥ ३८ ॥

शशिमयमिति । वियोगिनी विरहपीडिता असौ भैमी मनसिजस्य कामस्य शशिमयं चन्द्रलक्षणं दहनार्थं आग्नेयास्त्रमुदित्वरमुद्गमनशीलं विमृश्य विचार्य झटिति शीघ्रमश्रुमिषाद् बाष्पव्याजात् तदुचितमाग्नेयास्त्रविघातसमर्थं वारुणं वरुणदैवतं प्रतिशस्त्रमाग्नेयास्त्रशत्रुभूतमस्त्रमुपाददे ऽङ्गीचकार । चन्द्रोदयेऽसह्यत्वाद्भृशमरोदीदित्यर्थः । वारुणं सास्य देवतेत्यण् ३८

अतनुना नवमम्बुदमाम्बुदं सुतनुबक्रमदस्तमवेक्ष्य सा ॥ उचितमायतनिश्वसितच्छला श्वसनशस्त्रममुञ्चदमुं प्रति ॥ ३९ ॥

अतनुनेति ॥ सा सुतनुर्विरहवशात्तन्वी भैमी नवमम्बुदं मेघमेव आम्बुदं वारुणमस्त्रमतनुना कामेन उदस्तं स्वंप्रति निरस्तमवेक्ष्य दृष्ट्वा आयतस्य दीर्घस्य निःश्वसितस्य छलान्मिषादुचितमाम्बुदास्त्रनिवारणार्थं श्वसनशस्त्रं वायव्यास्त्रममुं कामं प्रति उद्दिश्य अमुञ्चत् । सुतनुत्वात्स्वंसा अतनुत्वाद्वैरिणः किमपि कर्तुमशक्यत्वात्प्रावृट्कालेनवमेघदर्शनमात्रेण दीर्घनिश्वासं तत्याजेति भावः । बाधानां जतिः । वैयंस्त्रघातार्थिनः अत्यस्त्रं क्षिपन्तीति ३९

रतिपतिप्रहितानिलहेतितां प्रतियती सुदती मलयानिले ॥ तदुरुतापभयात्स्वमृणालिकामयमियं भुजगास्त्रमिवाददे ॥ ४० ॥

रतीति । सुदती शोभनदन्ता इयं भैमी मलयानिले दक्षिणपवने रतिपतिना कामेन प्रहितानिलहेतितां प्रेषितवायव्यास्त्रतां प्रतियती प्रतिजानती अयं मलयानिलो न भवति किंतु मां प्रति कामेन निहितं वायव्यास्त्रमिति जानती तदुरुतापभयान्मदनजनितसंतापभयेन तापशान्त्यर्थं सेवाऽङ्गीकृतायां मृणालिकां तन्मयं तद्रूपं भुजगास्त्रमिव पन्नगास्त्रमिवाददे स्वीचकार । वसन्ते मलयानिले वाति सति संतापवाहुल्यात्तच्छान्त्यर्थमङ्गेषु मृणालानि निहितानीति भावः । पन्नगाकारत्वात्पवनाशनत्वाच्च मृणालिकानां पन्नगास्त्रत्वम् ॥४०॥

न्यधित तद्धृदि शल्यमिव द्वयं विरहितां च तथा पि च जीवितम् ॥ किमथ तत्र निहृत्य निखातवान् रतिपतिः स्तनबिल्वयुगेन तत् ॥ ४१ ॥

न्यधितेति । रतिपतिः कामस्तद्धृदि तैमीहृदये द्वयं शल्यमिव शङ्कुद्वयमिव न्यधित निहितवान् । किं तद्द्वयं विरहितां वियोगित्वं तथापि वियोगित्वेस त्येव च यज्जीवितं जीवनं विरहितां च जीवितं चेति । चो चावन्योन्यसमुच्चये । अथ तत्र हृदयोपरि शल्यद्वयस्थापनानन्तरं तच्छल्यद्वयं स्तनलक्षणेन बिल्वयुगेन बिल्वद्वयेन कृत्वा निहृत्य नितरां हृत्वा तत्र हृदि निखातवान् शैथिल्यनिरासा यद्दृढं रोपयामास किमिति वितर्कः । विरहवशात्स्वल्पकालमपि जीवनं दुःखदं जातमिति भावः । अत्रोत्तरत्र च ग्लानेरनुभावो स्फुटो ज्ञेयः ॥ ४१ ॥

अतिशरव्ययता मदनेन तां निखिलपुष्पमयस्वशरव्ययात् ॥ स्फुटमकारि फलान्यपि मुञ्चता तदुरसि स्तनतालयुगार्पणम् ॥ ४२ ॥

अतीति । मदनेन तदुरसि तैमीहृदये स्तनलक्षणं तालफलयुगं तस्यार्पणं मकारि स्फुटमुत्प्रेक्षे । किंभूतेन तां तैमीमतिशरव्ययता अतितरां वेध्यं कुर्वता तथा पुनर्वेध्यकरणादेव निखिलाः पुष्पमयाः स्वशरास्तेषां व्ययान्नाशात् फलान्यपि तां प्रति मुञ्चता वृक्षाणामन्येषां कुसुमाभावेन फलवत्त्वात्तालद्वय स्यास्यादङ्गीकृतमित्यर्थः । अन्योपि धानुष्को बाणव्यये पाषाणादिना वैरिणां हन्ति । अतिशरव्यं करोतीत्यर्थे तत्करोतीति ण्यन्तात् शतानुक्लिपातलक्षणमिति णिलोपः ॥ ४२ ॥

अथ मुहुर्बहु निन्दितचन्द्रया स्तनभिन्नधृतदयाच तया मुहुः ॥ पतितया स्मरतापमये गदे निजगदेऽश्रुविमिश्रमुखी सखी ॥ ४३ ॥

अथेति । अथ तया सखी निजगदे वक्ष्यमाणमुक्ता । किंभूतया स्मरतापमयेकामजनितसंतापज्वरे पतितया निमग्नया अत एव मुहुर्वारंवारं नितरां वक्ष्यमाणप्रकारेण निन्दितः कामसित्रं चन्द्रो यया तथा मुहुस्तौ विधुन्तुदो राहुर्यया । किंभूता सखी संतापविलोकनादेवाश्रुविमिश्रं बाष्पमिश्रं मुखं यस्याः

सा । अन्योधिराय नोऽसाधुंस्तौति । साधुनिन्दति । विधुन्तुदइतिवि ध्वरुषोस्तुदइतिखश्मुम् ॥ ४३ ॥

**नरसुराब्जभुवामिव यावता भवति यस्य युगं यदनेहसा ॥ विरहिणामपि तद्रतवद्युवक्षणमितं न कथं गणितागमे ॥ ४४ ॥**

त्रिभिःश्लोकैर्विरहस्यदुःसहत्वमाह । नरेति । तदितिसंबन्धाद्यदिति लभ्यते । यावतायत्परिमाणेनयदनेहसायेषांनरसुराब्जभुवामनेहाः काल स्तेन यद्वायेनानेहसाकालेननरसुराब्जभुवांनराणांमनुष्याणांसुराणांदेवा नामब्जभुवोब्रह्मणस्तेषांमध्येयस्यदेवस्यब्रह्मणोवायद्युगंभवति तन्नरसु राब्जभुवांयुगमिवविरहिणामपिवियोगिनांस्त्रीपुंसानांसंबन्धियुगंगणिता गमेज्योतिःशास्त्रे रतवन्तःसुरतयुक्ता युवानःस्त्रीपुंसास्तत्संबन्धिमानिमे षचतुर्थांशलक्षणेनक्षणेनमितंसमीकृतंकथंकिमितिनभवति अपितदपिज्यो तिःशास्त्रेगाणितिकैरतवद्युवक्षणेनमितंसमंगणनीयं तत्तुनकृतमनुचितमे तदित्याक्षेपः । प्रश्नोवा । यद्वायावतायदनेहसायस्ययुगभवति तद्युगर तयुक्तयो र्यूनोःक्षणेनमितंगणितशास्त्रेविरहिणामपिकथंनभवति । केषामि वनरसुराब्जभुवामिवषष्ठ्यधिकदिनानांत्रिशतीमनुष्याणांवर्षं तद्देवानाम होरात्रमेवंसाद्वादशसहस्रीचतुर्युगंतावतीरात्र स्तद्देवानांचतुर्युगसहस्रं ब्रह्मदिनंतावत्येवरात्रिर्ब्रह्मणः पञ्चाशतावर्षैःपरार्द्धंपरार्द्धद्वयपरमायुर नघारीत्यायुगादिकल्पनामनुष्यादीनांज्योतिः शास्त्रेयथागणिता तथावि रहिणांसंयुक्तानांचगणितशास्त्रेयुगगणनाकथंनकृता । संयुक्तानांक्षणोवि युक्तानामनतिक्रमणीयत्वाद्युगतुल्योजायतइत्यर्थः इतियथामतियोज नीयःश्लोकः । युगगणनायांनरकालस्यमुख्यत्वादभ्यर्हितत्वेननरशब्दस्य पूर्वंनिपातः । एवंब्रह्मणोपेक्षयासुराणांकालस्य । विरहिणां रतवद्युवेति पुमान्स्त्रियेत्येकशेषः ॥ ४४ ॥

**जनुरधत्त सती स्मरतापिता हिमवतो न तु सन्महिमादृता ॥ ज्वलति भालतलेलिखितः सती विरह एव हरस्य नु लोचने ॥ ४५ ॥**

जनुरिति । सतीदाक्षायणीदक्षकन्यास्मरतापितासतीहिमवतः सका

शात्जनुर्जन्मआधत्ताऽङ्गीचकार । तस्यहिमालयस्यमहिम्निदेवस्वरूपोय मिति महत्त्वेआदृताआदरयुक्तानैवजन्माधत्त । हिमाकरत्वात्काजतापश्चा न्त्यर्थंजन्मान्तरकृतंनतुदेवत्वात् । किंच । हरस्यभालतलेललाटेत्रक्षणा लिखितः सतीविरहएवज्वलति । नतुलोचनंतृतीयनेत्रं । भविष्यद्विपया दैवीलिपिर्ललाटेलिख्यते । ज्वलतीत्यसहनत्वंसूचितम् । यौजगतोमा तापितरौतयोरपिविरहेणेदृशीअवस्था । मादृशांकथंजाताजविष्यतीति भावः । जनुर्जननजन्मानीत्यमरः । हिमवतोनित्ययोगेऽतिशयेवामतुप् ४५

दहनजा न पृथुर्दवथुव्यथा विरहजैव पृथुर्यदि नेदृशम् ॥ दहनमाशु विशंति कथंस्त्रियः प्रिय मपासुमुपासितुमुद्धुराः ॥ ४६ ॥

दहनेति । दहनजावन्हिजातादवथुव्यथादाहपीडानपृथुर्नगुर्वीकिन्तु विरहजैवदाहव्यथापृथुरतिशयितेत्यर्थः । अत्रार्थेऽन्यथानुपपत्तिं प्रमाण यति । यदीदृशंनस्याद्विविपरीतमेवचेत्स्यात्तर्हि अपगताअसवःप्राणाय स्यतंमृतप्रियमुपासितुंसेवितुमुद्धुराउत्सुकाः सोत्साहाःस्त्रियआशुझटिति कालविलम्बमकृत्वैवदहनमग्निंकथंविशन्तिप्रविशन्ति । तावत्तस्माद्वन्हेर पिसकाशाद्विरहपीडैवपृथुरिति । लघेतियुक्तःपाठः ॥ ४६ ॥

हृदि लुठन्ति कला नितराममूर्विरहिणीवधपङ्क कलङ्किताः ॥ कुमुदसख्यकृतस्तु बहिःकृताः सखि विलोकय दुर्विनयं विधोः ॥ ४७ ॥

हृदीति । हे सखिएतादृशंविधोश्चन्द्रस्यदुर्विनयमविनीतत्वंविलोकय । कीदृशंतदाह । नितरांविरहिणीवधएवपङ्कः पातकंतेनकलङ्कितामलिनि ताअमूर्दृश्यमानाःकलाहृदिलुठन्तिक्रीडन्ति । पुनर्विशेषेण कुमुदसख्य कृतः कुमुदमैत्रीकारिण्यः परोपकारशीलास्तावहिष्कृताःयाः पातकिन्यः परापकारएवपरास्ताहृदिलुठन्ति । यस्तुविनीतोभवतिसतूपकारिणं हृद येधारयतिपापिनंबहिरेवस्थापयति पापीतुविपरीतंकरोति । अंहोऽघं कपुंसान्पाप्माइत्यमरः ॥ ४७ ॥

अयि विधुं परिपृच्छ गुरोः कुतः स्फुटमशिक्षत

दाहवदान्यता ॥ ग्लपितशंभुगलाद्गरलात्त्वया किमुदधा वतवाडवानलात् ॥ ४८ ॥

अयीति । अयिसखित्वंविधुमितिस्फुटस्पष्टं परिपृच्छ । इतिकिंहेच न्द्रत्वयाकुतःकस्माद्गुरोर्दाहवदान्यतादाहदातृत्वमशिक्षत अभ्यस्तम् । हेजडअनुचिताऽभ्यस्तकारिन् दुर्मते ग्लपितोदग्धः शीतलः शंभुगलोये नतस्माद्गरलाद्विषात् किमशिक्षत । तन्मस्तकेस्थित्वात्तदभ्यस्तंवा । अ थवा उदधौस्थित्वाभ्यस्तं विद्यमानाद्वडवानलाद्वडवाग्नेर्वा ईश्वरतएव उत्पन्नत्वाच्च वडवाग्नेस्तत्रैवस्थितत्वात्संभाव्यतइतिवा । चन्द्रस्तामत्य धिकंपीडयतीत्यर्थः । तस्यसतापकारित्वमनन्यसंयोगवद्विषमग्निर्वाक ल्पयतीतियुक्तमूलोवितर्कः । गुरोरिति आख्यातोपयोगइत्यपादानत्व म् ॥ ४८ ॥

अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते ॥ शितिनिशादृषदि स्फुटदुत्पतत्कणगणाधिकतारकिताम्बरः ॥ ४९ ॥

अयमिति । अयंचन्द्रः अयोगिन्योवियोगिन्योवध्वः स्त्रियस्तासांव धस्तद्रूपैःपातकैः कर्तृभिर्भ्रमिंभ्रमणमवाप्यप्राप्यदिवः स्वर्गादाकाशाद्वाशि तिनिशाकृष्णरात्रिस्तल्लक्षणायां दृषदिशिलायां पात्यते खलूत्प्रेक्षे । शिला यां पातनादेवस्फुटन्तोविदीर्यमाणाउत्पतन्तउच्छलन्तः कणगणालेशसमू हास्तैरधिकमतिशयेनतारकितंसंजाततारकमम्बरमाकाशंयस्मात्शुक्लपक्षे परिपूर्णत्वाच्चन्द्रेण विरहिण्यस्तारकाश्चपीड्यन्तेपरिम्लायन्ते कृष्णपक्षेचन्द्र क्षयाद्विरहिणां तादृशीपीडा नभवति तारकाश्चस्पष्टतराभवन्ति । त्रमश्च तस्यस्वतः सिद्धं शिलायांपातितश्चूर्णीभूतोयद्यपि तथापिस्वभावंनत्यजति उत्प्रेक्षा । अन्योपिपातकीपातकैर्भ्रामयित्वातिकठोरशिलायां स्वर्गान्नि पात्यते कणाश्चोर्ध्वंगच्छन्ति । शितीधवलमेचकेइत्यमरः । अवाप्येतिपय न्तस्य, तारकितंतारकादित्वादितच् ॥ ४९ ॥

त्वमभिधेहि विधुं सखिमद्गिरा किमिदमीदृगधिक्रियते त्वया ॥ न गणितं यदिजन्मपयोनिधौ

हरशिरःस्थितिभूरपिविस्मृता ॥ ५० ॥

त्वमिति । हेसखित्वमद्रिराभैमीत्वामेवंपृच्छतीतिविधुमभिधेहिवद । हेचन्द्रविशिष्टकुलोत्पन्नेनत्वयावद विरहिणीवधलक्षणमीदृग्विधं कर्मकिमिति अधिक्रियते अङ्गीक्रियते एवंकर्मकर्तुं युक्तंनभवतीत्यर्थः । परापकाराकरणेकारणमाह । लक्ष्मीन्दुशोजनकत्वादतिकुलीनेमयोनिधौरत्नाकरेजन्मयद्दिनगणितंविचारितं तर्हिहरशिरः स्थितिलक्षणभूरपिविस्मृता काकु । यस्तुकुलीनोभवति सदासत्सन्निधौवर्त्तते सपरापकारंनकरोति । त्वयाकुलीनत्वं स-सन्निधिमत्त्वंचोभयमपि विस्मृतम् । पापिनासहस्र.क्षमयानोच्यते इतिमद्रिरेत्यनेनसूचितम् ॥ ५० ॥

निपततापि न मन्दरभूभृता त्वमुदधौ शशलाञ्छनचूर्णितः ॥ अपि मुनेर्जठरार्चिषि जीर्णतां बत गतोसि न पीतपयोनिधेः ॥ ५१ ॥

निपततेति । शशलाञ्छननिन्दितकर्मन् चन्द्रउदधौनिपततामन्दरसंज्ञकेनभूभृतापर्वतेनापिसमुद्रेस्थितस्त्वंनचूर्णित स्तथा पीतपयोनिधेर्मुनेरगस्त्यस्यजठरार्चिषि उदराग्नावपिजीर्णतांनाशंवातापिवन्नगतोसिप्राप्तोसि। यतइतिउभयत्रापिखेदः । जीर्णतामपीतिवा । अस्मद्भाग्येनैव दूषणपितवमजातम् । अतिदाहकत्वात्ताभ्यामपिपरित्यक्तः ॥ ५१ ॥

किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः ॥ मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥ ५२ ॥

किमसुभिरिति । हेजडमूर्खचन्द्रकिमितिमन्यसे । इतिकिम् । ग्लपितैः खेदितैर्गतैरित्यर्थः एवंविधैरसुभि.प्राणैःकृत्वाभीमसुतामनोभैम्यन्तःकरणं मयिनिमज्जतु निलीयतामिति । मनश्चन्द्रेनिलीयतइतिश्रुतेः । प्राणेषु गतेषुभैमीमनोमयिनिलीनंभविष्यतीति चित्तेनाकार्षीरित्यर्थः । श्रुतिप्रमाणमित्यपिनमन्तव्यमित्याह । किलयस्माद्विबुधोवेदव्याख्यानसमर्थो देवश्चरोमेधावीकामश्चममसंबन्धिनीं तदर्थिकांचन्द्रेमनोनिलयनप्रतिपादिकांश्रुतिं नलमुखेन्दुपरांनैषधवदनचन्द्रपरामाह वदतिस्म । यदिह

तेनकामेनसामान्यापि श्रुतिर्विशिष्टविषयीकृताअतिपंडायामपि अहंत्व द्धीनान्नभवामि । किंतुनलाधीनैवेतितात्पर्यं । मूर्खत्वमापाततः श्रुतेरर्थं गृण्हासि । पूर्वापरानुसंधानवान्पण्डितोनतु श्रुतेरन्यार्थत्वंब्रूते ॥ ५२ ॥

**मुखरय स्वयशोनवडिण्डिमंजलनिधेःकुलमुज्ज्व लयाधुना ॥ अपि गृहाण वधूवधपौरुषं हरिण लाञ्छनमुञ्चकदर्थनाम् ॥ ५३ ॥**

मुखरयेति । त्वमधुनाऽस्मिन्समयेस्वयशः संबन्धिनवंनूतनंडिण्डिमना मकंवाद्यंमुखरयवादय आद्यशांप्राणनाशनेनतवमहती कीर्त्तिर्भविष्यतीति स्वपितुर्जलनिधेः कुलंवंशमुज्वलयोज्वलंकुरुवधूवधपौरुषमपिगृहाण जड निधेर्वंशेतातस्यैवैतत्सर्वंयुक्तंनत्वन्यस्य । अथवस्वयशः संबन्धिनंनवडिं ण्डिमंवादयजलनिधेः कुलंदह एतत्सर्वं कुरु परन्तुहरिणलाञ्छनशशकल ङ्ककदर्थनांपीडांमुञ्चमाकार्षीः । पीडायाअसह्यत्वात् झटितिमारये त्यर्थः ॥ ५३ ॥

**निशि शशिन्भज कैतवभानुतामसतिभास्वतिता पयपापमाम् ॥ अहमहन्यवलोकयितास्मितेपुनर हर्पतिनिर्धुतदर्पताम् ॥ ५४ ॥**

निशीति । हेशशिन्निशिरात्रौकैतवभानुतांकपटसूर्यत्वं भजाऽङ्गीकुरु । हे पापरूपभास्वतिसूर्ये असतिविद्यमानेमातापयज्वालय । निशिसूर्यस्या विद्यमानत्वादुभयत्रापियोजनीयम् । तत्सुखंनकुरु । अहमहनिप्रभातेपु नस्तेनवाहर्पतिनासूर्येण निन्हुतोनिराकृतोदर्पोगर्वोयस्य तस्यभावस्तत्व मवलोकयितास्मिद्रक्ष्यामि । सूर्यसमक्षंत्वयाभयमपि कर्त्तुं नशक्यते तेन यद्यत्तवकरिष्यते तन्मयैवद्रक्ष्यते इतिलौकिकयुक्तिः पुनर्मुहुरित्यर्था ॥ ता पयचुरादावाधृषाद्वेत्यत्रपठितस्य तपदाहइत्यस्य । अवलोकयितास्मीति लुट् । अहर्पतिरिति अहरादीनामितिरेफः ॥ ५४ ॥

**शशाङ्कलङ्कभयङ्कर मादृशां ज्वलसि यन्निशिभून पतिंश्रितः ॥ तदमुनस्य तवेदृशभूतताद्भुनकरी परमूर्धविधूननी ॥ ५५ ॥**

शशेति । शशकलङ्कमादृशांविरहिणां भयंकरपीडाकरत्वं निश्चितभूतपतिं पृथिव्यादिमहाभूतानांपतिमाकाशंश्रितआश्रितवान् । अपितुंकृतप्रारम्भो वासनयज्ज्वलसितप्यसे । ततस्मादमृतस्यामृतमयस्यतवेदृशभूतताईदृशो भूतस्तस्य भावोज्वलनवद् जातिकान्तिमत्ताच अद्भुतकरी चमत्कारिणी । अतएव परेषांमूर्द्धविधूननीशिरःकम्पनकारिणी । अमृतस्यशीतलस्यदाह कत्वंनदृष्टमित्याश्चर्यम् । इकलङ्कस्य परपीडकस्यामृतरूपत्वादिकमाश्चर्य कारीतिच । ईदृशंमादृशजनोद्वेगजननलक्षणंप्रकारंभूतःप्राप्तस्त्वंतेतिवा । अथच भूतपतिंशिवमाश्रितोयज्ज्वलसि अमृतस्यकस्यामृतस्यतवेदृशभूत ताश्चाश्चर्यकारिणी भूतानामस्मदादीनांप्रतिपालकस्तदाश्रितस्यसतःसु धारूपस्यचतवपरपीडाकरत्वं तदाश्चर्यकरंयुक्तं नभवतीत्यर्थः । अथच भूतपतिंभैरवरूपंमहादेवमाश्रित्यरात्रौयज्ज्वलद्रूपोभवसि तदमृतस्यजी वतएवईदृशपिशाचताआश्चर्यकारिणी, मृतस्यैवभूतत्वंदृष्टं, भूतोहिमृतः सन्स्त्रीबालकादीनां भयंकरोभवति । रात्रौज्वलतियतभिन्नवतितस्य मूर्द्धानमपि कम्पयति ॥ अथवा ऽमृतस्योदकस्यज्वलनरूपताआश्चर्यकारि णी । उदकस्यज्वालकत्वंकुत्रापि नदृष्टमित्यर्थः । भयंकरस्येदं तिभयेऽभि तिखश्चिमुम् । श्रितःकर्त्तरिक्तवत् । श्रितोगत्यर्थत्वात्कर्त्तरिक्त । अद्भुत करी । कृञोहेतुताच्छील्येइतिटः ॥ ५५ ॥

श्रवणपूरतमालदलाङ्कुरं शशिकुरङ्गमुखे सखि
निक्षिप ॥ किमपि तुन्दिलितः स्थगयत्यमुं सप
दि तेन तदुच्छ्वसिमि क्षणम् ॥ ५६ ॥

श्रवणेति ॥ हे सखित्वं तवममच श्रवणपूरंकर्णभूषणभूतंतमालदलाङ्कु रंतमालपत्राङ्कुरंशशिनःकुरङ्गोमृगस्तस्यमुखेघासार्थं निक्षिपार्पय । प्रयोज नमाह । तेनाङ्कुरेणतुन्दिलितोबृहत्कुक्षिः सन् समृगो यद्यमुंचन्द्रं किमपि स्वल्पमपिस्थगयत्याच्छादयति ततर्हितदाक्षणमात्रमपि उच्छ्वसिमिउच्छ्वा समोचनमपि कर्तुंसमर्थास्यां अङ्कुरजक्षणपुष्टेनानेन चन्द्रश्चेत् पिहितःस्या त् तर्हि तद्दर्शनाभावात्क्षणमात्रंममपीडाभाव इत्यर्थः । स्थगयतिउ- च्छ्वसिमि । आशंसस्य वर्त्तमानवत्प्रत्ययः । तुन्दशब्दादस्त्यर्थेतुन्दादित्वा दिलचितत्करोतीतिणिचिनिष्ठा ॥ ५६ ॥

असमये मतिरुन्मिषति ध्रुवं करगतैव गता यु
दियं कुहूः ॥ पुनरुपैति निरुध्य निवास्यते स
खि मुखं न विधोः पुनरीक्ष्यते ॥ ५७ ॥

असमयइति ॥ ध्रुवंनिश्चितंमतिर्बुद्धिरसमये ऽप्रस्तावेएवोन्मिषतिस्फु
रतीत्यर्थः । कुतोयद्यस्मादियंकुहूरमावास्याकरगतैवहस्तप्राप्तैवातिसन्नि-
हितैवगता यदितस्मयेस्फुरिता स्यात् तर्हि तदैवनिरुद्धास्यात् । तदाचन्द्रो
दृष्टो न भवेद् तदेयंबुद्धिर्नोत्पन्ना । पुनर्वदति साकुहूर्यदिपुनरुपैति आ-
गमिष्यति । तर्हि निरुध्यनिबन्धंकृत्वात्वयात्रस्थातव्यमिति संप्रार्थ्य
निवास्यते स्थापयिष्यते । पुनरुपैष्यतीतिकाकुर्वा । यथाविधोश्चन्द्रस्य
मुखंपुनर्नेक्षते सदाअमावास्यास्थितौ चन्द्रावलोकनंकदापिनस्यादित्य-
र्थः । करगतागत्यर्थत्वात्कर्तरिक्तः द्वितीयाश्रितेतिसमासः । उपैति ।
वर्तमानसामीप्येवर्त्तमानवत्प्रत्ययः ॥ ५७ ॥

अयि ममैष चकोरशिशुर्मुनेर्व्रजति सिन्धुपिबस्य
न शिष्यताम् ॥ अशितुमब्धिमधीतवतोऽस्यवा श
शिकराः पिबतः कति शीकराः ॥ ५८ ॥

अयीति । चन्द्रादर्शनेहेत्वन्तरसूचनार्थंचशब्दः अयिहेसखिममैषच
कोरशिशुः सिन्धुपिबस्यसमुद्रपानकारिणोमुनेरगस्त्यस्यशिष्यतां नव्रजति
नगच्छतिपृच्छेतिशेषः । बालत्वेप्यन्यायः सुकर तच्छिष्यत्वेतवकिंफलमत
आह । तच्छिष्यत्वेनाब्धिंसमुद्रमशितुंपातुमधीतवतः समुद्रपानसमर्थस्य
चकोरशिशोः पिबतः पानंकुर्वतोऽस्यशशिकराः कतिशीकराः विन्दवोभ-
विष्यन्ति । अपितु स्वल्पाएव यःसमुद्रंपातुमिच्छति तस्यचन्द्रकिरणपा
नमतिसुकरमित्यर्थः । एवं सतिकदापि चन्द्रोनदृश्येतेति भावः । कति
वेतिसम्भावनार्थोवावाशब्दो वायसादितिवा । सिंधुपिबस्यपाघ्रेत्य-
नेनशः ॥ ५८ ॥

कुरु करे गुरुमेकमयोघनं बहिरितो मुकुरं च कुरुष्व
मे ॥ विशति तत्र यदैव विधुस्तदा सखि सुखादहितं
जहि तं द्रुतम् ॥ ५९ ॥

कुर्वंति । हे सखिगुरुंभारवन्तमेकमयोघनंलोहमुद्गरंकरेकुरुस्थापय । इतो मद्गृहाद्बहिर्मेमुकुरंदर्पणंकुरुस्थापय । किमर्थमित्यत आह । विधुस्त न्मुकुरेयदैव विशतिप्रतिविम्बरूपेण प्रविशति तदैवसुखादनायासेनैव तमहितंचन्द्रवैरिणंद्रुतंशीघ्रंजहिमारयचूर्णीकुर्वित्यर्थः । ततःपीडाशान्तिर्भविष्यतीतिभावः । उन्मादोक्तिः । दर्पणेमुकुरादर्शाइत्यमरः । अयोहन्यतेऽनेनेत्ययोघनः करणेयोविद्रुष्वित्यप्रत्ययेघनादेशः ॥ ५९ ॥

उदर एव धृतः किमुदन्वता न विषमो वडवानलवद्विधुः ॥ विषवदुज्झितमप्यमुना न समरहरः किममुं बुभुजेविभुः ॥ ६० ॥

उदरइति ॥ उदन्वतासमुद्रेण विषमोदुःसहो अथच विषेणमीयतेसमीक्रियतइति विषमोविधुश्चन्द्रोवडवानलवदुदरएव किंनधृतोनिक्षिप्तः । एवं कर्तुंयुक्तं यथापरोपतापी वडवाग्निर्लोकोपकारार्थमुदरएवधृतस्तथायमपि किमिति नधृतइतिव्यतिरेकदृष्टान्तः ॥ अन्यच्चामुनासमुद्रेण विषवत् विषमिवोज्झितं विषादिनासहितमुः समर्थः परोपकाराय प्रसिद्धः स्मरहरोमहादेवोऽमुंचन्द्रं किमबुभुजेनभक्षितवान् । विषंभुक्तवान्विषवत् त्वांकिमिति नभुक्तवान् । तस्माद्विषवद्विषमोनततोपि विषमइति । उदन्वानुदधौइतिसाधुः । बुभुजेभुजोनवनइतितङ् ॥ ६० ॥

असितमेकसुराशितमप्यभून्नपुनरेव विधुर्विशदं विषम् ॥ अपि निपीय सुरैर्जनितक्षयं स्वयमुदेति पुनर्नवमार्णवम् ॥ ६१ ॥

असितमिति । सामुद्रंविषंद्विविधंकृष्णंश्वेतञ्च । असितंकृष्णंकालकूटाख्यमार्णवंसामुद्रविषमेकेन सुरेणमहादेवेनेनाशितं भक्षितंपुनरपिनाभूत् न बभूव । एषचन्द्रःपुनःसामुद्रंविशदंश्वेतंविषसुरै र्देवैरिन्द्रादिभिःप्रतिपदादितिथिषु निपीयनिःशेषंपीत्वाजनितक्षयमपि कृतनाशमपि पुनर्नवंनूतनंस्वयमेवसर्वानगणयित्वोदेतिसमुत्पद्यते । तथयुक्तमपिबहुभिः बहुधेवनजितमपि श्वेतंविषपुनरुत्पद्यते, एकदैवएकदेवभक्षितंकृष्णंविषंपुनर्नोत्पन्नं, बहुदेवभक्षितमपि श्वेतंविषंपूर्वापेक्षयाधिकं तस्मात्कालकूटाख्यादप्यधिकंदृढमित्यर्थः ॥ ६१ ॥

विरहिवर्गवधव्यसनाकुलं कलयपापमशेषकलंवि धुम् ॥ सुरनिपीतसुधाकमपापकं ग्रहविदो वि परीतकथाः कथम् ॥ ६२ ॥

विरहीति । हेसखिविरहिणश्चविरहिण्यश्चविरहिणस्तेषांवर्गस्यसमूहस्य वधएवव्यसनं तस्मिन्नाकुलंकेनोपायेनैतेवध्याइतिचिन्ताकुलं मशेषकलं परिपूर्णंविधुंपरापकारित्वात्पापंपापरूपं कलयजानीहि व्यसनेनहेतुना ऽकुलंकुलरहितप्रायंजानीहि कुपुत्रेणकुलनष्टमितिन्यायात् तथासुरैर्देवैरादिभि र्निपीतासुधाऽमृतंयस्य एवंविधममावास्याचन्द्रंविरहिणामतापकारित्वा दपापकं पुण्यवन्तंजानीहि ग्रहविदोज्योतिर्विदः कथंकुतोविपरीताक थाज्ञाषणं येषां पूर्णेन्दुंशुभग्रहंकथयन्तिक्षीणंचपापग्रहं । क्षीणेन्दुर्कभुजाः प्रापाइति,तन्नज्ञायतइत्यर्थः । विपरीतंकथयन्तीतिवा । अथचतु षष्टिकला वान्सविद्यो परोपकारीपापएवविद्यारहितः परोपकारीपुण्यवानित्यु क्तिः । विरहीतिपुमान्स्त्रियेत्येकशेषः निपीतसुधाकंशेषाद्विभाषेतिकपि आपोन्यतरस्यामितिविकल्पाद्ध्रस्वाभावः ॥ ६२ ॥

विरहिभिर्बहुमानमवापि यः सबहुलः खलुपक्ष इहाजनि ॥ तदमितिः सकलैरपि यत्र तैर्व्यरचि सा च तिथिः किममाकृता ॥ ६३ ॥

विरहिभिरिति । खलूत्प्रेक्षे विरहिभिर्यःपक्षोबहुअत्यन्तंमानंसंमानम वापि प्रापित स्तत्रचन्द्रक्षयात्सपक्षइहलोकेबहुलः कृष्णपक्षोऽजनिजातः युक्तमेवैतत् । यःसम्भावालोकेबहुमानंपूजाप्रमाणंचलभते सप्रवृद्धोबहु लश्चभवति । बहुलातिष्याददत्तेइति । इहबहुलपक्षेयस्यांतिथौसकलैःसम स्तैरपितैर्विरहिभिस्तस्यबहुमानस्यामिति रपरिमितताव्यरचि साचसैवति थिरमाकृताकिममावास्याकृतेत्यर्थः। अमावास्यायांसर्वथ चन्द्राभावादपरि मितोमानंकृत स्तथाचमानपरिमाणराहित्यादन्वर्थताजाता नत्वमासहवस तोऽस्यांसूर्याचन्द्रमसावितिव्युत्पत्त्येत्यर्थः । विरहिणांकृष्णपक्षःशुक्ल स्तत्राप्यमावास्येत्यर्थः । बहुलः आतोनुपसर्गेकः । अमीकृतेतिपाठः क्लिष्टकल्पनयोपेक्ष्यः ॥ ६३ ॥

स्वरिपुतीक्ष्णसुदर्शनविभ्रमात्किमु विधुं ग्रसते न विधुं तुदः ॥ निपतितं वदने कथमन्यथाबलिकरम्भनिभं निजमुज्झति ॥ ६४ ॥

स्वरिपुरिति । समप्रसिद्धो विधुन्तुदो राहुः स्वस्य रिपुर्विष्णुस्तस्य तीक्ष्णं सुदर्शनस्य चक्रस्य तुल्यत्वेन विभ्रमाद्भ्रान्तेर्विधुं ग्रसते । किंस्विदुत्प्रेक्षा । अन्यथा चन्द्रभुक्त्यैव चेत् स्याद् ग्रासं वदने निपतितं निजं स्वीयं स्ववशं वा बलय यं पूजार्थं कुम्भत्वात्करम्भनिभं दधिमिश्रं सक्तुम् चन्द्रं कथमुज्झति त्यजति । तावदतः सुदर्शनबुद्ध्या पूर्वं वदनानीयमानमपि च्छेदभियैवेति त्यजति राहोरुपहारः करम्भो भवति ॥ ६४ ॥

वदनगर्भगतं न निजेच्छया शशिनमुज्झति राहुरसंशयम् ॥ अशित एव गलत्ययमत्ययं सखि विना गलनालबिलाध्वना ॥ ६५ ॥

वदनेति । हे सखि राहुर्वदनस्य गर्भमध्यं गतम् शशिनमसंशयं निःसंदेहं निजेच्छया स्वाभिलाषमात्रेण नोज्झति । किंतु राहुणा अशित एवायं चन्द्रोऽत्ययं विनाशं विना गलनालबिलाध्वना कण्ठकन्दलविवरमार्गेण गलति निःसरति । जठराग्नेरभावादमृतरूपत्वाद्वा नाशाभावः ॥ ६५ ॥

ऋजुदृशः कथयंति पुराविदो मधुभिदं किल राहुशिरश्छिदम् ॥ विरहिमूर्द्धभिदं निगदंति न क्व नु शशी यदि तज्जठरानलः ॥ ६६ ॥

ऋजुदृश इति । ऋजुदृशो यथादृष्टार्थग्राहिणः पुराविद ऐतिहासिका मधुभिदं श्रीकृष्णं राहुशिरश्छिदं कथयन्ति । किलेति श्रुतौ । विरहिमूर्द्धभिदं विरहिशिरश्छेदकं न निगदन्ति । एतदयुक्तं परंतीक्ष्णप्रज्ञत्वाभावादन्यथा वदन्ति । कुत्रास्य संबन्धे अस्ति तस्य राहोर्जठरानलो जठराग्निः स्यात् तदा शशी चन्द्रः क्वाऽपि तु न कुतोऽपि राहोः शिरश्छेदेन धक्षितश्चन्द्रो जठराग्निं विना गलति ततश्चन्द्रस्य विद्यमानत्वाद्विरहिणामपकारित्वाच्च विचार्यमाणे विष्णुरेव विरहिमूर्द्धभिदित्याशयः ॥ ६६ ॥

स्मरसखीरुचिभिः स्मरवैरिणा मखमृगस्य यथा दलितं शिरः ॥ सपदि संदधतुर्भिषजौ दिवः सखि तथा तमसोपि करोतु कः ॥ ६७ ॥

स्मरेति । हेसखिरुचिभिः स्मरसखीकामसदृशीदिव्यो भिषजौ स्वर्वैद्यौ दस्त्रौ स्मरवैरिणाशिवेनदलितं खण्डितंमखमृगस्यशिरो यथासपदि तत्क्षणमेवसन्दधतुर्घटयामासतुः । तथातमसोपिराहोरपिकःकरोतु । एतत्सूचः कोपिनास्तिमदनारिणायत्कार्यकृतंतन्मदनमित्रेणमदनेनवामो चीकर्तव्यम् । ततःस्मरमित्रत्वाद्विपक्षाच्चकामारिणाच्छिन्नं मृगशिरस्तौ भ्यांकबन्धेनमिलितं तथाविरहवैरिणाविष्णुनाच्छिन्नं राहुशिरः कःसंघटय तुविरहिमित्रस्याभावादितिभावः । तात्कालिकसंधानदृढंभवति इतिसप दीत्युक्तम् । तमस्तुराहुःस्वर्भानुरित्यमरः ॥ ६७ ॥

नलविमस्तकितस्तरणेरिपोर्मिलतिकिंनकबन्धगलेनवा ॥ मृतिभियाभृशमुत्पततस्तमोग्रहशिरस्तदसृक्दृढबंधनम् ॥ ६८ ॥

नलेति । वाऽथवा रयोमृतिभियामारणाद्भयेनदिवमाकाशं भृशमतित रामुत्पततश्चन्द्रच्छत आकाशएवनलेनविमस्तकितस्यच्छिन्नमूर्ध्नोरिपोर्नलश त्रोः कबन्धगलेनापमूर्द्धकलेवरकण्ठेन सहतमोग्रहशिरोराहुशिरस्तस्यकब न्धगलस्यासृग्रक्तंतेनरक्तेनदृढंबन्धनंयस्यएवंभूतंसत्किंनमिलति । मिलने हिवदनमध्यगतेचन्द्रेराहुजठराग्नौजीर्णे अतितरांपीडाभविष्यतीति भा वः । आकाशेस्थितस्यराहुशिरःकबन्धगलेनसहसंबन्धार्थंभृशमुत्पततइ त्युक्तम् । दृढबन्धनमितिक्रियाविशेषणंवा । मृतिभियेतिपाठेमरणभय भियेत्यर्थः ॥ ६८ ॥

सखि जरां परिपृच्छ तमःशिरः सममसौदधता पिकबंधताम् ॥ मगधराजवपुर्दलयुग्मवत्किमिति नव्यतिसीव्यति केतुना ॥ ६९ ॥

सखीति । हेसखित्वंजरांराक्षसींपरिपृच्छ असौजराकबन्धनामपमू र्द्धकलेवरत्वंदधताकेतुनासमंतमःशिरोपिराहुशिरोपिमगधराजस्यजरासन्ध

मक्तालिकयापालकस्तूपर्यायाः किं कंरागशमिमीनमृगीध्याजाद क्षितं विक्रितोना भ्रमगः किन्तु पालकलेशस्य स्मारि कन्योपेराधीकेनापिचिहूनेन चिह्न्यते स्वतएवैषतन्मनुलेनालिन्यमभिवर्त् । आगसेतिपाठेप्यापराधयोरागहत्य मरः ॥ ७३ ॥

इति विधोर्विविधोक्तिविगर्हणं व्यवसितस्य वृ
थेति विमृश्य सा । अतितरां दधती विरहज्व
रं हृदयभाजमुपालभत स्मरम् ॥ ७४ ॥

इतीति ॥ सेतिविमृश्यविचार्यअतितरामत्यर्थं विरहज्वरं कामपीडां दधतीसतीहृदयभाजमतिसन्निहितंस्मरमुपालभत निनिन्द । इतिकिंव्यव सितस्यहूद्वस्यविधोरितिविविधाभिः पर्वोक्ताभिरुक्तिभिः विगर्हणं निन्दनंवृथा ॥ ७४ ॥

हृदयमाश्रयसे यदि मामकं ज्वलयसीत्थमनङ्ग
तदेव किम् । स्वयमपि क्षणदग्धनिजेन्धनः
क्व भविताऽसि हताश हुताशवत् ॥ ७५ ॥

हृदयमिति ॥ हे अनङ्ग कामममामकंमदीयंहृदयंयद्याश्रयसि आश्रित्यव सेवे तदाश्रयभूतं हृदयमेवेत्यसनिर्वाप्यकिंकिमिति ज्वलयसिदहसि कि मितिमदाश्रामित्यत आह । क्षणमात्रेणदग्धंनिजेन्धनं हृदयंस्वाश्रयेनैवं विधः सन्तएवाश्रयाभावात् हेतोर्हताशनष्टाभिलाषहुताशवद्वह्निवत्त्वम पिआत्मनापि क्व भवितासि । कुत्रस्थास्यसि । हताश्रयनाशिभक्षयसि अत्यन्तदुर्विनीतस्त्वमित्यर्थः । आश्रयसेइत्यात्मनेपदेनतदेवप्रयोजनमेदा श्रयेणसिध्यतीतिसूच्यते । मामकंतवकमेकत्यर्थिामनेक्रादेशः ॥ ७५ ॥

पुरभिदा गमितस्त्वमदृश्यतां त्रिनयनत्वपरिस्फु
रितशङ्कया ॥ स्मर निरीक्ष्यत कस्य च नापन्न त्व
यि किमक्षिगते नयनैस्त्रिभिः ॥ ७६ ॥

पुरेति ॥ पुरभिदात्रिपुरान्तकेन त्रिनयनत्वस्य परिस्फुरितिव्याप्तिस्त स्याःसकाशात् शङ्कयासर्वोपिजनस्त्रिनयनोमाभूदितिभयेनत्वमदृश्यताम मत्यक्षत्वंगमितःप्रापितोसि । मयिप्रत्यक्षीत्रिनेत्रत्वस्यातिव्याप्तिः कथमि

रतीति ॥ हे अनात्मपर अात्मानं स्वं परं अारं त्वं नजानातीत्यनात्मपरज्ञस्तस्संबुद्धिस्त्वं रतिवियुक्तां मामिव रतिवियुक्तं स्वमप्यात्मानमपि किमिति तापितवान् दग्धवानसि । अात्मनः प्रतिकूलं कथं पिनाचरेति किं तु शत्रोरेवत्वं तु जयोरित्यनात्मपरज्ञोभवसीत्यर्थः । एवं कुतोज्ञातमित्यत आह । इतरयास्त्वयाअात्मन्यतापितेसति अतापद्भुतःसन्तापरहितस्य स वसङ्गमात्स्वम्बन्धात्स्वहृदयंकथंकस्माद्धेतोस्तप्यते दह्यते । परापकारार्थमात्मानमपिसन्तापितवानेवंविधःपरापकारकस्त्वमित्यर्थः । संसर्गजा दोषगुणा भवन्तीतिस्वतासंसम्बन्धात्सन्तप्तस्त्वंयुक्तं । दह्यतइति कर्मकर्त्तरियक् ॥ ७८ ॥

अनुममार न मार कथं नु सा रतिरतिप्रथिता
पि पतिव्रता । इयदनाथवधूवधपातकी दयित
यापितयासि किमुज्झितः ॥ ७९ ॥

अन्विति ॥ नु प्रश्ने नानायांसम्बोधनेवा हेमारकाम सारतिःपतिव्रता पतिव्रतात्वेनअतिप्रथिताऽतिविख्यातापि रतिस्तवप्रियामृतंत्वामनुकथं नममारपतिव्रतयानुमरणंकर्त्तव्यमितिधर्मः । मृतेम्रियेतयापत्याविन्युक्तेः । नकृतंचेत्तर्हिदंकारणंतयादयितयापितयाइयतीनांबह्वीनामनाथानांरक्षितुरहितानां वियोगिनीनांवधूनां वधेनपातकीत्वमुज्झितोसि किम् अायुर्हि संमतोस्त्योहिमहापातकदूषितइति वचनात् । अतएवानुमरणं नकृतमित्यर्थः । ममारम्रियतेलुङ्लिङोश्चेतिनियमाद्वृकारादेः ॥ ७९ ॥

सुगत एव विजित्य जितेन्द्रिय स्त्वदुरुकीर्त्ति
तनुंमदनाशयत् ॥ तवतनुमवशिष्टवतीततः स
मितिभूतमयीमहरद्धरः ॥ ८० ॥

सुगतइति ॥ सुगतएवबुद्धएवत्वांविजित्यपराजित्य तवोरुमहतीकीर्त्तिरेवतनुःशरीरमनाशयत् नाशितवान् । यतोयस्मात् जितेन्द्रियोमत्संमारबलंयेनेत्यादिवचनात् ततोनन्तरंजितेन्द्रियोहरोऽवशिष्टवर्ती भूतमयीं पञ्चमहाभूतनिर्मितां तवतनुंशरीरं समितिसंग्रामेऽहरद्ददाहेत्यर्थः । कीर्त्तिरूपंशरीरंसुगतश्चेन्नानाशयिष्यत् तर्हि सर्वेहर्त्ताहरोहर्त्तुं नाशक्ष्यत् स्मात्सर्वेषांवध्य इत्यर्थः । अापच भूतमयीमितिनिन्दावाक्यम् ॥ ८० ॥

फलमलभ्यत यत्कुसुमैस्त्वया विषमनेत्रमनङ्ग निगृह्णता ॥ अहहनीतिरवाप्रभयाततो न कुसुमैरपि विग्रहमिच्छति ॥ ८१ ॥

फलमिति ॥ हेअनङ्गकुसुमैर्विषमनेत्रनिगृह्णतात्त्वयायत्फलमलभ्यंततः फलाद्वाप्तभयाप्राप्तभयानीतिः कुसुमैरपिविग्रहंयुद्धंनेच्छति । पुष्पैरपिनयोद्धव्यं किंपुनर्निशितैःशरैरितिनीतिः । अनङ्गेतिनिन्दाविरोधस्तु अङ्गसहितेनक्रियनेत्वंपुनः स्वयमनङ्गोविषमनेत्रोनेतानायकस्तेन दुःसहेनविरोधंकृतवतस्तवमहन्मौर्ख्यमित्यर्थः । नेत्रोनेतरिभिद्यतेइतिविश्वः ८१

अपि धयन्नितरामरवत्सुधां त्रिनयनात्कथमापिथतांदशाम् ॥ भणरतेरधरस्यरसादरादमृतमाप्तघृणः खलु नापिवः ॥ ८२ ॥

अपीति ॥ इतरामरवदिन्द्रादिवत्सुधामृतंधयन्पिबन्नपित्वंत्रिनयनात्सकाशात्तांभस्मसाद्भावरूपांदशांकेनप्रकारेण कथमाप्तवानसि । अमृतपानेनेन्द्रादिवत्त्वमप्यमरः कथनाभूदित्यर्थः । रतेरधरस्याधरोष्ठस्यरसेस्वादेआदरादतिरागासक्तेर्हेतो रमृतसद्भ्याधुर्याभावादासासघृणाजुगुप्सायेनैवंभूतः सन्खलुप्रायेणामृतंनापिबोनपीतवानसीतिमन्यामहेइतिवाक्यार्थः । कर्मखलुसंभावनायां याच्ञोऽप्तमाघृयलम्यटेनत्वयामारकत्वयामृतंनपीतं तेनेदृशीदशानङ्गत्वरूपाआपिथप्राप्ता । आपिथेति । थलिकादिनियमादिट् ॥ ८२ ॥

भुवनमोहनजेन किमेनसा तव परेतवभूव पिशाचता । यदधुना विरहादिमलीमसामभिभवन्भ्रमसि स्मरमद्विधाम् ॥ ८३ ॥

भुवनेति । हे परेतप्राप्तमरण स्मरभुवनमोहनाज्जातेनेनसापातकेनतवपिशाचताबभूवकिंव देत्यर्थः । यद्यस्मादधुनाविरहाधिनावियोगपीडयामलीमसांमलिनांमाहृशींमादृशींस्त्रियमभिभवन्पीडयन् भ्रमसि । अन्योपिपरेतःपातकवशात्पिशाचःसन्बालकादीन्पीडयन्भ्राम्यतीति त्रिभुवनापकारी त्वादृशःकोपिनास्तीत्यर्थः । भ्रमसिव भ्राशेतिश्यन्विकल्पाच्छप् ॥ ८३ ॥

बत ददासि नमृत्युमपि स्मर स्खलतितेकृपया न धनुःकरात् ॥ अथ मृतोसि मृते न च मुच्यते न किलमुष्टिरुरीकृतबन्धनः ॥ ८४ ॥

बतेति । हेस्मरत्वंहितंनकरोषिपरंमृत्युमपिनददासिबतकष्टंमरणेस तिपीडानानुभूयेतेत्यर्थः । कृपयाहेतुनातेकराद्धनुरपिनस्खलतिपतति । कृपयापतितुयुक्तं बतकष्टम् । कृपयामृत्युंनददासिचेद्धनुःकिमितिनत्यज सीत्यर्थः ।-जीवतएवकरात्कृपयाधनुःपतति त्वं तुमृतःसन्कथंपतेत कृपा या अभावात् ।अकृपयेतिवा । धनुः पतनाभावेकारणमाह । अथत्वं मृतो सिखलुमृतेननिश्चितमुररीकृतमङ्गीकृतबन्धनंयेनैवंविधोमुष्टिर्नमुच्यतेऽतः कराद्धनुर्नभ्रमयति । मुष्टिरुभयलिङ्गः । बन्धूरंबन्धुरंचस्यादूरिकृतमुरीकृ तमित्यनेकार्थध्वनिमञ्जरी ॥ ८४ ॥

दृगुपहत्यपमृत्युविरूपताः शमयते ऽपरनिर्जरसेविता ॥ अतिशयोऽध्यवपुःक्षतिपाण्डुताःस्मरभवन्तिभवन्तमुपासितुः ॥ ८५ ॥

दृगिति । हेस्मरअपरेत्वदन्येयेनिर्जरादेवाः सूर्यादयस्तेषांसेवितापुरु षः सेवकोदृगुपहतिर्नेत्रयोरान्ध्यअपमृत्युरकालमरणविरूपताकुष्ठादिनावै रूप्यंप्रशमयतेशान्तिंनयति।भवन्तंकामदेवमुपासितु.सेवितुरतिशयेनान्ध्यं प्रतिपत्तिराहित्यंनेत्रराहित्यंच वपुःक्षतिःशरीरकार्श्यमकालमृत्युश्चवपुषः पाण्डुताविरहजनितपाण्डुरोगश्चएतेभवन्ति । सूर्यादिभक्त्याऽन्यसर्वरोगो पशमनेसामर्थ्यंभवति वियोगोपशान्तौतवसामर्थ्यंनास्तित्वद्भक्तस्यमास्त्य त्रकिंवाच्यमेवंविधस्त्वंदेवइत्युपहासः । अपरनिर्जरान्सेवतेतच्छीलस्तस्य भावस्तत्तासाकर्त्री.अन्यदेवसेवनमितिवा । अपमृत्युश्चविरूपताचेतिपूर्वंद्व न्द्व कार्यस्ततः पूर्वेण । शमयतेणिचश्चेतितङ् । अमन्तत्वान्मित्वे ह्रस्वः । सेवितातृच् । अपरनिर्जरसेवितेति छ्वतरत्वबोधिकेतिवत्समासः । द्वि तीयपक्षेताच्छील्ये णिनिस्तस्माद्भावप्रत्ययः । अतिशयपदस्यप्रत्येकंसंब न्धः । क्षयश्चपाण्डुताचक्षयपाण्डुतेइति षष्ठीसमासंकृत्वापूर्वेणसमासः । अन्यथापाण्डुताशब्दस्यपूर्वनिपातःस्यात् । उपासितुरितितृजन्तयोगाद्ध

वन्तमितिद्वितीया ॥ ७५ ॥

स्मर नृशंसतमस्त्वमतोविधिः सुमनसः कृत
वान् भवदायुधम् ॥ यदि धनुर्दृढमाशुग माय
सं तव सृजेत्प्रलयं त्रिजगद्व्रजेत् ॥ ८६ ॥

स्मरेति । हेस्मरत्वंनृशंसतमः अतिशयेनहिंस्रोऽतःकारणाद्विधिः सुमनसःपुष्पाणिभवदायुधंकृतवान् । ब्रह्मायदितवधनुःदृढंकठिनमाशुगंबाणमयलोहमयंचेत् सृजेत्तर्हित्रिजगत्प्रलयंव्रजेद् । अथचतवदुष्टमनस्त्वाद्भवदायुधस्यसुमनस्त्वंकृतंविधिना । नृशंसोघातुकःक्रूरइत्यमरः । हिंसार्थाच्छंसेः कर्मण्यण् । आयसंविकारेरजतादित्वादञ् । त्रयाणांजगतांसमाहारइति द्विगौएकवचनेनपुंसकत्वेचत्रिजगदितिसाधुः ॥ ८६ ॥

स्मररिपोरिवरोपशिखी पुरं दहतु तेजगतामपि
मात्रयम् ॥ इति विधिस्त्वदिषून् कुसुमादि किं
मधुभिरन्तरसिञ्चदनिर्वृतः ॥ ८७ ॥

स्मररिपोरिति । हेस्मरतेतवापिरोपशिखीबाणाग्निर्जगतांत्रयंमादहतु । मादाक्षीदितिहेतोरनिर्वृतः शंकितःसन्शङ्कितोविधिः कुसुमानिइषून्मधुभिर्मकरन्दैरन्तमध्येऽसिञ्चत् सिक्तवान्किम् । कःकमिव स्मररिपोर्हरस्यरोपशिखीपुरत्रयमिवयथापुरत्रयंददाह तथातवाप्मीतिसिक्तस्यपुरदाहसमर्थंनभवतीतिभावः । मादहत्वितिनिषेधार्थवाचिभिरनुबन्धकमाशद्योगेलोट् ॥ ८७ ॥

विधिरनंशमभेद्यमवेक्ष्यते जनमनः खलु लक्ष्य
मकल्पयत् ॥ अपि स्ववज्रमदास्यत चेत्तदा त्व
दिषुभिर्व्यदलिष्यदसावपि ॥ ८८ ॥

विधिरिति । विधिरणुपरिमाणत्वान्निरंशं निरवयवमतएवाभेद्यंभेत्तुमशक्यंजनमनोवेत्यखलुनिश्चितं तेलक्ष्यंलवेध्यमकल्पयत् । अपिः संभावनायांसब्रह्मावज्रमपीन्द्रायुधंहीरकंचेददास्यत अकल्पयिष्यत् । तदाऽसावपिवज्रोपित्वदिषुभिस्त्वद्बाणैर्व्यदलिष्यद्विदीर्णोऽभविष्यदितिसंभाव्यते । त्वादृशोहिंस्रःकोपिनेत्यर्थः । क्रियातिपत्तौलृङ् । वज्रोऽस्त्रीहीरकेपवावित्यमरः ॥ ८८ ॥

अपि विधिः कुसुमानि तवाशुगान्स्मरविधाय न निर्वृतिमाप्तवान्॥ अदित पञ्च हि ते स नियम्य तांस्तदपि तैर्व्यत जर्जरितं जगत्॥ ८९ ॥

अपीति । हे स्मर विधिः कुसुमानि तवाशुगान्विधायापि निर्वृत्तिं सुखं नाप्तवान् । अतः स त्वत्स्मातान् कुसुमरूपान्बाणान्नियम्यगणयित्वा पञ्चहि पञ्चैवते तुभ्यमदित नत्वधिकान्स्तदपि तथापि पञ्चसंख्याकैर्बाणैर्जगत्त्रिलोकीजर्जरितंखण्डितंतवकष्टमतिहिंस्रो ऽसीतिभावः ॥ ८९ ॥

उपहरन्ति न कस्य सुपर्वणः सुमनसः कति पञ्चसुरद्रुमाः । तव तु हीनतया पृथगेकिकां धिगियतापि न ते ह्रुविगर्हणा ॥ ९० ॥

उपेति । हे कामपञ्चसंख्याकाःसुरद्रुमाःमन्दारादयः कस्यसुपर्वणोदेवमात्रस्यविशिष्टस्यसुतरांकतिसुमनसः पुष्पाणिनउपहरन्तिउपायनानिकुर्वन्ति असंख्याताः सुमनसःप्रयच्छन्ति देवस्यापितवतुपुनर्हीनतयानिकृष्टत्वेनावज्ञया पृथक्प्रत्येकमेकिकामेकंपुष्पंप्रयच्छन्ति । अतएवपञ्चबाणत्वमकृतंसोपहाससामान्त्रयो इयतापिधिक्कारेणतेविगर्हणाह्रुज्जानअतएवधिङ्गमित्यर्थः । निर्लज्जोसिन्ध्रुवस्त्वमित्यर्थः । अह्रुविदारणमितिपाठेहृदयस्फोटोनभवतीत्यर्थः । सुमनसःशब्दस्यस्त्रीलिङ्गबहुवचनान्तत्वेपि व्यक्तेरेकत्वदेकिकामित्येकवचनम् ॥ ९० ॥

कुसुममप्यतिदुर्णयकारि ते किमु वितीर्य धनुर्विधिरग्रहीत्॥ किमकृतैष तवैकतदास्पदे द्वयमभूदधुना हि नलभ्रुवौ ॥ ९१ ॥

कुसुममिति । विधिःकुसुमरूपं धनुस्तेतुभ्यंवितीर्यदत्वापुनरग्रहीद्गृहीतवान्किमु । यतोदुर्नयकारित्रिजगज्जयकारित्वादतिदुर्विनीतं किञ्चितिप्रश्नेसंभावनायांवास्वयमेवपुनराहृतेति धनुर्विषयविधिस्त्वयकिमकृत । अपितुकिमप्यपकारंकर्तुंसमर्थोनाभूदित्यर्थः । हियस्मादधुनाधनुष्यपहृते प्येकतदास्पदेएकंचतत्स्थएककंततत्स्यधनुषआस्पदेनलभ्रुवोर्द्वयंमासीत् । तवधनुर्द्वयलाभात्तेनतवोपकारएवकृतो नत्वपकारोविधिनापरोपका

रार्थंधनुष्टं तंपरंस्त्रीकामाग्येनविपरीतं जातमितिभावः । दुर्णयेइतिनयस गांदुसमासेपीतिणत्वं यदिस्वदुर्नयइतिपाठस्तदोपसर्ग प्रतिरूपकत्वाद्गत्वाभावः ॥ ९१ ॥

यदृतवः कृपया स्त्रकमेककं कुसुममक्रमनन्दितनन्दनाः ॥ ददति यद्भवतं कुरुते भवान्धनुरिवैकमिपूनिव पञ्चतैः ॥ १२ ॥

यदिति । अक्रमंक्रममुल्लङ्घ्यैवनन्दितंवर्धितं नन्दनमिन्द्रधामयैस्तेपडपिक्रतवःस्त्रकंस्वीयमेकमेकैकं कुसुमंपुष्पंकृपया नतुभीत्याभवद्भीत्याजयतेतुभ्यंददतिदत्तवन्तो भवान्स्तैःपड्भिः कुसुमैः कृत्वाएकंपुष्पंधनुरिवपञ्चपुष्पाणिइपूनिवकुरुते मिष्टुणात्त्वयाऋतवःपट्पुष्पाणि याचितान्तैस्त्वयाविभज्यधनुर्बाणाश्चकृताः । अनिदरिद्रेणाजितयाप्राप्तं स्वल्पमपिवस्तुविभज्यानंनैतत्कर्तव्यमनंनैतत्कर्तव्यमितिह्निमनोरथः क्रियतइतिनींकियुक्तिनूचनायंमुभयत्रापीवशब्दप्रयोगः ॥ ९२ ॥

यदतनुस्त्वमिदं जगतेहितं क्व स मुनिस्तव यः सहतेहृतः विशिखव्याप्रवणपरिपूर्य चेद्विचलद्भुजमुज्झनुमीशिषे ॥ १३ ॥

यदिति । हेस्मर यत्त्वमतनुःशरीररहितोमिदं जगतेभवंलोकायहितंशरीरत्वेतुत्वंविशिखंबाणान्श्रवणाभ्यांपरिपूर्याकृष्टंविचलद्भुजंयथास्यादेवंबाणामुज्झितुंमुक्तुमीशिष्येत्समर्थःस्या स्तर्हि यस्तवहननीयांतान् सहतेसमुनिःक्वान्वद्वाणपीडामसहोमुनिरपिनविद्यते ऽन्योनार्स्तातिकिंवाच्यं, नस्यात्तवाशरीरत्वेलोकस्यायंकरत्वं । हितयोगेचतुर्थी, मम नविधानन्नामध्यांज्जगतइतितद्योगेचतुर्थी । ईशःसेइनिडटिइंशिपेइतिरूपम् ॥ ९३ ॥

सह तया स्मरभस्म झटित्यभूःपशुपतिं प्रतियामिपुमग्रहीः ॥ध्रुवममूद्धुना वितनोः शरस्तवपिकस्वर एव स पञ्चमः ॥ १४

सहेति । हेस्मरत्वंपशुपतिंप्रतिलक्षीकृत्यतद्वधार्थंबाणमिपुमग्रहीस्तयासहझटितिभस्माभूः । जीवपालकेनशिवेनास्मदादिहितायभवाणस्त्वंदग्ध

इतिभावः । वितनोः शरीररहितस्यतवाधुनापिकस्वरएवकोकिलशब्दस्वसः पञ्चानांपूरणः शरोऽभूत् । ध्रुवमुत्प्रेक्षे । अशरीरत्वेपञ्चबाणत्वंतदस्थितमेवेत्यर्थः । पञ्चमंप्राहकोकिलइतिशब्दच्छलं हरेणदग्धेस्मरेतस्यानेपथ्यमत्स्वरएवजातः । पत्रीरोपइषुर्द्वयोरित्यमरः ॥ ८४ ॥

स्मर-समहारितैरफलीकृतो भगवतोपि भवद्दहनेऽभ्रमः ॥ सुरहिताय हुतात्मतनुः पुनर्ननु तनुर्द्वितरक्षणमापिथ ॥ १५ ॥

स्मरेति । हेस्मरत्वभगवतोपिहरस्यापि भवद्दहनेभवद्दाहेभ्रमोमहारितैनैवपातकैरफलीकृतः । विफलत्वमेवाह । ननुयस्मात्सुराणांहितायहुतात्यक्तात्मतनुः स्वशरीरंयेनैवंविधस्त्वंतत्प्रसादात्तदा तत्कालमेवदिविपुनजनुर्जन्मद्वापिथप्राप्तवानसि । नहिपापिनःस्वर्गेजन्म सवतुपरोपकारित्वात्स्वर्गेजन्म । सुरहितायचतुर्थीतदर्थइतिसमासः ॥ ८५ ॥

विरहिणोविमुखस्यविधूदये शमजदिक्पवनःसन्दक्षिणःसुमनसोनमयन्नटनोधनु स्तवतुबाहुरसौयदिदक्षिणः ॥ १६ ॥

विरहिणइति । विधूदयेचन्द्रोदयेविमुखस्यदुःखितस्यविरहिणः शमनदिक्पवनोमलयानिलोदक्षिणः सुखकारीनकिन्तुवामोवक्रएव प्रथमंविरहाद्दुःखंततश्चन्द्रोदयात्ततोमलयानिलादितिभावः । पूर्णचन्द्रस्यदुःखकारित्वाद्विमुखस्यपश्चिमाभिमुखस्य विरहिणोदक्षिणदिक्पवनो दक्षिणःसव्योपि भवतिकिंतुवामएवपश्चिमदिङ्मुखस्यदक्षिणोवामएवेत्यर्थः । मलयानिलस्यप्रसिद्धंदक्षिणत्वं कथमपलप्यतइत्याशङ्कयाह । यद्यसौमलयानिलोदक्षिणएवेत्यभिमानस्तर्हि सुमनसोधनुःपुष्पमयचापमटनोऽङ्गेनमयन्नम्रीकुर्वंस्तववाहुरेवतुरेवार्थः । यथातववाहुर्विरहिणोदुःसहस्तथामलयानिलोपिविरोधिलक्षणयां उभावपिदुःसहावित्यर्थः । मलयानिलोप्यग्रेसुमनसःपुष्पाणिनमयति नमासूतितिवानमयतेसर्वान्मारयति तद्विभवोवायुरपितथैव अथचदक्षिणःप्रहरणकुशलोधर्मयोद्धा नपराङ्मुखस्यापिहननादतोदक्षिणत्वेनसिद्धो विरहिणांशत्रुरेवेत्यर्थः ॥ ८६ ॥

किमु भवन्तमुमापतिरेकं मदमुदान्धमयोगिजनान्तकम् ॥ यदजयत्तत एव न गीयते स भगवान्मदनान्धकमृत्युजित् ॥ ९७ ॥

किम्विति । उमापतिः शिवो मदमुदां गर्वहर्षाणां धर्मयोगिजनानां वियोगिजनानामन्तकं यमतुल्यं भवन्तं मदनं यदजयत् जितवांस्तत एव हेतोः किमु स भगवान् हरो मदनान्धकमृत्युजिन्न गीयते ऽपितु तत एव कीर्त्यते । एकस्यैव जयात्मदनजिदन्धकजिन्मृत्युजिदिति नामत्रयं प्राप्तवान् मदनत्वमन्धकत्वं मृत्युत्वधर्मत्रयं त्वयि विद्यते । अन्धकासुरमृत्युमदननामत्रिरूपकारस्त्वमित्यर्थः ॥ ९७ ॥

त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ शुश्रुवे ॥ स्वमदहो दहनाज्ज्वलतात्मना ज्वलयितुं परिरभ्य जगन्ति यः ॥ ९८ ॥

त्वमिति । हे मन्मथ परापकृतौ परापकारविषये त्वमिव त्वत्सदृशः कोपि कृती कुशलो न ददृशे न दृष्टः । न च शुश्रुवे न श्रुतस्तथोऽप्यर्थः । कथमित्यत आह । यस्त्वं ज्वलतात्मना स्वरूपेण जगन्ति त्रिभुवनानि परिरभ्यालिङ्ग्य ज्वलयितुं दहनाद् हरनयनाग्नेर्हेतोः स्वमात्मानमदहोऽधाक्षीः । ज्वलतस्तव संबन्धात्त्रिभुवनं ज्वलतीत्यर्थः । परापकारार्थमात्मापि येन दग्ध एवंविधस्त्वं कुशल इत्युपहासः ॥ ९८ ॥

त्वमुचितं नयनार्चिषि शंभुना भुवनशान्तिकहोमहविष्कृतः ॥ तव वयस्यमपास्य मधुं मधुं हतवता हरिणा बत किं कृतम् ॥ ९९ ॥

त्वमिति । हे काम त्वं शंभुना नयनार्चिषि उचितं योग्यं भुवनशान्तिकहोमार्थं लोकपीडाशान्तिप्रयोजनकहोमार्थं हविर्हव्यं कृतो महामायादिपीडाशान्त्यर्थे वह्नौ होमार्थं हविर्भवति । त्वज्जनितपीडाशान्त्यर्थं त्वं नयनवह्नावनुचितं हविस्तेन प्रक्षिप्त इत्यर्थः । त्वं नयनवह्नौ हविष्कृतमेतदुचितं कृतमिति या । शं भवत्यस्मादिति शंभुपदेन सूचितम् । हरिणा विष्णुना तव वयस्यं मित्रं मधुं वसन्तमपास्य परित्यज्य मधुं मधुनामानं दैत्यं हतवता किं कृतं न किम

पीत्यर्थः । अतिपीडाकारिणं वसन्तमुपेत्य दैत्यं हतवता हरिणा किमपि नो कृतमिति भावः । बत कष्टं किं कृतं कुत्सितं कृतमिति वा । शान्तिः प्रयोजनम स्येति शान्तिकः । प्रयोजनमिति ठक् ॥ ९९ ॥

इतिविरयदूचसैवभृशंप्रियाधरपिपासुतदाननमाशु तम्॥ अजनिपांसुलमप्रियवाग्ज्वलन् मदनशोष णबाणहतेरिव ॥ १०० ॥

इतीति । प्रियस्य नलस्याधरपिपासु अधरचुंबनाभिलाषि लक्ष्मप्रसिद्धं विर हपांडु रेतस्या आननमिति पूर्वोक्तेन कियद्वचसाल्पेनैव वचनेन आशु शीघ्रं पांसुलमतितरां शुष्कं मलिनं जातं साकल्येन वक्तुं समर्थं नाभूदित्यर्थः । यच्च पिपासु तदल्पवचनेनैव शुष्ककण्ठं भवति तत्प्रेमं तत् अप्रियवाचा समिन्द्वच नेन ज्वलन् क्रुद्धो मदनस्तस्य शोषणबाणेन शोषणाख्येन शरेण या हतिर्हननं तत आदिव शोषणबाणहतं सच्छुष्कं जातमित्यर्थः । अधरपिपासु प्रभृतीनां गम्यादियोगात्समास इति वामनाचार्यवचनाद्द्वितीया समासः । पांसुशब्दः सिध्मादिः ॥ १०० ॥

प्रियसखीनिवहेनसहाद्धया व्यरचयद्गिरमर्धसमस्य या ॥ हृदयमर्मणिमन्मथसायकैः क्षततमा बहुभा षितुमक्षमा ॥ १०१ ॥

वक्रोक्तिं जल्प्यातां व्यञ्जयितुमुपक्रामति । प्रियेति । अथानन्तरं सा भै मी प्रियसखीनिवहेन स्वरहस्यवादि स्निग्धस्त्रीयसमूहेन सहाधेया सखीभा षितसमस्यया प्रत्युत्तररूपेण उत्तरार्द्धपरिपूरणेन गिरं व्यरचयत् । अर्द्धं सख्यः पूर्वमूचुः । अनन्तरं भैम्युवाचेत्यर्थः । एवं किमित्युवाचेत्यत आह । किंभू ता सा हृदयमर्मणि हृदयलक्षणमर्मस्थाने मन्मथसायकैः क्षततमातितरां वि द्धा अत एव बहु भाषितुमक्षमाऽसमर्था । समस्या तु समासार्थेत्यमरः । अपू र्णत्वाद्भिन्नं समस्यते नयेति समस्या बाहुलकात् संज्ञायां समजेति क्यप् १०१ ॥

अकरुणादवसूनशरादसून् सहजया पद्दिधीरतया त्मनः । असव एव ममाद्यविरोधिनः कथमरीन्सखि रक्षितुमात्यमाम् ॥ १०२ ॥

अकरुणादिति । हे भैमि त्वमकरुणा निर्दयात् सूनशरात्कामात्सकाशा दापदि सहजया स्वाभाविकया धीरतया धैर्येणात्मनो सूनवरक्ष विपदि धैर्यं वचनादिति सखीवचनम् । हे सखि समाद्य असवः एव प्राणा एव विरोधिनो वैरिणस्त्वमरीन् रक्षितु कथं समात्यन्नु वैरिणोरक्षणीयाइति । उदासीनोप दिशति किंपुनर्मित्रमिति जैमीवचः प्राणेषुगतेषु मम सुखं स्यादित्यर्थः । सून शराद्भीत्रे त्यपादानत्वम् ॥ १०२ ॥

हितागिरंनशृणोषिकिमाश्रवे प्रसभमप्यवजीवित मात्मनः ॥ सखिहितायदिमे भवसीदृशी मदरि मिच्छसियाममजीवितम् ॥ १०३ ॥

हितेति । हे सखि आश्रवे सर्वदा असद्वचनकारिणि हितां मां नादृशीमां हितांगिरंकिन्नशृणोषि । अपितु आकर्णय । यद्यप्यसिपीडा भवति । त थापि आत्मानं सर्वथा गोपायेदिति श्रुतेः । प्रसभबलात्कारेणापि धैर्यमवलं ब्यात्मनो जीवितं अवेति अन्यसखीवचः । हे सखि यात्वं मदरिमच्छत्रुभूत ममजीवितमिच्छसि ईदृशीयादृता हितामे जवसि किं हितानभवस्येवस खीत्वादेतादृशं वक्तुमनुचितमितिभावः । भेषतुर्थी हितशब्दप्रयोगइति वा ॥ १०३ ॥

अमृतदीधितिरेषविदर्भजे भजसितापममुष्यकि मंशुभिः । यदिभवन्तिमृताः सखि चण्डिकाः श शभृतः क्वतदापरितप्यते ॥ १०४ ॥

अमृतेति । हे विदर्भजे एषपुरोवर्ती अमृतदीधितिरमुष्यांशुभिः सुधा मयैः किरणैस्तापदाहं किं भजसि । इत्यन्यसखीवचः । छलेनोत्तरमाह हे सखि शशभृतः कलङ्किनश्चन्द्रिकाः यदि मृता भवन्ति कस्मपक्षवस्तदा कुतो हे तोः परितप्यते संतप्यते कारणान्तराभावात्संतापो न भवेदिति जैमीवचः । १०४

व्रजेति । हे जैमी त्वं धृतिधैर्यं अजा अङ्गीकुरु । सूर्यं नुद्यानिन्द्यामहेतुकाम कारणिकां भीतिं त्यज । अयमचं हे मरीचिश्चन्द्र उदुच्चति उदेतीति सखीव चः । उत्तरं हे सखि अयमातपससुरैरुष्णाकपकरीपाग्निकणैः स्फुटमां ज्वल यति । त्वं वचसानुभवस्तुम्यासि । वचनादनुभवो बलीयानित्यर्थः । मुर्मुर स्तुषवह्नौस्यादितिविश्वः ॥ १०५ ॥

व्रजधृतिं त्यज भीतिमहेतुकामयमचण्डमरीचिरुदञ्चति ॥ ज्वलयति स्फुटमातपमुर्मुरैरनुभवं वचसा सखि लुम्पसि ॥ १०५ ॥

अयि शपे हृदयाय तवैव तद्यदि विधोर्न रुचेरसि गोचरः । रुचिफलं सखि दृश्यत एव तज्ज्वलयति त्वचमुल्ललयत्यसून् ॥ १०६ ॥

अयीति । अयि जैमि यदि त्वं विधोश्चन्द्रस्य रुचेर्दीप्तेर्गोचरो विषयो न असि तर्हि तवैव हृदयाय शपे त्वद्धृदयं शपामि ॥ चन्द्र एवायं न तु सूर्य इति शपथः क्रियते । अपीति पाठे सत्यप्यर्थे तव विश्वासार्थं शपेशपथमपि करोमीत्यर्थः । कलेनोत्तरमाह । हे सखि रुचेः फलं दृश्यत एव त्वचं चलयति । असून् उल्ललयति उन्मूलयति त्वया सत्यमुक्तं रुचिफलं शरीरज्वलनं प्राणोन्मूलनं च उष्ण स्पर्शात्तेजसः स्वभाव इति भावः । शपेः शपथ उपालम्भ इति वक्तव्यात् हृद्यो गेस्राघहृङ्किति चतुर्थी ॥ १०६ ॥

विधुविरोधितिथेरभिधायिनीं मपि न किं पुनरिच्छसि कोकिलम् ॥ सखि किमर्थगवेषणया गिरं किरति सेयमनर्थमयीमपि ॥ १०७ ॥

विधोरिति । विधुविरोधितिथेश्चन्द्रशत्रुतिथेरमावास्याया अभिधायिनी मपि कुहूशब्दं कुर्वतीमपि कोकिलां पुनः किमिति नेच्छसि । अपि तु चन्द्रशत्रुत्वात्माननीयेयम् । उत्तरं हे सखि कुहूशब्देनामावास्यायातामाह्वयते इत्यर्थगवेषणयार्थविचारणया किमलयस्मात्सेयं कोकिला समपि मद्विषये ऽनर्थमयीममावास्यालक्षणार्थशून्यामथ दुःसहा दुःखप्रचुरां गिरं किरति वदति शब्दमात्रमेतत् न तु तामाह्वयतीति विज्ञेयमिति भावः ॥ १०७ ॥

हृदय एव तवास्ति स वल्लभस्तदपि किं दमयन्ति विषीदसि ॥ हृदि परं न बहिः खलु वर्त्तते सखि यतस्तत एव विपद्यते ॥ १०८ ॥

हृदय इति । हे दमयन्ति यद्यपि स वल्लभो हृदय एवास्ति तदपि तथापि किं विषीदसि खेदं कुरुषे अपि तु खेदो न करणीय इति सखीवचः । हे सखि यतः

सहृद्येवपरंवर्त्ततेबहिःखलुनिश्चयेननवर्त्ततेततएवतस्मादेवविपद्यनेविषा
दः क्रियतइत्युत्तरम् ॥ १०८ ॥

स्फुटति हारमणौमदनोष्मणाहृदयमप्यनलङ्कृत
मद्यते॥ सखिहतास्मितदायदिहृद्यपि प्रियतमःस
ममव्यवधापितः ॥ १०९ ॥

स्फुटतीति । मदनोष्मणामदनजनितवियोगानलेनहारेविद्यमानोयो
मणिर्नायकस्तत्सहितइत्यर्थः । तस्मिन्स्फुटतिविदीर्यमाणेसति अद्यते
हृदयमपिअनलंकृतेनभूषितमलंकाररहितंजातमितिवासखीवचः । मुखा
दितुप्रागेवभूषारहितंजातमित्यपिशब्दार्थः । हेसखियदिसममप्रियतमो
हृद्यपिव्यवधापितोऽन्तर्धापितस्तर्हिहतास्मि । अनलंनलरहितंहृदयंक
तमितित्वयोक्तः । हृदयादप्यपाकृतः प्रेयानितिच्छलेनभैमीवचः । दृधा
तेर्णावर्तीत्यादिनापुकिव्यवधापितः । निष्ठायांसेटीतिणिलोपः १०९॥

इदमुदीयंतदैवमुमूर्च्छसा मनसिमूर्च्छितमन्मथपा
वका ॥ क्व सहतामवलंबलवच्छिदा मनुपपत्ति
मतीमतिदुःखिता ॥ ११० ॥

मूर्छामाह । इदमिति । मनसिमूर्छितःप्राप्तवृद्धिर्मन्मथएवपावकोय
स्याः साभैमीइदंपूर्वोक्तमुदीर्योक्त्वातदैवतत्कालमेवमुमूर्छनवमीमवस्थां
प्राप । अनलंकृतमित्यत्रअलीकयानलरहितार्थप्रतीत्याकथंमूर्छांप्रापद
त्याशङ्कार्थान्तरन्यासमाह । अतिदुःखितासानुपपत्तिमतीमघटमानाम
लीकामपि अवलम्बस्यनलजस्यजीवनाधारस्ययोलवोलेशस्तस्यच्छिदा
त्रुटिस्तांक्कुतः सहतांसोढुंशक्तास्यात् । नकुतोपि । दुःखितःस्वदुःखहे
तोरलीकत्वंनविचारयति । अलीकमेवनलराहित्यंविचार्यैवमपिमूर्छां प्रा
पेतियुक्तमेवमपीतिपाठः ११० ॥

धूपितकापि मुखे सलिलैः सखी प्यधितकापि
सरोजदलैः स्तनौ । व्यधितकापि हृदि व्यजना
निलंन्यधितकापिबिसंसुतनोस्तनौ ॥ १११ ॥

धूपितेति । कापिसखीसुतनोरतिकृशायाभैम्यामुखेसलिलमधितपि

क्षिपे । कापिकाचित्सखीसरोजदलैस्तनौव्यधिताच्छादितवतीकाचित्

दिव्यजनानिलंव्यधितचकार । काचिच्चहिमंचन्दनंतनौशरीरेन्यधितनि

क्षिप्तवती । चन्दनेचहिमंविदुरितिविश्वः । विसमितिपाठः ॥ १११ ॥

उपचचार चिरं मृदुशीतलैर्जलजनालमृणालदला

दिभिः ॥ प्रियसखीनिवहः स तथाक्रमादियमवा

प यथालघुचेतनाम् ॥ ११२ ॥

उपचचारेति । सप्रियोहित सखीनिवहः मृदुभिःकोमलैःशीतलैर्हिमैश्च

जलजैःकमलैःनालैःमृणाललताभिर्विवैः जलचन्दनव्यजनानिलाद्यैरचिर

कालंक्रमात्परिपाट्याजैमीलयाउपचचार । यथेयंलघ्वीमल्पांचेतनामवा

पलघुशीघ्रम् ॥ ११२

अथ कले कलय श्वसितिस्फुटं चलतिपक्ष्मचलेप

रिभावय ।अधरकम्पनमुन्नयमेनके किमपिजल्प

तिकल्पलते शृणु ॥ ११३॥ रचय चारुमतिस्तनयो

र्वृतिं कलय केशयमसंयतमायतम् ॥ अवगृहाणतर

ङ्गिणिनेत्रयोर्भरझराविति शुश्रुविरे गिरः॥११४॥

अथेति । रचयेतियुग्मं । अथानन्तरंकन्यान्तःपुरेइतिसखीनांपर

स्परगिरावाचोवहिर्देशस्थै शुश्रुविरेआकर्णिताः । इतिकिं कलेइत्यादीनि

नैमीसखीनामानि हेकलेसखिइयजैमीस्फुटप्रकटश्वसितिजीवतीति कल

यविचारय । हेचलेसखिपक्ष्माक्षिलोमचलतिपरिभावयविचारय । पक्ष्मचल

नमाक्षीवनचिह्नम् । हेमेनकेसखिअधरकम्पनमोष्ठस्फुरणमुन्नयतर्कय । क

ल्पलतेसखिइयंकिमपि अस्पष्टंस्वल्पचजल्पतिवदतिइतिशृणु । एवंजीव

नज्ञानानन्तरहेचारुमते सखिस्तनयोर्वृतिंसावरणंरचयकुरु । तयोरे

वावृतत्वनजानाति । हेकेशिनिसखिअसंयतं अनियद्धकेशंकेशसमूहंक

लयवधान त्वंकेशकर्मजानासियतः । हेतरंगिणिसखिनेत्रयोर्भरझरौवाष्प

प्रवाहौअवगृहाणावग्रहंकुरु । तरङ्गिण्याजलचरावग्रहःसंभाव्यतइति ।

श्रमिनिरुदादिश्यइतिहट् । केशयकेशसमूहंकेशाञ्चाम्यामितियत् ॥ ११३ ॥

॥ ११४ ॥

कलकलः सतद्यालिजनाननादुदलसद्विपुलस्त्वरितैरितैः ॥ यमधिगम्य सुतालयमीयिवान्धृतदरः सविदर्भपुरंदरः ॥ ११५ ॥

कलकलइति । त्वरितैः कसेइत्यादिशीघ्रवचनैर्विपुलोमहान् कलकलः कोलाहलस्तस्याभैम्याआलीजनस्याननादुदलसत् । कुमार्याःकिंजातमितिधृतदरोजातभयःसविदर्भपुरंदरोभीमोयकोलाहलमधिगम्याऽकर्ण्य सुतालयं मीयिवान्नआगतवान् त्वरितानांबालकानामीरितैर्वचनैर्यमाकर्ण्येतिवा ॥ ११५

कन्यान्तःपुरबाधनाय यदधीकारान्नदोषा नृपं द्वौ मन्त्रिप्रवरश्च तुल्यमगदंकारश्च तावूचतुः ॥ देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं स्यादस्या नलदं विना न दलने तापस्य कोपिक्षमः ॥ ११६ ॥

कन्येति । तौद्वौतुल्यंसमकालंशब्दशक्त्यात्सामान्यं नृपंऊचतुः । कौद्वौ । मंत्रिप्रवरश्चागदकारोवैद्यश्च । तौकौययोरधीकारात्स्वास्याननियोगात्पुरुषादिभ्योरोगादि यंकन्यान्त पुरस्यबाधनायमिन्दाप्रैक्षयचकन्याया अन्तःपुरस्यमध्येबाधन पीडालःनैदोषाव्यभिचाराद्योरोगाश्च नसमर्थाभवन्तीत्यर्थः । किमूचतुस्तत्राह । हेदेवराजन्नाकर्णयत्वंशृणुसुश्रुतस्य अन्तःपुरस्यादिद्वाराविचारकस्यचरकश्चचरकस्तस्यदूतस्योक्तेनवचनेनाखिलंरहस्यजाने । किंरहस्यंनलदंविनानलनामकराजप्रदपुरुषविनाऽस्याःतापस्यसंतापस्यदलनेनाशेकोपिक्षमः शक्तोनस्यात् नभवति । इतिमन्त्रिवचोदूतसुखान्मयाश्रुतलस्या नलेऽनुरागस्तदप्राप्तिजनितोयमस्याःसंतापस्तदप्राप्तौननश्येदित्युपायरचयेत्यर्थः ॥ अस्यास्तापस्यनवज्वरस्य शमनेनलदंविनोशीरविनान्योपि क्वाथादिस्तापशमयितुंक्षमोनेति शुश्रुताख्यवैद्यकग्रन्थेनतथाचरकनाम्नश्चायुर्वेदवचनेन तत्प्रणीतवचनेनग्रन्थेन अखिलं निदानचिकित्साजाने इत्यगदंकारवचनम् । अथचकोपिवक्ष्यापिनक्षम आकस्मिकश्रवणादाकुलस्यराज्ञोन्त पुरेमन्त्रिवैद्ययोःप्रवेशोयुक्तइतिनका

पिशनीरिती । पुरपुरिशरीरेचेतिविश्वः । कन्यायाःप्रथमवयोवाचित्वेपि कन्यायाः कनीनचेतिनिर्देशान्ङीबभावः । अधिकारात्तुपसर्गस्यघञ्य मनुष्यइतिदीर्घः ॥ ११६ ॥

ताभ्यामभूद्युगपदप्यभिधीयमानं भेदव्यपाकृति मिथःप्रतिघात एव । श्रोत्रं तुतस्य पपतुर्नृपते न किंचिद्भैम्या मनिष्टजातशङ्किततयाकुलस्य ॥ ११७ ॥

ताभ्यामिति ॥ ताभ्यांमन्त्रिवैद्याभ्यांयुगपदेककालमभिधीयमानभेदस्य शब्दस्वरूपविशेषस्य अपाकृतिर्निराकरणंयत्राभिन्नरूपमेवविध मपि वचनमिथःपरस्परप्रतिघातोयत्रैवंविधंपरस्परभिन्नसेवाभूत । भैम्या मनिष्टजातशङ्कितयाअनर्थपरम्परासम्भावनयाआकुलस्य तस्य नृपतेःश्रो त्रेकर्णौतुपुनःकिञ्चिदेकस्यापि वचननपपतुःश्रुश्रवतुः । भीमोभैम्यवस्थ यातितरामाकुलोऽभूदित्यर्थः ॥ ११७ ॥

द्रुतविगमितविप्रयोगचिह्ना मपितनयां नृपतिः पदप्रणम्राम् ॥ अकलयदसमाशुगाधिमग्नां झटि तिपराशय वेदिनोहि विज्ञाः ॥ ११८ ॥

द्रुतेति ॥ नृपतेःराज्ञआगमनमाकर्ण्यद्रुतंशीघ्रं विगमितदूरीकृतं विप्र योगचिह्नं मृणालदलादियथैवंविधांपदप्रणम्रांचरणपतितांतनयामसमाशु गःकामस्तज्जनितआधिःपीडातत्रमग्नामकलयत् । चिह्नाज्ञानेकथमज्ञा तवानित्यत आह । हियस्माद्विज्ञालारोझटितिशीघ्रं परेषामाशयवेदि नोभिप्रायज्ञाज्ञवन्ति चिह्नं नविनापीत्यर्थः ॥ ११८ ॥

व्यतरदथ पिताशिषं सुतायै नताशिरसे सहसो न्नमय्यमौलिम् । दयितमभिमतं स्वयंवरे त्वं गुणमयमाप्नुहि वासरैः कियद्भिः ॥ ११९ ॥

व्यतरदिति ॥ अथ प्रणामानन्तरपिताभीमोनताशिरसेनतमूर्ध्न्यैसुतायै कन्यायैभैम्यैआदरातिशयात्सहसाशीघ्रं हस्ताभ्यां मौलिंमस्तकमुन्नमय्यो र्ध्वंकृत्वा इतिआशिषव्यतरत् । इतिकिंहेस्वयंवरेस्वयंवृणुतइतिस्वयंवरा तस्सम्बोधनं हे पुत्रि अथच स्वयंव्रियतेऽस्मिन्निति स्वयंवरोराजसमाज

स्तन्मध्ये वा त्वक्रियद्भिःस्वल्पैर्द्वित्रैरेव वासरैर्दिवसैर्गुणमयंबहुगुणमभि
मतस्त्वेप्सितंदयितवल्लभमाप्नुहिलभस्वेतित्वदिष्टएवगुणमयइत्यर्थः ११९

तदनु स तनुजा सखीरवादीत्तुहिनर्त्तुर्गत एव
हीदृशीनाम् ॥ कुसुममपि शरायते शरीरे तदुचि
तमाचरतोपचारमस्याः ॥ १२० ॥

तदन्विति ॥ तदनुआशीर्वचनानन्तरंसराजातनुजासखीरित्यवादीत् ।
इतिकिं हे सख्यस्तुहिनर्त्तौशिशिरर्त्तौगतएव गतमात्रएवयस्माद्दृदृ-
शीनांकोमलाङ्गीनांप्राप्ततारुण्यानां शरीरेकुसुममपिलग्नंसच्छरायते शर
वदाचरति पीडांकरोति । अयंचेकामबाणायते । ततस्तस्माद्भवत्योभैम्या
स्तदुचितंवसन्तसमयोचितमुपचारमाचरत कुरुतेति तुहिनर्त्तौऋत्यक
इति प्रकृतिभावः । शरायतेकर्तुःक्यङिति क्यङ् ॥ १२० ॥

कतिपयदिवसैर्वयस्यया वःस्वयमभिलष्य वरि
ष्यते वरीयान् ॥ क्रशिमशमनया तया तदामुं
चिरुचिता थमवद्विधाविधाभिः ॥ १२१ ॥

कतिपयेति ॥ हे भैमीसख्योवोयुष्माकंवयस्ययाभैम्याअभिलष्यवरीया
नतितरांश्रेष्ठोवरः स्वयमात्मनाकतिपयदिवसैर्वरिष्यते ततस्माद्भवनया
भैम्याक्रशिमानंकार्श्यंशमंनयतिप्रापयतीतिक्रशिमशमनया अथच रु-
चिः समग्रशोभाविरहात्पूर्वकालीनाभवद्विधानांभवादृशीनांविधाभिःप्र-
कारैरुपचारैरामुचितायोग्याअभिधाभिरितिपाठेवचनैरामुचिताथोग्या
इयंयथापूर्वंरुचिंप्राप्नोतितादृशमुपचारंकुरुत यद्वातादृगेनाशिक्षयतेत्यर्थः।
क्रशिमशमनयेति भैमीविशेषणंवा । अथोऽथच संशयमङ्गलारम्भयो-
रपि । अनन्तरेचकारस्यैचेति, विश्ववचनादथशब्दःकान्त्यवाची । अ-
थवाऽन्यत्रेत्यर्थे, तिरशब्दाद्धाइयसुन् । क्रशिमशमनयापदेनयतेःपचाद्य
च् ततःपूर्वेणषष्ठीसमासः ततोपिपूर्वेणशमनापदेनन्द्यादित्वाल्ल्युः १२१

एवंयद्वदता नृपेण तनया नाऽपृच्छि लज्जास्प
दं यन्मोहः स्मरभूरकल्पवपुषः पाण्डुत्वतापा
दिभिः ॥ यच्चाशीःकपटादवादि सदृशो स्यात्तत्र

या सान्त्वना तन्मत्वाऽऽलिजनो मनोऽब्धिमतनोदा

नन्दमन्दाक्षयोः ॥ १२२ ॥

एवमिति ॥ एवं पूर्वोक्तं वदता नृपेण भीमेन तया लज्जास्पदं यस्मिन्पृष्टे सति लज्जा भवति तद्विरहकारणं यद्दूना पृच्छि नपृष्टम् । लज्जास्पदेन पृष्टेति यावत् वपुषः पाण्डुत्वतापाभ्यां शरीरस्य पाण्डिमकृशिमसन्तापादिभिः स्मराद्भवतीति स्मरभूः स्मरजन्यो मोहो मूर्छा अकल्पि कल्पितः । यच्चाशीः कपटात् आशीर्वचनव्याजादभ्यवादि आश्वासनसमर्थं दयितमभिमतमित्यादि यदुक्तं तत्र सन्तापादिविषये यद्भीमसमुचिता या सान्त्वनोपचारः स्यात्सा ऽवादि आलिजनः सखिजनः तत्सर्वं मत्वा ज्ञात्वा मनोऽन्तःकरणमानन्दश्च मन्दाक्षं च लज्जा तयोरब्धिं समुद्रमतनोत् चकार शीघ्रं भैम्याः स्वयम्वरप्राप्तेरानन्दातिशयः । राज्ञो विरहपीडाजनितलज्जाधिक्यं चाभूदित्यर्थः १२२

तुर्यः स्थैर्यविचारणप्रकरणभ्रातर्ययं तन्महाकाव्ये

चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १२३ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ॥

नैषधस्य चतुर्थः सर्गः समाप्तः ॥

श्रीहर्षमिति ॥ पूर्वार्द्धं पूर्ववत् । स्थैर्यविचारणं क्षणभङ्गनिराकरणेन स्थिरत्वस्य विचारणसूचकं प्रकरणं ग्रन्थस्तस्य भ्रातरि एककर्तृकत्वात् सोदरे महाकाव्ये तुर्यश्चतुर्थः सर्गः समाप्तः ॥ स्थैर्यविचारणाख्यो ग्रन्थः श्रीहर्षेण कृतः । चतुरश्छयतौ यलोपश्चेति चलोपे तुर्य इति सिद्धम् ॥ १२३ ॥

यावदा गमयतेथनरेंद्रान्सस्वयंवरमहायमहींन्द्रः
तावदेवऋषिरिन्द्रदिदृक्षुर्नारदस्त्रिदशधामजगाम १

श्रीलक्ष्मीनृसिंहायनमः ॥ अथ व्यतरदितिश्लोकेपिचोक्तंस्वयंवरोपक्रम मुद्दिश्यतत्प्रसङ्गार्थंपञ्चमंसर्गमारभते ॥ यावदिति ॥ अथ भैमीसमाश्वासनानन्तरंसमहीन्द्रःभीमःस्वयंवरएव महोत्सवस्तदर्थं यावन्नरेन्द्रान्राज्ञ आगमयतेप्रतीक्षतेआनाययतेवा स्वयम्वरार्थमाहूतानांराज्ञांप्रतीक्षांकरोति तावदेवतस्मिन्नेवकालेइन्द्रन्दिदृक्षु द्रष्टु मिच्छुर्नारदनामाऋषिस्त्रिदशधामस्वर्लोकंजगामगतवान् कलहद्वारानराणांसमूहोनारंनरसमूहंद्यतीतिकलहप्रवर्त्तकइत्यर्थः । आगमयने । आगमायामात्मनेपदमितिवक्तव्यात्तङ्देवऋषिऋत्यकः इन्द्रदिदृक्षुः शेषेषष्ठीसमासः बहुलग्रहणाद्योगविभागाद्वा अथर्मजुगुप्सुरितिद्वितीयासमासोवा ॥ १ ॥

नात्रचित्रमनुतंप्रययौयत्पर्वतः सखलुतस्यसपक्षः
नारदस्तुजगतांगुरुरुच्चैर्विस्मयायगगनंविललंघे २

नात्रेति ॥ पर्वतएवतन्नामाऋषिःतंनारदमनुपश्चात्प्रययौअनुगतः । अत्रास्मिन्विषयेचित्रमाश्चर्यंनकुतः खलुयस्मात्सपर्वतस्तस्यनारदस्यसपक्षो मित्रभूतः यद्यपि कार्याभावस्तथापिमित्रत्वादनुगमनयुक्तमतोनाश्चर्यंतर्हि कुत्राश्चर्यमित्यतआह । उपदेष्टृत्वात्पूज्यत्वाच्चजगतांगुरुर्नारदस्तुपुनर्गगनमाकाशंलङ्घितवान्नदुच्चैरतितरांविस्मयायआश्चर्यायजातमितिशब्दार्थः । अर्थोच्यतदो सम्बन्धः जगतोविस्मयायेतिवा वीनांपक्षिणांस्मयायवेगातिशयेनाद्भुतायेतिवा गगनलङ्घनविषयेविनास्मयोगर्वस्तमपनेतुमिति वा अथच पक्षसहितस्यगमनमाश्चर्यकारिनसकलस्यापि जगतोदुर्वहोजगतःसकाशाद्भारवान् यदाकाशंलङ्घतितदितरषामाश्चर्यायभवति । गुरुत्वात्पतनंयुक्तं उर्द्ध्वगमनमयुक्तमितिभावः । पर्वतःशैलदेवर्ष्योःस्मयोगर्वे द्भुतेपिचेतिविश्वः विस्मयायतादर्थ्येचतुर्थी पक्षेक्रियार्थेतिवलघिगतौभौवादिकोऽनुदात्तेत् ॥ २ ॥

गच्छतापथिविनैवविमानंव्योमतेनमुनिना विज
गाहे ॥ साधनेहिनियमोन्यजनानांयोगिनांतुतप

साखिलसिद्धिः ॥ ३ ॥

गच्छतेति ॥ विमानंविनैवपथिगच्छतातेनमुनिनाव्योमआकाशंविजगा हेआलोडितं । हियस्मात्साधनेउपकरणेऽश्वादौ अन्यजनानांयोगिव्यति रिक्तजनानांनियमः वाहनविनागन्तुंनशक्नुवन्ति । योगिनांतपस्विनांतुपु नःतपसैवाखिलसिद्धिः समस्तकार्यसिद्धिः खिलंप्रतिबन्धस्तद्रहितासिद्धिर्वे ति । तेषागमनादिसाधनंतपएवनान्यदश्वादि एवइवार्थः विनेवपथिवि वगच्छतेतिवा । किंभूतंव्योमविमानंविगतंमानं इयत्तारहितंपरिमाणंयस्मा दितिवा ॥ ३ ॥

खंडितेन्द्रभवनाद्यभिमाना लङ्घतेस्ममुनिरेषवि मानान् ॥ अर्थितोप्यतिथितामनुमेनेनैवतत्पति भिरङ्घ्रिविनम्रैः ॥ ४ ॥

खंडितेति ॥ एषमुनिर्नारदोविमानाल्लङ्घतिस्मातिचक्राम । किम्भूतान् खण्डितइन्द्रभवनादीनामभिमानोगर्वोपत्वाहंकारोयैस्तान् इन्दुभवने तिपाठेअत्युच्चत्वादभिदीप्तत्वाच्चत्याजितचंद्रनक्षत्रादिस्थानदर्पान् इन्दुभ वनादीनाचन्द्रशालादीनावा ततोप्यूर्ध्वंगतइत्यर्थः । अथवानाहत्तवान् अङ्घ्रिविनम्रैश्चरणनिपतितैस्तत्पतिभिर्विमानस्वामिभिः आतिथ्यमङ्गीक्रि यताम्विमानमारुह्यतामित्यादिभिरर्थितोपि अतिथितांनैवानुमेनेङ्गीच कार । विलवज्जियेतिभावः । विमानोऽस्त्रीत्यमरः ॥ ४ ॥

तस्यतापनभियात्तपनःस्वंतावदेवसमकोचयदर्चिः यावदेवदिवसेनशशीवद्रागतप्यतनतन्महसैव॥५॥

तस्येति । तपन सूर्यस्तस्यनारदस्यतापनंसन्तापनं तस्माद्भियाभयेन स्वंस्वकीयंअर्चिस्तेज तावदेवप्रथममेवतावत्कालमेवतावत्परिमाणमेववा समकोचयत्संकोचितवान् । सकलेनतेजसायद्यहंतपेयंतर्हिमत्संनिधि मागतोमुनिःसंतप्तोभवेदितितस्मात्संदितितेजःसंकोचितं । परंतावत्का लमेवयावदेवयावत्कालं तन्महसैवमुनितेजसैवकृत्वातपनोद्राक्शीघ्रंस्व यनअतप्यतसतप्तोनाभूत् । केनकइव । दिवसेनदिनतेजसाकृत्वाशशी व सूर्यस्तावदेवतावत्पर्यन्तमर्चिःसमकोचयत् । यावदेवयावत्पर्यंतमेव

तन्महस्सैवसूर्यतेजसैवकृत्वानारदोनातप्यतेतिवा । शापभीत्यास्वस्यतरक तृकतापभीत्यावातावद्देवतेजः प्रकटीकृतवान् । यावतातस्यक्रोधोनोत्प द्यते संतापोवानभवति । अल्पस्यसंकोचेस्वतेजसातिस्याभिभवःस्यात् । अ धिकसंकोचेस्वस्यैवतन्महसाऽभिभवःस्यात्तेनयुक्तमेव संकोचितवानित्यर्थः सूर्यसमतेजानारदइत्यर्थः अर्थान्तरंतुसुधियाबोद्धव्यम् ॥ ५ ॥

**पर्यभूद्दिनमणिर्द्विजराजंयत्करैरहहतेनतदातम् ॥ पर्यभूत्खलुकरैर्द्विजराजः कर्मकः स्वकृतमत्रनभुङ्क्ते ॥ ६ ॥**

पर्यभूदिति । खलूत्प्रेक्षे । यद्यस्मात्कारणात् दिनमणिःसूर्यः द्विजराजं चन्द्रंकरैःकिरणैः कृत्वापर्यभूत्तेनखलुतेनैवकारणेनद्विजराजोब्राह्मणश्रेष्ठो नारदःकरैःस्वतेजोभिःकृत्वा तदातस्मिन्काले तंसूर्यं पर्यभूत्व्यजयेष्ट । अह हित्याश्चर्ये । युक्तमेतत् । अत्रलोकेस्वेनकृतंकर्मशुभाशुभात्मकंकोनभुङ्क्ते । अपिसर्वोपि अत्युत्कटैःपुण्यपापैरिहैवफलमश्नुतइतिन्यायेन । सूर्येण निरपराधेद्विजराजेपराभूतेऽन्येनद्विजराजेनक्रोधवशाद्दिवसपराभूतः । सूर्यतेजसोपितत्तेजोऽधिकमितिभावः सूर्यःस्वतेजसापूर्वंनारदंपर्यतापयत् अतोनारदःक्रुद्धःसन्स्वतेजसा सूर्यंपर्यभूदितिवा ॥ ६ ॥

**विष्टरंतटकुशालिभिरद्भिः पाद्यमर्घ्यमथकच्छरुहाभिः ॥ पद्मवृन्दमधुभिर्मधुपर्कं स्वर्गसिन्धुरदितातिथयेस्मै ॥ ७ ॥**

विष्टरमिति । अथानन्तरं स्वर्गसिन्धुर्मन्दाकिनी अतिथयेऽभ्यागताय तस्मैनारदाय तटकुशादिभिःतीरजातदर्भपंक्तिभिः विष्टरंकुशासनं अदित ददौ । तथाअद्भिरुदकैःपाद्यंपादार्थमुदकं । तथाकच्छरुहाभिःपुष्पलताभिःदूर्वादिभिःअर्घ्यं मर्घ्यार्थवस्तु तथापद्मवृंदस्यमकरंदैःकृत्वा मधुपर्कं मधुमिश्रंदध्यादि अदितेतिसर्वत्रसंबध्यते । अतिथयेविष्टरादिकंदीयते । मंदाकिनीदृष्टातुतोषेत्यर्थः पाद्यंअर्घ्यं पादार्घाभ्यांचेतियत् । मधुना पृच्यतेमिश्रीक्रियतेमधुपर्कःकर्मणिघञ् । चजोरितिकुत्वं ॥ ७ ॥

**सव्यतीत्यवियदन्तरगाधंनाकनायकनिकेतनमाप**

संप्रतीर्यभवसिन्धुमनादिंब्रह्मशर्मभरचारुयतीव ८

सम्प्रतीत्येति । सनारदोऽतर्मर्घ्यं अगाधंविशालंवियत्आकाशंव्यती त्यातिक्रम्यस्वर्गेपिक्वचित्प्रदेशेवर्त्तमानं नाकनायकस्येंद्रस्यनिकेतनंगृहं आपप्राप्तवान् । कः किमिव । यतीपरिव्राट्ब्रह्मेव । किंकृत्वा । अनादिं प्रवाहरूपपतितंभवसिन्धुंसंसारसमुद्रं सम्यगतिशयेनप्रतीर्यतीर्त्वा । किंभूतं ब्रह्मशर्मणःसुखस्यभरःसमूहस्तेनचारुसुन्दरं । आनंदंब्रह्मणोरूपमित्यादि श्रुतेः अनादीतिपाठेब्रह्मविशेषणं । यतयोयतिनश्चेत्यमरः यतंप्रयतनम स्यास्तीतियती वलोपःसुप्स्वरेतिनियमात्क्वचिद्दीर्घः ॥ ८ ॥

अर्चनाभिरुचिताभ्युत्तराभि श्चारुतंसदकृतातिथि- मिंद्रः ॥ यावदर्हकरणंकिलसाधोः प्रत्यवायधृत येनगुणाय ॥ ९ ॥

अर्चनाभिरिति । इन्द्रः उचितास्योयोग्याभ्योपिसकाशादुत्तराभिःश्रेष्ठा भिःअर्चनाभिःपूजाभिःतमतिथिंप्राघुणिकं मुनिंनारदं सदकृतपूजितवान् । अधिकपूजाकरणेकारणमाह । साधोरतिथेर्यावदर्हंयथोचितंयत्करणंआद रपूजादेःसंपादनं अतिथेर्योग्यपूजोक्ता सितावत्याःकरणंयावदर्हक रणंतद्धिप्रत्यवायधृतयेऽकरणजन्यप्रत्यवायपरिहारायैवनगुणायतदतिरि क्ताधिकफलप्राप्तयेकंचित्फलायेति नारदयोग्यपूजाभ्योप्यधिकाःपूजाः कृतवान् । कर्मभूयस्त्वात्फलभूयस्त्वमितिन्यायादधिकफलप्राप्त्यर्थमितिभा वः । दातृगृहीत्रोर्योग्यास्ताःउत्तरास्ताभिःपूजाभिःपूजितवान् । या वदर्हमितियावदवधारणमित्यव्ययीभावः आदरानादरयोःसदसतीतिग तिसंज्ञा ॥ ९ ॥

नामधेयसमतासखमद्रे रद्रिभिन्मुनिमथाद्रियत द्राक् पर्वतोपिलभतांकथमर्च्चां नद्विजःसविबुधप्र भुलंभी ॥ १० ॥

नामधेयेति । अथनारदपूजानन्तरं अद्रिभिदिंद्रःअद्रेःपर्वतस्यनामधेयेन पर्वतइति संज्ञयासमतासाम्यंतेनसखामित्रंतंमुनिंपर्वतनामानंद्राक्शीघ्रमा द्रियतपूजितवान् । अद्रिभिदःपर्वतपूजानुचितेत्याशंक्यउत्तरेणाह । स

द्विजः ब्राह्मणरूपः पर्वतोपिविबुधप्रजंइद्रंसंभीप्राप्तःसन् अर्घोपूजांकथम लभतां । अपितुतेनपूजाप्राप्तुंयुक्ता । सन्तोगृहागतशत्रुमपिपूजयन्तीति भावइतिश्लेषम् । नाममात्रेणपर्वतोनतुतत्कार्यकारी अयतुद्विज नतुवैरी पर्वतःतस्माद्युक्तमेवपूजनं । अथचपर्वतःपाषाणतुल्योमूर्खोपिब्राह्मणो विप्रत्वाद्राश्रितत्वाच्चपंडितश्रेष्ठंप्राप्तः पूजांकथंनलभतां । जातिमात्रेणापि ब्राह्मणःपंडितेनापिपूज्यः । नामधेयइति नामरूपभागादिभ्योधेयइति धेयः । समतामरूंराजाहइत्यादिनाटच् ॥ १० ॥

तद्भुजाददतिवितीर्णसपर्यान् द्युद्रुमानपिविवेद मुनींद्रः ॥ स्वःसहस्थितिसुशिक्षितयातान् दान पारमितयैववदान्यान् ॥ ११ ॥

तद्भुजादिति । परमस्यभावःपारमंदानस्यपारमंतद्विद्यतेयस्यासौदा नपारमीतस्यभावोदानपारमिता मुनींद्रोनारदः अतिशयेनवितीर्णाकृत सपर्यापूजायेनएवंभूतात्तद्भुजादिन्द्रभुजादुरो स्वःस्वर्गेयाइन्द्रेणवासहस्थि तिः तयाकृत्वासुशिक्षितयासुतरामभ्यस्ततयाएवंभूतयादानपारमितयाव दान्यान्तथाकृत्वातान्प्रसिद्धान् द्युद्रुमानपिकल्पवृक्षानपिवदान्यानेवदान शीलानेवविवेदअमन्यत । कल्पवृक्षाणांदानशूरत्वसहजंनकिन्तुतेइन्द्रभुजा च्छिक्षिताइति बदान्याजाताइतिभावः व्याख्यानातरंतुक्लिष्टत्वादुपेक्ष्यं । युवादेराकृतिगणत्वाङ्गीकारेणभावाऽणिपारमः तस्मादतइनीयस्येतिवेनि तद्धितनिमित्तेअलोपेपारमीतिसिध्यति ॥ ११ ॥

मुद्रितान्यजनसंकथनःस न्नारदंबलरिपुःसमवा दीत् ॥ आकरःस्वपरभूरिकथानांप्रायशोपिसुहृ दोःसहवासः ॥ १२ ॥

मुद्रितेति । मुद्रितनिवारितं अन्यजनेनान्यजनस्यवासंकथनंभाषणं येनै वंभूतःसन् बलस्यदैत्यस्यरिपुरिंद्रःनारदं समवादीत्सादरमवोचत् । ते नसहसंवादमकरोत् । अन्यसंभाषणनिवारणेहेतुमाह । हियत सुहृदो र्मित्रयोःसहवासःएकत्रस्थितिः प्रायश बाहुल्येनस्वसवधिपरसंबधिभ्योभू रयोवह्वः कथागोष्ठ्यस्तासामाकरःखनिः तस्मादन्यकथांत्यक्तवान् । ख निःस्त्रियामाकरःस्यादित्यमरः ॥ १२ ॥

तंकथानुकथनप्रसृतायां दूरमालपनकौतुकितायां भूभृ तांचिरमनागमहेतुं ज्ञातुमिच्छुरवदच्छुतमन्युः ॥१३॥

तमिति । शतमन्युरिन्द्रः आलपनेसंभाषणेकौतुकीतस्यभावस्तत्तातस्यां दूरमत्यर्थं कथानुकथनेनप्रसृतायांप्रवृद्धायांसत्यां तंनारदंअवदत्तुवाच । किंभूतइन्द्र. भूभृतांराज्ञांस्वर्गप्रतिचिरंदीर्घकालंअनागमनहेतुमनागमनका रणंज्ञातुमिच्छुः पुनरुक्तौकारणम् । राजानोयुद्धेपराङ्मुखाः संतोयुद्धंकृत्वा सांप्रतंकिमितिस्वर्गेनागच्छंतीतिज्ञातुमिच्छयाऽवददित्यर्थः ॥ १३ ॥

प्रागिवप्रसुवतेनृपवंशाः किंनुसंप्रतिनवीरकरीरा न् ॥ येपरप्रहरणैःपरिणामे विक्षताः क्षितितलेनि पतन्ति ॥ १४ ॥

प्रागिति । हेमुनेनृपाएववंशावेणवः वीराएवकरीरावंशांकुरास्तान् प्रा गिवपूर्वमिवसंप्रतीदानीं किंनुप्रसुवतेजनयंति किंन्विति प्रश्नेवितर्केवा । करिणःईरयतीतिकरीरास्तान्हस्तिपातनसमर्थान्वा । वीरायेतान्वाप्रश्नो ऽनागमनहेतुःकिंतर्केच यथापूर्वंजनयन्तिस्मतथेदानींनेति । येवीरकरी राःपरिणामेपूर्णताकरणेवार्द्धकेवांतकालेवा शस्त्रविद्यापरिणतौसत्यांवा परप्रहरणैःपरेषांवैरिणामन्येषांचशस्त्रैः कुठारादिभिश्चविक्षताहताः सं हिताश्चसतःक्षितितलेनिपतंतिमत्स्वतीसारादिना । करिणःईरयंतीति ह गुपधात्क द्वौवंशौकुलमस्करी । वंशांकुरेकरीरोस्त्रीतिचामरः ॥ १४ ॥

पार्थिवांहिनिजमाजिषुवीरा दूरमूर्द्ध्वगमनस्यवि रोधि गौरवाद्वपुरपास्यभजन्तेमत्कृतामतिथिगौ रवऋद्धिम् ॥ १५ ॥

वीराएवंकिमितिपृच्छ्यन्तइत्यतआह । पार्थिवमिति । वीराःपार्थिवर सोभूतंदृढशुक्रादिक्रमेणपृथिवीजन्यनिजंस्वीयंवपुराजिषुसंग्रामेषु अपास्य त्यक्त्वादिव्यदेहंप्राप्यमत्कृतांमद्रचितां अतिथिगौरवऋद्धिंअतिथिसत्कार समृद्धिंइयस्ताद्भजंतेप्राप्नुवंति । तत पृच्छ्यइत्यर्थः । किंभूतंवपु.गौरवा त्पतनहेतो.गुरुत्वाच्च दूरमतितरांमूर्द्ध्वंगमनस्यस्वर्गप्राप्ते.विरोधिप्रतिबंध कं । अन्योपिदूरगमनविरोधिगुरुतरंवस्तुत्यक्त्वाजिगमिषति । गौरवादा

दूरातिशयादतिथिगौरवग्राहिमितिवान्वयः गुरुवस्तुत्यक्त्वागुरुतरंगृह्णातितत्रापिस्वीयत्यक्त्वाऽन्यदीयंगृह्णातीतिसुतरामाश्चर्यं । गौरवग्राहिमितिग्रत्यकइतिप्रकृतिभावः ॥ १५ ॥

साभिशापमिवनातिथयस्ते मांयदद्य भगवन्नुपयन्ति ॥ तेननःश्रियमिमांबहुमन्ये स्वोदरैकभृतिकार्यकदर्याम् ॥ १६ ॥

साभिशापमिति । हेभगवन् तेवीरसदृशाःअतिथयः साभिशापमिवसकलंकमिवमांअद्यइदानींनोपयन्ति । नप्राप्नुवंति । तेनतदनागमनेनकारणेनइमांश्रियंइंद्रलक्ष्मीं बहूलितरांनमन्येनसंभावयामि । अस्याःसदातिथ्याद्यावदुपयोगोमेतावदस्याः निःप्रयोजनत्वान्ममसंतोषोन । किंभूतांश्रियं । स्वोदरस्यात्मोदरस्यैवैकाकेवलायाभृतिर्भरणसैवकार्यंप्रयोजनंयस्याः अतएवसाचासौकदर्याचकुत्सितानिंद्यामित्यर्थः । आत्मानंधर्मकार्यंचपुत्रदारांश्चपीडयेत् । लोभाद्यःपितरौभृत्यान्सकदर्यइतिस्मृतः अथमिथ्याभिशंसनं । अभिशापइत्यमरः ॥ १६ ॥

पूर्वपुण्यविभवव्ययसृष्टाः संपदोविपदएवविमृष्टाः पात्रपाणिकमलार्पणमासां तासुशान्तिकविधिर्विधिदृष्टः ॥ १७ ॥

पूर्वेति । हेसुनेपूर्वंपुराकृतंयत्पुण्यंकृच्छ्रचांद्रायणादि तस्यविभवोबाहुल्यंतस्यव्ययेनविनियोगेननाशेननेतियावत् । लब्धाःप्राप्ताःश्रीभराःलक्ष्मीविलासाः विमृष्टाविचारिताःसत्योविपदएव । बहुपुण्यनाशकारित्वादुदर्कदुःखकारित्वाच्चविपद्रूपाएव । तासुसंपद्रूपासुविपत्सुसतीषुआसांसंपदांपात्रस्यप्राणिसदृशेकमलेअर्पणंदानं शांतिकशांतिप्रयोजनकः विधिर्होमादिःविधिनावेदेनशास्त्रेणप्रत्यक्षावादृष्टः दृष्टः विपत्सुहिशांतिकंक्रियते । जलस्यदानजलस्येव पात्रेभ्योयावद्दीयतेतावत्संपदोविपदएव । दानेनपुण्यवृद्धिःसंपदांसम्यग्रूपता । पात्रेदानंविनाभक्षेणोनतुष्यतीत्यर्थः अविद्यातपसापात्रापियात्रता । यत्रवृत्तमिमेचोभेतद्धिपात्रंप्रकीर्तितमितियाज्ञवल्क्यः ॥ १७ ॥

**तद्विमृज्यमसंशयशिल्पिस्फीतमत्रविषयेसहसाघम् ॥ भूयतांभगवतःश्रुतिसारैरद्यवाग्भिरघमर्षणऋग्भिः ॥ १८ ॥**

तदिति ॥ हे मुने श्रुतिसारैःश्रवणयोःसारैःसुधाभूतैर्वेदेषुश्रेष्ठभूतैश्च भगवतोवाग्भिःवचनैः अद्येदानीमघमर्षणस्यदुःखस्यपातकस्यचमार्जनस्य संबंधिभिःऋग्भिर्भूयतां । ऋतंचसत्यंचेत्यघमर्षणऋचःपापंनाशयन्ति अघमर्षणसम्बन्धित्वःऋचः अघंमर्षयन्तिनाशयन्ति । नद्यादित्वात्स्तुः किंकृत्वा । तेनममाभिशापत्वादन्यहेतोर्वाऽत्रनागच्छत्यत्रविषयेसंशयशि ल्पिसंदेहकारिस्फीतंप्रवृद्धंअघंदुःखंपातकंच सहसाझटितिविमृज्यापनीयभूयतामितिभावे लकारः ॥ १८ ॥

**इत्युदीर्यमघवाविनयार्द्धंवर्द्धयन्नवहितत्वभरेण ॥ चक्षुषांदशशतीमनिमेषां तस्थिवान्मुनिमुखेप्रणिधाय ॥ १९ ॥**

इतीति ॥ मघवाइन्द्रःइतिपूर्वोक्तमुदीर्यउक्त्वा अवहितत्वस्यसावधानत्वस्यभरेणाधिक्येन विनयार्द्धंविनीतत्वसमृद्धिंवर्द्धयन्अधिकीकुर्वन् अनिमेषांनिमेषरहितांचक्षुषांदशशतींनेत्रसहस्रंमुनिमुखे प्रणिधायसंस्थाप्य तस्थिवान् । तूष्णींस्थितः अमरत्वात्सावधानत्वाच्चनिर्निमेषत्वं ॥ १९ ॥

**वीक्ष्यतस्यविनयेपरिपाकं पाकशासनपदंस्पृशतोपि ॥ नारदःप्रमदगद्गदयोक्त्याविस्मितःस्मितपुरःसरमूचे ॥ २० ॥**

वीक्ष्येति ॥ नारदःप्रमदेनहर्षेणगद्गदयाऽस्पष्टयाउक्त्यावाचाकृत्वा स्मितपुरःसरंऊचे । महानुभावाःस्मितपूर्वभाषिणोहि । किंभूतः पाकशासनपदंस्पृशतोऽधिष्ठितोपि तस्येन्द्रस्यविनयेपरिपाकंप्रकर्षंवीक्ष्यविस्मितःआश्चर्ययुक्तः अतिसमृद्धस्य विनीतत्वंदुर्लभं । इन्द्रे तुविद्यतइत्याश्चर्यम् अविनीतंदृष्ट्वाइन्द्रपदेस्थितइतिलोकोक्तियुक्तिः आख्यदितिपाठेअस्य सीत्यङ् ॥ २० ॥

भिक्षिताशतमखीसुकृतंयत्तत्परिश्रमविदः स्वविभूतौ ॥ तत्फलेयदिपरंतवहेलाक्लेशलब्धमधिकाद्रदंतु ॥ २१ ॥

भिक्षितेति ॥ हे इन्द्रत्वयाशतमखीसुकृतंपुण्यंभिक्षितायाचितयाध्वर्यत्वाद्धृत्विक्मनेकःयागशतंकृत्वायत्पुण्यमुपार्जितंतस्याः भिक्षायाःपरिश्रमविदःआयासवेदिनःतव तस्यपुण्यस्यफलेकार्येस्वविभूतौस्वाराज्यलक्षणायां विभूतौस्वीयसम्पदियदिहेलयाकुनमन्येइतिवचनादवज्ञातर्हिभिक्षायासवेदिनः तवपरंकेवलंहेलानान्यस्यकस्यापि बहुक्लेशार्जितायांसम्पदिअन्योऽवज्ञांनैवकरोति । यस्मात्क्लेशेनप्रयासेनलब्धं वस्तुस्वस्मिन्अधिकंआदरंददातिकरोतीति ज्योतिष्टोमादियज्ञजन्येकालान्तरभाविनिफलेस्वाराज्येऽवज्ञाऽतिथिषुबादरइतित्वय्येवदृष्टंनान्यत्रापीतिभावः । शतमखामांसमाहारःशतमखी हेलाऽवज्ञाविलासयोरितिविश्वः ॥ २१ ॥

संपदस्तवगिरामपिदूरा यन्ननामविनयंविनयंते ॥ श्रद्दधातिकइवेहनसाक्षा दाहचेदनुभवःपरमाप्तः ॥ २२ ॥

सम्पद इति ॥ इयत्तयावक्तुमशक्यत्वाद्गिरामपिवाचामपि दूराअगोचराअपि तवसम्पदःयत्नामनिश्चितंतेविनयंनयन्ति विनयंसेनदूरीकुर्वन्ति । इहात्रविषयेपरमाप्तः अतिमित्रंअव्यभिचारीचसाक्षादनुभवः प्रत्यक्षोपलब्धिश्चेत्यदिनाहनब्रूते तर्हि कइवश्रद्दधातिविश्वसितिअपितुनकोपि सम्पत्त्वविनयोनियतइतिसर्वेषांमतं तत्तुत्वयिप्रत्यक्षेणाविनयस्यदृष्टत्वाद्बाधितमितिभावः । साक्षात्स्वयचेन्नाहेतिवा मामसम्भावनायांवा अन्यत्राप्रिवस्तुनिसाक्षात्प्रतीत्याऽनुभवेनानुमानज्ञानेन परमाप्तवचनेनवा विश्वासोभवति । अत्र पूर्वोक्तविपर्ययेपरमाप्तोनुभवश्चेत्साक्षादाह तर्हि कोवानविश्वसतीतिवा । स्तुतेःप्रायेणालीकत्वात्सर्वेषामिदंवस्तुतिःक्रियते । तवतुनतथा अनुभवश्चेत्कथयतितदिहसुविशिष्टासुसम्पत्सुविषये कइवविश्वसतीतिवा । विनयन्तीतिपाठःसाधीयान् ॥ २२ ॥

श्रीभरानतिथिसात्करवाणि स्वोपभोगपरतानहि

तेति ॥ पश्यतोबहिरिवांतरपीयं दृष्टिसृष्टिरधिका तत्रकापि ॥ २३

श्रीति ॥ हेइन्द्र अन्तरपिअन्तःकरणेऽपि बहिरिवबहिर्देशइवपश्यतो जानतोवलोकयतश्च तवैवेयंवर्णयितुमशक्या अधिका भूयसीकाप्यनिर्वच नीयादृष्टिसृष्टिःज्ञानसृष्टिर्नेत्रसृष्टिश्च । इतिकिं । अहं श्रीमतान्श्रीसमूहान् अतिथिसात्ईयत्वेनातिथ्यधीनांकरवाणिकुर्याम् । तथास्वोपभोगपरताअ्या त्मनएवोपभोगेतात्पर्यं । हितानश्रेयस्करंनभवति । यथाबहुभिर्नेत्रैःस र्वमवलोकयसि तथान्तःकरणेपिसर्वंकरणीयंज्ञानदृष्ट्याऽवलोकयसि एवं विधस्त्वमेवनान्यइतिभावः । दृष्टिर्ज्ञानेक्षिदर्शनेइत्यमरः ॥ २३ ॥

आःस्वभावमधुरैरनुभावै स्तावकैरतितरांतरलाः स्मः ॥ दांप्रशाधिगलितावधिकालं साधुसाधुविजयस्वविडौजः २४ ॥

आइति ॥ हेविडौजःइन्द्रवयंस्वभावमधुरैर्निसर्गसुन्दरैस्तावकैस्त्वदी यैरनुभावैः स्वभावसूचकैःप्रभावैर्वा अतितरामत्यर्थम् आःतरला साश्चर्याः स्मःभवामः क्षणीयाःअस्माकंतरलत्वमनुचितमिति पीडायामाश्चर्येहर्षे वा । स्वंगलितोऽवधिर्मर्यादायस्यैवंभूतःकालोयस्यांक्रियायांयथातथानिरव धिकंद्यांस्वर्गं साधुसम्यक्विजयस्वसर्वोत्कर्षेणवर्तस्व अनुभावःप्रभावे स्याज्निश्चयेभावसूचनेइतिविश्वः अनुगतोभावइतिचनासः प्रशाधि शासः शास्त्राविति शादेशः साधुसाधुहर्षाद्वृद्धिरुक्तिर्वा विजयस्वविपराभ्यामिति त इवैवेष्टिविष्व्यापकंओजोयस्यविडौजाःपृषोदरादित्वाद्वृद्धिः ॥ २४ ॥

संख्यविक्षततनुस्रवदस्र क्षालिताखिलनिजांघलघूनाम् ॥ यस्त्विहानुपगमः शृणुराज्ञां तज्जगद्युत्रमुदन्तदुदन्तम् ॥ २५ ॥

संख्येति ॥ हेइन्द्र यत्पुनर्यस्माद्धेतोर्वाइहस्वर्गेराज्ञामनुपगमःअनाग मनं तत्प्रसिद्धं तदन्तराज्ञामनागमहेतुंवृत्तान्तंशृणु । किंभूतानांराज्ञां संख्येरणेविक्षततनुभ्यःनिहतशरीरेभ्यःस्रवन्निःसृतमस्रंरुधिरंतेनक्षालितंअ खिलसमग्रंनिजंसहजमघपापयेषांते अतएवलघवस्तेषां एवंभूतेनघातके

मानैषीः सकइतित्वयाऽहंनप्रष्टव्यइत्यर्थः पृच्छाजिदादित्वादङिङित्वाद्ग्रहिज्येतिसंप्रसारणम् ॥ २८ ॥

यत्पथावधिरणुःपरमःसा योगिधीरपिनपश्यति
यस्मत् ॥ वालयानिजमनःपरमाणौ ह्रीदरीशयहरीकृतमेनम् ॥ २९ ॥

तदकथनेकारणमाह ॥ यत्पथेति परमोऽणुःपरमाणुःयस्याःयोगिबुद्धेःपंथा मार्गस्तस्यअवधिर्मर्यादारूपः परमाणुपर्यंतंयोगिबुद्धेर्विषयोनतु तस्मात्परतःकिंचित्सायोगिनांमाहबामपिबुद्धिरेनंयुवानंयस्मात्कारणात्नपश्यति कारणमेवाह किंभूतमेनं वालयानिजमनःपरमाणौस्वीयमनोलक्षणेपरमाणौह्रीरेवलज्जैवदरीकंदरातस्यांशेते शयोहरिःसिंहः सतत्स्वरूपंकृतं अणुपरिमाणंमनइतितार्किकाः मनएवयंगिबुध्यागृह्यतेनतुतत्स्याह्रीस्तस्यांविद्यमानोदूरतरइति सातंलज्जावशात्कस्याप्यग्रेनकथयतीत्यर्थः परमाणूनांनिरवयवरूपाद्याश्रयत्वंयथातथानिरवयवह्रियोपीत्यविरुद्धमित्यर्थः । कंदरायांसुप्तःसिंहः केनापिनज्ञायते सिंहरूपेणात्रश्रेष्ठत्वंसूचितम् शयवासवासिष्विति विकल्पविधानाद्ध्रीःरीशयेत्यत्रछेलुक् ॥ २९ ॥

साशरस्यकुसुमस्यशरव्यं सूचिताविरहवाचिभिरङ्गैः ॥ तातचित्तमपिधातुरधत्त स्वस्वयंवरमहायसहायम् ॥ ३० ॥

साभैमीस्वस्वयंवरोत्सवमहायस्वीयस्वयम्वरोत्सवाय तातचित्तमपि पितृचित्तमपि धातुर्ब्रह्मणः सहायंसधत्तकृतवती किम्भूताकृशिमपांडिमादिनाविरहवाचिभिर्विरहपीडांसूचयद्भिरङ्गैस्स्वावयवैः कुसुमरूपस्यशरस्य मदनबाणस्येत्यर्थः शरव्यं वेध्यंपितरंप्रतिसूचिताज्ञापिता ब्रह्मणास्याःस्वयंवरश्चित्तेधृतः वियोगपीडादृष्ट्वापित्राप्यारब्धइत्यर्थः शृणातीतिशरुःहिंस्रस्तस्मैहिताशरव्या उगवादिभ्योयत्शरव्यमित्येवपाठोयुक्तः ॥३०॥

मन्मथाययदधादितराज्ञां दूतिदूत्यविधयेविधिराज्ञाम् ॥ तेनतत्परवशाःपृथिवीशाःसंगरंगरमिवाकलयन्ति ॥ ३१ ॥

मन्दथायेति ॥ अथानंतरंविधिः राज्ञांदूतिदूत्यविषयेआकारणार्थंदूतत्वव्यापाराय मन्नयायआज्ञामिन्त्वत्वंसर्वानाकारयेतिआज्ञापयत्यतः अदितदस्वान् तेनहेतुनातत्परवशाः कामाज्ञापराधीनाः पृथिवीशाः सङ्गरंसप्रासंगरमिवविषतुल्यमाकलयंतिमन्वते-अपकारित्वाद्विषंयथात्यज्यतेतथासंग्राममपित्यक्त्वाभैमीपरवशाजाताइतिभावः अथचसम्यक्सुलरागरौविषंगरंगृणातितमेवनाशयतिसंगरस्तुसर्वान् दूत्येतिदूतवर्षिभ्यांचेतियः॥३१॥

येषुयेषुसरसादमयन्ती भूषणेषुयदिवापिगुणेषु तत्रतत्रकलयापिविशेषो यःसहिक्षितिभृतांपुरुषार्थः ॥ ३२ ॥

येष्विति दमयन्तीयेषुयेषुभूषणेषुयदिवाअथवायेषुयेषुगुणेषुऔदार्यादिषुसरसासादरा तत्रतत्रभूषणेषुगुणेषुवाकलयापिलेशेनापिपरस्परापेक्षयावायोविशेषः आधिक्यं सहिसएवक्षितिभृतांराज्ञांयस्मात्पुरुषार्थःधर्मादिरूपः भूषणगुणाधिक्यमेवपुरुषार्थत्वेनाजंयन्ति भैमींप्रतिहेतुत्वात्तुसंग्रामंवासनामितिभावः ॥ ३२ ॥

शैशवव्ययदिनावधितस्या यौवनोदयिनिराजसमाजे ॥ आदरादहरहःकुसुमेषो रुल्लासमृगयाभिनिवेशः ॥ ३३ ॥

तदेवाहशैशवेति ॥ कुसुमेषो कामस्यमृगयायामभिनिवेश आदराद्यौवनोदयिनियौवनोन्मुखेराज्ञांसमाजेसमूहेविषयेतस्याःभैम्याः शैशवव्ययदिनंबाल्यापगमदिनं अवधिर्यस्याक्रियायां तथायौवनोदयमारभ्यअहरहःप्रत्यहमादरादतितरामुल्लासप्रकटीबभूव । आदरादहरहइतिकामपीडाधिक्यंतेषांसूच्यते । तत्प्राप्तिमेवपुरुषार्थत्वेनमन्यतइतिभावः ॥ ३३ ॥

इत्यमीवसुमतीकमितारः सादरास्त्वदतिथीभवितुंन ॥ भीमभूसुरभुवोरभिलाषे दूरमन्तरमहोनृपतीनाम् ॥ ३४ ॥

प्रकृतमुपसंहरन्नाह ॥ इतीति ॥ अमीवसुमतींपृथ्वीं कमितारोवांछाशीलाराजानःइतिकारणात् त्वदतिथीभवितुंतवातिथयोभवितुंसादरास

मिलाषोन । संप्राप्तौ भावात्स्वर्गेनागच्छतीत्यर्थः भैम्यर्थेवसुमतीमेवक मितारीनस्वर्गमितिवा । अहोआश्चर्ये अभिलाषविषये भीमभूसुरभुवोर्भै मीदेवालययोर्दूरमतितरानृपतीनामन्तरंतारतम्यं महान्विशेषःयागादि भिःप्राप्यात्स्वर्गात्अपि भैमीप्राप्तिरधिकेतिमन्यतइत्यर्थः स्वर्गेसुरभूर्देवक स्याश्चाभोग्या भैम्यास्तत्राश्चमहान्विशेषः अथवाभीमस्यभूःप्रदेशस्तत्रभैम्या विद्यमानत्वात्कुंडिनत्रिदिवयोर्महान्विशेषः अतःस्वर्गोमिलाषोनेत्यर्थः अथवाकुंडिनभूमौविद्यमानत्वाद्ब्राह्मणभूमावेवनिवासात्कुंडिनमेवकमीपंत तुस्वर्गेइतितयोर्महान्विशेषः कमितारि ताच्छीत्येतृन् तस्माद्धातुकत्वे पिपाक्षिकत्वात्सिलःजावः तद्योगाद्वसुमतीमितिद्वितीया ॥ ३४ ॥

तेनजाग्रदधृतिर्हिवमागां संख्यसौख्यमनुसर्तुमनु त्वाम् ॥ यन्मृधंक्षितिभुजांनविलोकेतान्निमग्नमनसांभुविलोके ॥ ३५ ॥

तेनेति । हेइंद्र अहंतत्रिमग्नमनसांभैम्यासक्तचित्तानां क्षितिभृतांभुवि लोकेभूलोकेमृधसंग्रामं यद्यस्मान्नविलोकेनपश्यामि । तेनहेतुनाजाग्रती स्फुरंतीअधृतिरसंतोषोयस्यैवंभूतःसन्त्वामनूद्दिश्यसंख्यसौख्यंयुद्धजनितंसु खंअनुसर्तुंअन्वेष्टुंप्राप्तुंदिवंनागांआगमम् । किंभूतोहम् । जाग्रद्वर्तमानः तथानविद्यतेधृतिर्धैर्यंसुखंवायस्येतिवा । लक्षणेअनुःकर्मप्रवचनीयः ३५ ॥

वेदयद्यपिनकोपिभवन्तं हन्तहंत्रकरुणंविरुणद्धि ॥ पृच्छसेतदपियेनविवेके श्रोरञ्जनायविषयेरससेकः ॥ ३६ ॥

वेदेति । कोपिकश्चनौपिहतसुधातकेषु अकरुणंनिःकृपंभवन्तंनविरुणद्धि । त्वयासहविरोधनकरोति इतियद्यप्यहंवेदतदपितथापित्वं पृच्छसियुद्धम स्तिनवेति । यतोविषयेअभिलषणीयेवस्तुनि रसस्यानुरागस्यसेकआधिक्यं येनकारणेनविवेकप्रोञ्छनायज्ञानाजावायभवति । अनुरागवशात्किमपि नज्ञायते हन्ताश्चर्ये । ज्ञानेसत्यप्येवंप्रश्नआश्चर्यहेतुः रससेकउदकसेकश्चि आदेर्मार्जनायभवतीत्युक्तिः ॥ ३६ ॥

एवमुक्तवतिदेवऋषीन्द्रे द्रागभेदिमघवाननमुद्रा ॥

उन्नरोन्नरशुभोहिविभूनांकोपिमञ्जुलतमःक्रमवाद: ॥ ३७ ॥

एवमिति । देवऋषींद्रेनारदेएवंपूर्वोक्तमुक्तवतिसतिमघवाननमुद्रेन्द्रमुखमौनंद्र कृतवान् । स्वयंजिकइन्द्रोवभाषेत्यर्थः पुनःकिमुवाचेत्यतआह । ह्रियतोविभूनांप्रभूनांमञ्जुलतमः रम्यतमःकोपिलोकोत्तरः क्रमेणवादोवचनंउत्तरस्योत्तरेण प्रत्युत्तरेणपुरस्तात्परस्माद्वाशुभः सुभगोभवति । अतःपुनरप्युवाचेत्यर्थः अभेदिकर्मकर्त्तरि ॥ ३७ ॥

क्वानुजेममनिजेदनुजारौ जाग्रतिस्वशरणेरणचर्चा यद्भुजाङ्कमुपधायजयाङ्कं शर्मणास्वपिमिवीतविशङ्कः ॥ ३८ ॥

केति । हेमुने स्वस्यनममशरणेगृहेरक्षितरिच स्वप्रात्मैवरक्षितायस्यस्वरक्षायेंपरानपेक्षेवानिजेस्वीयेसहजेवा अनुजेकनिष्ठभ्रातरि दनुजारौदैत्यानवशत्रौतस्मिन्नुपेन्द्रे जाग्रतिसावधानेजागरूकेसतिममकारणस्यचर्चाविचारणा रणचिंतानासीत्यर्थः निजेऽनुजइत्यनेनात्मावश्यवर्त्तित्ववत्सलत्वात्स्वतःप्रवृत्तत्वंचसूचितम् । दनुजारावित्यनेनसामर्थ्यातिशयःसूचितः स्वस्यशरणेगृहविषयेजाग्रतीतिवा । परानपेक्षमात्मनोरक्षकइतिसर्वं शोषणसार्थकम् । तस्मिन्कस्मिन् । जयाङ्कंजयचिह्नं यस्मिन्जयस्यचिह्नंतंवा । यस्योपेन्द्रस्यभुजाङ्कंदक्षिणभुजोत्संगे उपधायोपधानीकृत्य वीतशंकोऽपगतजयःसन् शर्मणासुखेनस्वपिमिनिद्रामिपूर्वोक्तहेतोः ॥ ३८ ॥

विश्वरूपकलनादुपपन्नं तस्यजैमिनिमुनित्वमुदीये ॥ विग्रहं मखभुजामसहिष्णु र्व्यर्थतांयदृशानिंसनिनाय ॥ ३९ ॥

विश्वेति । हेमुनेतस्यमदनुजस्य विश्वरूपकलनात्सर्वंविष्णुमयंजगदितिश्रुतेर्विश्वेषांसर्वेषांरूपस्यस्वरूपस्यकलनात्स्वीकारात् सर्वात्मकत्वाङ्गीकरणादित्यर्थः उपपन्नंघटमानंजैमिनिमुनित्वंउदियेउत्यद्यम् । जैमिनीर्विश्वांतःपातित्वाद्विष्णोश्वविश्वरूपत्वाज्जैमिनिमुनिरूपत्वंयुक्तमेवेत्यर्थः यतस्तस्यजैमिनिमुनित्वमतः जैमिनिरूपःसोनुजोमखभुजांदेवानां विग्रहंशरीरदेत्यैः

सह युद्धं वा । असहिष्णुरसहमानः सन्दशनिर्मेमवज्रंव्यर्थतांवैयर्थ्यंनिनाय प्रापयत् । शत्रुमारणेमवज्रकृत्यंस्वयमेवकृतवानित्यर्थः वेदाद्यभिमतदेवतानांविग्रहेयाकर्मसमवायेस्वीक्रियमाणेयुगपदनेकैर्यजमानैर्नानादेशेषुअनुष्ठीयमानेषुकर्मसुएकयागगतस्येन्द्रशरीरस्य तस्मिन् क्षणेभिन्नदेशयागान्तरहविर्ग्रहणेशक्त्यभावाद्यागान्तरलोपप्रसंगेवेदस्याप्रामाण्यापातः नचैश्वर्यवशादनेकशरीरांगीकरणेएकोपियुगपत्कृत्स्नवत्सर्वत्रप्रयास्यतीतिवाच्यन् तस्यैवंविधैश्वर्यवत्त्वेप्रमाणाभावात् । अचेतनानामपिदेवतात्वांगीकारात्तेषैश्वर्यसंभावनायाअप्यभावाच्च । तथाचाहानुक्रमणिकाकारः याकाचित्तेनमंत्रेणोच्यतेसादेवताचेतनाऽचेतनावाभवतु । क्वचिद्ग्रावाणःक्वचिद्धनुःक्वचिन्मौर्वीति । निरुक्तकारोपि इमादेवताअनुक्रान्ताः सूक्तभाजोहविर्भाजःऋग्भाजश्चेत्याह । यायत्रभजतेहविः सादेवतेतिश्रुतिनाम्नेणकर्मसमवायेस्वीक्रियमाणेइदमिन्द्रायेत्यादिचतुर्थ्यंतपदरूपेणैवयुगपदनेकयागसम्बन्धोघटतइतिवेदप्रमाण्यसिद्धेः वज्रहस्तःपुरन्दरइत्यादेरर्थवादत्वसमर्थनात् । बहुभिर्युगपद्यागेसमारब्धेसमन्ततःपुरुहूतःसमाहूयतेहोतृभिःसमाहूतोनृभिःक्रतुसगच्छतु इत्यादिग्रन्थसन्दर्भेणदेवताधिकरणेदेवतानांजैमिनिमुनिनामंत्ररूपेणैवकर्मसमवायस्यसमर्थनात् । स्ववक्रैवेदानवनिवारणाच्चेत्यर्थः अथच कस्मिंश्चित्समयेसवज्रमिन्द्रंवाहुंजैमिनिःस्तम्भितवानतोपिवज्रस्यवैयर्थ्यम् । अत्र जैमिनिश्चसुमन्तुर्वैशम्पायनएवच पुलस्त्यःपुलहोविष्णुःषडेतेवज्रवारणाइतिवृद्धोक्तिः प्रमाणम् । मंत्रमयीदेवतेतिसर्वकर्मसुदेवतानांसत्त्वमितिजैमिनिः ॥ सर्वं मंत्रसमवायिनीदेवतेतिअन्येइतिसमाधिः ॥ ३९ ॥

ईदृशानि मुनये विनयाब्धिः स्तास्थवान्सवचनान्युपहृत्य ॥ प्रांशुनिःश्वसितपृष्ठचरीवाङ् नारदस्य निरयाय निरौजाः ॥ ४० ॥

ईदृशानीति ॥ विनयस्याब्धिःसमुद्रोऽतिविनीतः सइन्द्रःईदृशानिपूर्वोक्तानिवचनानिमुनयेउपहृत्योपहारीकृत्यतस्थिवान् । तूष्णींभावमापेत्यर्थः युद्धाभावजन्यदुःखेनप्रांशुदीर्घंनिःश्वसितंतस्यपृष्ठचरीपश्चात्संचारिणीप्रथमंनिःश्वासपश्चादुक्ताऽतएवनिरौजादीना नारदस्यवाक्निरयायनिर्गता

ईप्सितरथालाञ्जेननिःश्वासोवाचोमिःप्रजल्पंच ॥ ४० ॥

स्वारसातलभवाहवशङ्की निर्वृणोमिनयसन्वसुम त्याम् ॥ व्याङ्गतस्यहृदिमेतदुदर्कः क्ष्मातलद्वयभटाजिवितर्कः ॥ ४१ ॥

स्वरिति ॥ हेइन्द्र वसुमत्यांभूलोकेवसन्नहंस्वर्गेश्चरसातलंचस्वर्गपाताले तयोर्जवोजातः आहवः संग्रामस्तच्छंकाशीलःसन् ननिर्वृणोमिसुखीभवामि । पृथिव्यांयुद्धाभावात् स्वर्गेयुद्धदर्शनेच्छयाआगतोहमित्यर्थः आङ्गतस्यापिमेहृदि क्ष्मायाःपृथिव्याःतलेस्वरूपाधोभागौतयोर्द्वयंयुगम्भूपातालयुगंतत्रस्थानांभटानांआजिःसंग्रामस्तस्यवितर्कः सम्भावना । तदुदर्कःदुष्टोत्तरकालोनिःष्फलइत्यर्थः । स्वर्गेपियुद्धाभावादत्रस्थितस्यमनसुविपातालेवाकेनचित्क्रूरेणयुद्धंकृतस्यादितिमनीषयानसुखमित्यर्थः । अधःस्वरूपयोरधोतलमित्यमर उदर्कःफलमुत्तरमितिच स्वारसेतिद्वलोपेपूर्वस्येतिदीर्घः ॥ ४१ ॥

वीक्षितस्त्वमसिमामथगन्तुं तन्मनुष्यजगतेनुमनुष्व ॥ किंभुवःपरिवृढानविवोढुं तत्रतामुपगताविवदन्ते ॥ ४२ ॥

वीक्षितइति ॥ हेइन्द्र मयात्वंवीक्षितःदृष्टोसि अथमंगलेआमन्त्रणेवा युद्धाभावादत्राप्यहनसुखी तस्मान्मनुष्यजगतेभूलोकायगन्तुंमांअनुमनुष्व अनुजानीहि तत्रयुद्धेकिम्प्रमाणमतआह । तत्रभूमौतांभैमीविवोढुपरिणेतुमुपगताःसमागताभुवःपरिवृढाःप्रभवोराजानःकिन्नविवदन्ते । अहमहंमिकयापरस्परकलहंनकरिष्यन्तिकिमित्यर्थः । ततोयुद्धंतत्तोममसुखस्यादित्याशंसेहीत्यर्थः जगतेगत्यर्थकर्मणीत्यादिनाचतुर्थी परिवृढइतिप्रभौपरिवृढइतिसाधुः विवदन्तेभासनोपसम्भाषेतिविमतौतङ् वर्तमानेतिवर्तमानवत्प्रत्ययश्च ॥ ४२ ॥

इत्युदीर्यसययौमुनिरुर्वीं स्वपतिंप्रतिनिवर्त्यवलेन वारितोप्यनुजगामसयत्नं तंकियन्त्यपिपदान्यपराणि ॥ ४३ ॥

इतीति ॥ समुनिरित्युदीर्यपूर्वोक्तमुक्त्वाउर्वीं ययौ किंकृत्वावलेनवला-त्कारेणस्वपर्वतिनंनाकनायकंप्रतिनिवर्त्यपरावृत्यवारितोपिप्रपथादिनातिष्ठेतिनिषिद्धोपिसशक्रः सयत्नंयथातथाक्रियंत्यप्यपराणिद्विग्राणिपदानि तं नारदमनुजगामपश्चाद्गच्छत् यन्तनितिक्षिपित्वाठः तदासइन्द्रः अहरादित्वाद्रेफः पदानिअध्वगमनार्थत्वादत्यंतसंयोगेद्वितीया ॥ ४३ ॥

पर्वतेनपरिपीयगभीरं नारदीयमुदितंप्रतिनेंदे ॥ स्वस्यंकश्चिदपिपर्वतपक्ष च्छेदिनिस्वयमदर्शिनि पक्षः ॥ ४४ ॥

पर्वतेनेति ॥ पर्वतेनमुनिना गम्भीरमर्थगम्भीरंस्थूलंच नारदीयंनारदसंबन्धिउदितंवचनं परिपीयसादरंश्रुत्वाप्रतिनेंदेसाधूक्तमितितस्याभिनन्दनंचक्रे। पर्वतंपक्षान्छिनत्येवंशीलेइन्द्रेविषये अथचपर्वतस्यपक्षंनतंछिनत्येवंशीलेइन्द्रे स्वस्यात्मनःकश्चिदपिपक्षोनमैवंप्रतिभासीतिकिञ्चिदपिस्वयंनअदर्शिनप्रदर्शितं अथचआपोनाराइतिप्रोक्ताइतिवचनान्नारमुदकंददातिनारदोमेघस्तदीयगर्जितंपरिपीयाद्रिणाप्रतिनंद्यतेप्रतिध्वन्यतेगिरिणरुच्छेदिनिस्वपक्षंस्वगरुच्छेदनभयात्पर्वतेननप्रदर्श्यतइत्युक्तिः ४४

पाणयेबलरिपोरथभैमी शीतकोमलकरग्रहमर्हम् भेषजंचिरचिताशनिवास व्यापदामुपदिदेशरती शः ॥ ४५ ॥

पाणयइति ॥ अथरतीशःकामःचिरंचितानांसंभृतानामशनिवासेनवज्रवासेनजन्यामांविशिष्टानामापदांरोगाणां अर्हयोग्यंतदपनयनसमर्थंभैमीशीतकोमलस्यकरस्यग्रहंपरिणयनलक्षणंभेषजमौषधंबलरिपोःपाणये उपदिदेशसमादिष्टवान् । स्मरोभैमीविवाहोत्सवमिन्द्रंचकारेत्यर्थः भैमीप्राप्तौवज्रत्यागात्कठिनवज्रजन्यसन्तापःशाम्यतीत्यर्थः दाहशान्त्यर्थमन्यत्रापिशीतलंभेषजमुपदिश्यते ॥ ४५ ॥

नाकलोकभिषजोःसुषुमायापुष्पचापमपिचुम्बतिसैव ॥ वेद्मितादृगभिषज्यदसौतद् द्वारसंक्रमितवैद्यकविद्यः ॥ ४६ ॥

मदनस्यौषधोपदेशे कुतः सामर्थ्यमित्यत आह । नाकेति नाकलोकस्य स्वर्गलोकस्य भिषजौ वैद्ययोर्यो सुषमा परमा शोभा सैव शोभा पुष्पचापमपि कामं समपि सुष्ठु यति स्पृशति तयोरेव शोभा मदने समागतेति वेद्मि यतोसौ मदनस्तादृक् स्ववैद्यरूपः सन् अभिषिज्यत् चिकित्सेत् किंभूतः सैव सुषमैव द्वारं तेन संक्रामिता संक्रान्तिं प्रापिता समा विशिता वैद्यक विद्याऽऽयुर्वेदशास्त्रं यस्मिन् मदने शोभाद्वारेणाश्विनोरात्मनि संक्रांतिता वैद्यकविद्या येन वा । अतः कामस्य भिषक्त्वं सङ्गतमिति भावः अमन्तत्वात् क्रमो मित्वाद् ह्रस्वत्वे संक्रमितेति रूपं साधुः तारकादेराकृतिगणत्वादितच् वा विद्यां वेत्तीति वैद्यः स्यषान्तात् स्यकर्मेति योपधाद्गुरूपोत्तमादिति वुञ् अभिषिज्यत् भिषग्गामो- यत्तयनेकं ह्वादित्वाद्यक् ॥ ४६ ॥

मानुषीमनुसरत्यथ पत्यौ खर्वभावमवलंब्य मघोनि ॥ खण्डितं निजमसूचयदुच्चै र्मानमाननसरोरुहनत्या ॥ ४७ ॥

इन्द्रे भैमीमभिलषति सति इन्द्राण्यादीनामिन्द्रपरित्यागजन्यामवस्थां बहुभिः श्लोकैराह । मानुषीमिति ॥ अथ पत्याविन्द्रे खर्वभावं नीचत्वमवलंब्याङ्गीकृत्य मानुषीं भैमीमनुसरति जिगमिषति सति मघोनी इन्द्राणी आननसरोरुहस्य चिन्तावशाच्च न्यानमतया निजं स्वकीयं उच्चैर्महान्तं माननमहंकारं पूजनं वा खण्डितमसूचयत् । आननसरोरुहनत्याकृत्वा खण्डितमिति वा अथ च खर्वत्वं ह्रस्वत्वं यो हि वामनत्वमङ्गीकरोति तस्यैव परिमाणेन न्यूनत्वं भवितुं युक्तं नान्यस्येति अत्रतु विपरीतम् मानुषी जातिवाचित्वान्ङीप् मघोनी पुंयोगेति ङीषि श्वयुवेति संप्रसारणम् ॥ ४७ ॥

यो मघोनि दिवमुज्झरमाणे रम्भया मलिनिमा लम लम्भि ॥ वर्ण एव स खलूज्ज्वलमस्याः शान्तमान्त रमभाषत भङ्ग्या ॥ ४८ ॥

यइति ॥ रम्भया देवाङ्गनया मघोनीन्द्रे दिवमुज्झरमाणे त्यक्त्वा गच्छति सति यो मलिनिमा मालिन्यमलमत्यर्थं लम्भि प्राप्तः स मलिनिमारूपो वर्ण एव खलु निश्चयेन तस्या रम्भायाः उज्ज्वलं हर्षयुक्तं मान्तरं हृदयं भङ्ग्याऽऽकारविशेषेण शान्तं निर्विं रमन्दुःखयुक्तमभाषत अयोचत् ॥ उज्ज्वलस्य मालिन्यमनु

यपद्यमानंसद्योपत्याद्दीप्ततायाःशान्ततांन्नूते स्वस्यागदुःखवशाच्छान्त त्वंजातंसर्वैरपिज्ञातमित्यर्थः। अथवाऽस्याउज्ज्वलंशृङ्गाररसप्रधानंआन्तर मन्तं शान्तंशान्तैकरसप्रधानंब्रूतेस्मतस्याअपिवैराग्यमजूदित्यर्थः। अथच शान्तंकोपरहितंतदीयमन्तःकरणंउद्दतिशयेनज्वलन्तीत्युज्ज्वलंदीप्तंसकोपमभाषत स्वस्यागात्तदानींक्रुद्धासाजातेत्यर्थः। कोपांच्छान्ततामयति अत्रापिशान्तस्यदीप्तत्वंशान्तरसस्यचशृङ्गाररसत्वमिति उभयमप्याश्चर्यकारिश्यामवर्णस्यशृंगारकथनंयुक्तं तस्यतद्वर्णत्वात् उच्चरणासाबोउद्वरःसकर्मकादित्यात्मनेपदम् ॥ ४८ ॥

जीवितेनकृतमप्सरसांत त्प्राणमुक्तिरिहयुक्तिमतीनः ॥ इत्यनक्षरमवाचिघृताच्या दीर्घनिःश्वसितनिर्गमितेन ॥ ४९ ॥

जीवितेनेति ॥ घृताच्याद्देवाङ्गनयादीर्घनिःश्वसितस्यनिर्गमितेननिश्वसितेनकृत्वाइति अनक्षरंवर्णैर्विनैवाग्रादि अथवानक्षरमवाच्यमवाचि इ तिकिं अप्सरसांनोऽस्माकंइहसमयेजीवितेनकृतंमलंइन्द्रस्य मैत्र्यनुरागाज्जीवितंनिष्फलयतः ततस्मादस्माकंप्राणमुक्तिःप्राणत्यागएवयुक्तिमतीयुक्तेति दुःखेनतादृग्दीर्घोनिःश्वासोमुक्तोयत्प्राणाअपिबहिर्निर्गच्छन्तीतिभावः। प्राणानिःश्वासरूपास्ततस्तन्निर्गमात्प्राणानिर्गतोयुक्तः अनक्षरमवाच्यंस्यादित्यमरः ॥ ४९ ॥

साधुनःपतनमेवामितःस्या दित्यभाषयततिलोत्तमयापि ॥ चामरस्यपतनेनकराब्जो द्वद्विलोलनचलद्भुजनालात् ॥ ५० ॥

साध्विति ॥ तद्विलोलनेनचामरचालनेनचलञ्चञ्चलोभुजएवनालो यस्यएवंविधात्करएवाब्जकमलंतस्माच्चामरस्यपतनेन कृत्वातिलोत्तमया देवाङ्गनयापि इत्यजल्पतअवादि। इतिकिं। इतोऽस्मात्स्वर्गोकोऽस्माकमामरवत्पतनमेवयुक्तंस्यात् इतिदुःखवशाद्विवेकत्यात्करकमलात् चामरंपतितमितिभावः। वजिकोकिलकरणाजुज्ञापकादनुदात्तेतोपिवलतेःपरस्मैपदता ॥ ५० ॥

मेनकामनसितापमुदीतं यद्विधित्सुरकरोदवहि
त्थाम् ॥ तत्स्फुटं निजहृदः परिपाके पङ्कलिप्तिमसृ
जद्वहिरुत्थाम् ॥ ५१ ॥

मेनकेति ॥ मेनकादेवाङ्गनामनसि उदीतं जातं तापं विरहज्वरं विधि त्सुर्विधातुमिच्छुः अवहित्थामाकारगुप्तिमकरोदिति यत्तदाकारगुप्ति क र्मभूतं निजहृदः स्वीयहृदयस्य पुटमध्ये यः पाकस्तद्विषये बहिरुत्थां बहिर्जातां पङ्कलिप्तिं पङ्कलेपमिव अकरोत् । स्फुटमुत्प्रेक्षे । सन्तापाकार गुप्तिभ्यां तदीयं हृदयमतितरां पीडितम् सन्तापस्याधःस्थितत्वाद्धृदयस्य मध्ये स्थितत्वादवहित्थायाउपरिस्थितत्वात्पुटपाकस्वपुटपाकेविनाशाभा वाद्दुःखसहत्वं सूचितम् । सामान्यपाके झटिति विनाश एव भवेत् तथाचि रं दुःखं नानुभूयेतेत्यर्थः । अन्योपि पुटपाके बहिर्मृल्लेपं करोति । मेनके ति पृषोदरादित्वात्साधुत्वं भाषायामपि ॥ ५१ ॥

उर्वशीगुणवशीकृतविश्वा स्तत्क्षणस्तिमितभाव
निभेन ॥ शक्रसौहृदसमापनसीम स्तंभकार्यमपुष
द्वपुषैव ॥ ५२ ॥

उर्वशीति ॥ गुणैः सौन्दर्यादिभिः वशीकृतं विश्वं यया सा उर्वशी देवाङ्गना तस्मिन्नेव क्षणेस्तिमितभावस्य निश्चलत्वस्य निभेन व्याजेन शक्रसौहृदस्य इ न्द्रसौहृदस्य समापनं समाप्तिस्तस्य सीमायां मर्यादायां स्तम्भस्य कार्यं मर्यादा ज्ञापकलक्षणम् वपुषैव अपुषत् ज्ञापितवती । इयत्कालं शक्रसौहृदं नातः पर मिति अवधिज्ञापनं निश्चलत्वात् स्तम्भतुल्येन शरीरेणैव कृतवतीत्यर्थः ॥ अ स्यन्तं स्तब्धा जातेति भावः ॥ सीमायामपि समाप्तिज्ञापकस्तंभो भवति । सौ हृदेत्यत्र हृदयेत्युभयपदवृद्धिर्न संज्ञापूर्वको विधिरनित्य इति परिभाषया अ न्यैस्त्वर्थवत्परिभाषया सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातितस्य सुहृच्छब्द स्य योऽवयवो हृच्छब्दस्तदन्तस्योत्तरपदस्य वृद्धिर्न भवतीति व्याचक्षते समु दायस्तत्र भिन्नवचनोऽवयवस्तु निरर्थक इति रक्षितोक्तेः । अपुषत् पुषादि त्वादङ् ॥ ५२ ॥

कापि काममपि बभाण बुभुत्सुं शृण्वति त्रिदशभर्त्तरि

किंचित् ॥ एषकश्यपसुतामभिगन्ता पश्यकश्यप सुतः शतयज्ञः ॥ ५३ ॥

अनुरागवशात्लोकप्रवादोपिसेनायंजात इतिश्लोकद्वयेनाह । कापीति । कापिदेवाङ्गना सर्वाअपिदेवाङ्गनाकिमित्येवंसचिन्ताः किंजातमितिशुश्रूषुं ज्ञातुमिच्छुं । काममपिस्त्रियंत्रिदशभर्तरीन्द्रे किंचिच्छृण्वतिसतिबभाषा । बभाषे । सोपहासम् ॥ एषकश्यपसुतः शतमन्युः शतयज्ञः इन्द्रः कश्यपसुतांपृथ्वीमभिगन्तालक्षीकृत्यगमिष्यति पश्येतिवाक्यार्थः कर्म । पृथ्वीं गच्छतीन्द्रः सतोहेतोः एताः सचिन्ताः । कश्यपमुनेः पुत्रोपिशतयज्ञोपिकश्यंमद्यंपिबतीतिमद्यपकन्यांगच्छतीत्यप्याशयेन् पासरेणापिनक्रियते विशिष्टकुलोत्पन्नेनानेनअनेकयज्ञकारिणापिमद्यपकन्यागमनंक्रियतइत्याशयेन् अयंचकश्यपपुत्रः कश्यपपुत्रींभगिनींगच्छतीत्याशयेन् । यतःशतमन्युर्नयंयाऽनेकापराधी । मद्यपस्य निषिद्धकारित्वंनाश्चर्यकारि । मन्युः क्रोधेक्रतौदैन्येइतिविश्वः ॥ अभिगन्तेतिलुट् ॥ ५३ ॥

आलिमात्मसुभगत्वसगर्वा कापिशृण्वतिमघोनि बभाषे ॥ वीक्षणेपिसघृणासिनृणांकिं यासिनत्व मपिसार्थगुणेन ॥ ५४ ॥

आलिमिति । आत्मनःसुभगत्वेसौन्दर्यविषयेसगर्वा । कापिदेवाङ्गना मघोनिशृण्वति आलिंसखींबभाषे । नृणांवीक्षणेपिकिमिसिघृणासिजुगुप्सासहितासित्वमपिसार्थगुणेनसंगानुरोधेन यासिजुगुप्सांपरित्यज्यमनुष्यावलोकनार्थंगच्छसि । गतानुगतिकोलोकइतिन्यायात् । येषामवलोकनेपित्वंजुगुप्सांकरोषितद्वरणार्थंविबुधेन्द्रः सन्गच्छतीतियुक्तमुपहासः । इन्द्रादपित्वंनेवसचिन्तोत्यर्थः ॥ ५४ ॥

अन्वयुर्द्युतिपथःपितृनाथा स्तंमुदाथहरितांकमितारः ॥ वस्मकर्षतुपुरःपरमेक स्तद्गतानुगतिको नुमहार्घः ॥ ५५ ॥

अन्वयुरिति । अपद्युतिपथः पितृनाथाः वह्निवरुणयमा दिशांकमितारःकामुकाःदिक्पालास्तंइन्द्रंजैमीदर्शनादिनिमित्तहर्षेण अन्वयुरनुजग्मुः ।

तस्मिन्निर्गतेपितेकिमिति निर्गताइत्यतआह । परंकेवलंएकःपुरः प्रथम तःवर्त्मकर्षतुकरोतुप्रवर्तयतु पुरोमार्गकर्तैवदुर्लभइत्यर्थः ॥ तस्यपुरोगच्छ तांगतंगमनमनुलक्षीकृत्यगतिर्यस्य एवंविधःपुरुषोमहार्घोनदुर्लभोनुकिंतु एकस्मिन्पुरोनिर्गते ऽन्योपितदनुयायीभवतीति इंद्रमनुसर्वेपिनिर्गताइत्य र्थः ॥ अनुगतिकेतिग्रेषाद्विभाषेतिकप् कर्षतु प्रार्थनेलोट् कमितारः तृच् प्रत्ययः ॥ ५५ ॥

प्रेषिताःपृथगथोदमयन्त्यै चित्रचौर्यचतुरानिज दूत्यः ॥ तद्गुरुंप्रतिचतैरुपहाराः संख्यसौख्यकप टेननिगूढाः ॥ ५६ ॥

प्रेषितादति । अथोनन्तरंतैरिन्द्रादिभिः चित्तचौर्येभ्यंतःकरणचमीक रणेचतुराःनिगूढाः स्वापेक्षयादूत्यपेक्षयाअपरस्परस्माद्गोपिताः पृथक्प्रत्ये कंनिजदूत्यःस्वीयदूत्यः दमयंत्यैजैम्यर्थंप्रेषिताःनिगूढाः कुंडिनवासिनामव श्या वातद्गुरुन्तरिपतरंप्रतिउद्दिश्यसंख्यसौख्यकपटेन संग्रामजनितसंतोष व्याजेनपृथक्उपहारा दिव्यरत्नान्युपायनानि ऽऽप्रेषिताः । स्वयावैरिणो निहताः तेनवयंप्रसन्नास्तुभ्यंदिव्यरत्नादि अस्माभिःप्रेषितमङ्गीकरणीयमि ति प्रीतेनस्वसैमैभोदयितेतितात्पर्यंसंख्यसौख्यैरितिविशेषणं मैत्रीप्राप्तिं प्रत्युपाधिराहित्यद्योतनार्थम् । निगूढाः उपहाराविभूषणंवा ॥ ५६ ॥

चित्रमत्रविबुधैरपियत्तैः स्वर्विहायवतभूरनुसस्रे द्यौर्नकाचिदथवास्तिनिगूढा सैवसाचलतियत्रहि चित्तम् ॥ ५७ ॥

चित्रमिति । विबुधैःदेवैरपथचपंडितैरपितैः स्वःस्वर्गंविहायभूरनुसस्रे ऽनुसृताबतखेदे अत्रचित्रंस्वर्गप्राप्त्यर्थमन्यैरपियत्नःक्रियते एतैर्विबुधैरपि स्वर्गएवत्यक्तइत्याश्चर्यम् अर्थान्तरन्यासमाह । अथवायत्कर्मतत् निरूढाप्र सिद्धाकाचित्द्यौःस्वर्गोनास्ति किन्तुसद्यौःयत्रचित्तमन्तःकरणंचलति यत्रा नुरागःसएवस्वर्गः ततश्चभूमावनुरागात्तेषांभूमिरेवस्वर्गः इतितदनुसरणंयु क्तमित्यर्थः ॥ ५७ ॥

शीघ्रलङ्घितपथैरथवाहै र्लम्भिताभुवममीसुरसाराः

वक्रितोन्नमितकन्धरबन्धाः शुश्रुवुर्ध्वनितमध्वनिदूरम् ॥ ५८ ॥

ग्रीवेति । अथ अमीसुरसारादेवश्रेष्ठाः अध्वनिदूरं दूरदेशोद्भवमतिश यितंवाध्वमिलं शब्दं शुश्रुवुः । किंभूताः शीघ्रं लंघितसूपन्थायैर्वाहैरश्वैः कर्तृ भिः भुवं लंभिता प्रापिता । तथापूर्वं वक्रीकृता पश्चादुन्नमिता ऊर्ध्वीकृता कन्धरा ग्रीवा यस्मिन्नेवंविधो बन्धः शरीरावस्थाविशेषो येषां अध्वनि ध्वनिर हितं यथा तथा कथान्तरं परित्यज्य शुश्रुवुरिति तिवा वाहैर्वेमानैर्वा ५८ ॥

किं घनस्य जलधेरथ चैवं नैव संशयितुमप्यलमन्त ॥
स्यन्दनं परमदूरमपास्य न्निस्वनश्रुतिसहोपनतं न्ते ॥ ५९ ॥

किमिति । ते देवा इदं घनस्य मेघस्य ध्वनितमथवा समुद्रस्य किमिति संश यितुं सन्देहमपि कर्तुमशक्ताः सन्तो नैवालभन्त किं पुनर्निश्चेतुं निःस्वनश्रुतिरा कर्णनं तया सहतस्याः समये उपनतं प्राप्तं अदूरं निकटवर्ति तेनं स्यन्दनं रथं परं के वलं अपश्यन् ददृशुः । शब्दाकर्णनसमये रथोपि वेगादागत इत्यर्थः । न लस्याश्वहृदयवेदित्वं सूचितम् । प्रथमं मेघध्वनिस्मरणं द्वितीये जलधेस्त त्क्रमेणाह्वयोः समानधर्मस्मरणं पञ्चमर्थीसंशय प्रथमं तयोरेव रथे समाग तिकर्यसंशय कथान्तरविचारः । कथान्तरस्यनिर्णय इत्यर्थः । रथध्वनेर्गाम्भीर्यं सूचितम् ॥ ५९ ॥

सूतविश्रमदकौतुकभावो भाववोधचतुरं तुरगाणाम् ॥ तत्र नेत्रजनुषः फलमेते नैषधं विबुधिरे विबुधेन्द्राः ॥ ६० ॥

सूतेति । एते विबुधेन्द्रा नेत्रजनुषो नयनजन्मनः फलं नैषधं तत्र रथे विबु धिरे ज्ञातवन्तः । किंभूतं सूतस्य सारथेः विश्रमं ददातीति विश्रमदः कौतुकि भावं कुतूहलित्वं यस्य सः तथा तुरगाणां भाववोधे हृदयाशयज्ञाने चतुरं अत एव एवंविधस्य सुन्दरान्तरस्याभावादेतस्यावलोकने नेत्रजन्मनः साफल्यमि त्यर्थः । सूतश्रमापनोदनेनास्मायकमप्यमीहं कृत्वा अश्वमपनेष्यतीति सूचि तम् पशूनां हृदयं जानाति सोस्माकं हृदयस्य माभिप्रायं कथं न ज्ञास्यतीति भाव

बोधपदेनसूचितम् । विशिष्टंश्रमंनुद्यतेनुदतीतिवा एतेविशिष्टंनलोयमिति तैर्ज्ञातमितिभावः ॥ ६० ॥

वीक्ष्यतस्यवरुणस्तरुणत्वंयद्बभारनिविडंजलभूयम् ॥ नौचितीजलपतेःकिमुसास्य प्राज्यविस्मयरसस्तिमितस्य ॥ ६१ ॥

वीक्ष्येति । तत्तस्मिन्समयेवरुणस्तस्यनलस्यतरुणत्वं वीक्ष्यत्यन्निविडं जलभूयंजलत्वंबभारप्राप्तवान् एनंदृष्ट्वाभैमीमांवरिष्यति कथमितिचिन्तया ऽनिखिन्नोभूदित्यर्थः । अथचजडत्वंतयैवचिन्तयास्तब्धत्वमपिप्राप । सो पिनलसौन्दर्यतारुण्यावलोकनेन प्राज्योबहुतरोविस्मयरसश्चाश्चर्यरसस्ते नस्तिमितस्यनिश्चलस्यास्यजलपतेर्वरुणस्यकिमुनौचिती अपित्वौचित्यमे व । जलपतेरुदकरूपत्वंजडपतेर्मूर्खश्रेष्ठस्यचमन्दमूयत्वंययुक्तमेव अन्य स्यापिविशिष्टगर्वरसयुक्तस्यजडपतेर्जडत्वंयुक्तमित्युक्तिः । तादृशंतमालो क्यातितरांसचिन्तोभूदित्यर्थः ॥ ६१ ॥

रूपमस्यविनिरूप्यतथापि ग्लानिमापरविवंशवतंसः ॥ कीर्त्यतेयदधुनापिसदेवः कालएवसकलेन जनेन ॥ ६२

रूपमिति ॥ रविवंशोऽवतंसोभूषणंयस्यसोयमः अस्यनलस्यरूपंसौन्दर्यं निरूप्यविशेषेणसादरमवलोक्य तथातेनप्रकारेणातिम्लानिंग्लानिंअधिकंकालि मानमाप । यद्यनेनकारणेनसकलेनापिजनेनापिसदेवःकालःकालवर्णएव अथच कालसंज्ञकःकीर्त्यतेकथ्यते नलरूपावलोकनजनितकालिम्नोद्याषि वर्तमानत्वाद्यमस्यकालत्वमर्थवत्वंनतुनाममात्रेणेत्यर्थः । यमोपिसचि- न्तोभूदित्यर्थः । रविवंशावतंसस्यश्यामत्वमाश्चर्यकारि । तथानिर्वचनी यस्वरूपसौन्दर्यंविलोक्य यस्माद्यमोपिकालिमानंप्रापतस्माज्जनैर्नैषधंकीर्त्य तइति ( रविवंशावतंसइत्यत्रशकन्ध्वादित्वात्पररूपम् ) ॥ ६२ ॥

यंघभारदहनःखलुतापं रूपधेयभरमस्यविमृश्य ॥ तत्रभूदनलताजनिकर्त्रीमातदप्यनलतैवतुहेतुः ६३

यमिति ॥ दहनःअग्निःअस्यनलस्यरूपधेयस्यसौन्दर्यस्यभरंबाहुल्यंवि मृश्यविचार्यदुःखात् सन्तापमस्मार । तत्र सन्तापेऽनलताखलुनिश्चितंज निकर्त्रीजन्मकर्त्रीनाभूत् स्वेनस्वस्यतापकारणायोगादेकस्यैव कर्तृत्वकर्म त्वविरोधात् । तदपितथापितुपुनर्निश्चितंअनलतैवनलान्यत्वमेवहेतुका रणम् ॥ अहंचेन्नलोऽभविष्यत्तर्हिमैमीममैव अभविष्यत्ततुमान्भूदितिदुः खवशात्सन्तप्तोऽभूदिति भावः ॥ ६३ ॥

कामनीयकमधःकृतकामं काममक्षिभिरवेक्ष्यतदी यम् ॥ कौशिकः स्वमखिलंपरिपश्यन्मन्यतेस्म खलुकौशिकमेव ॥ ६४ ॥

कामेति ॥ कौशिकइन्द्रः अखिलंस्वमात्मानंपरितोविलोक्यखलुनिश्चि तंकौशिकमेवउलूकमेवमन्यतेस्म । किंकृत्वाअधःकृतोन्यक्कृतःकामोयेन तत्तदीयंनलसम्बन्धिकामनीयकंसौन्दर्यंअक्षिभिःसहस्रेणापिनेत्रैः का मतिरांनिपीयनलाग्रेअहमुलूकतुल्यएवेतिइन्द्रस्यबुद्धिरुदभूत् । तत्पद यवंस्वस्यनेत्रसद्भावाद्विरस्यलत्वादित्यर्थः । अक्षिभिरितिबहुवचनंतद्रूपा वलोकनेसौकर्यंसूचनार्थम् । कौशिकस्यकौशिकत्वयुक्तमेव । महेन्द्रगुग्गु लोलूकव्यालग्राहिषुकौशिकइत्यमरः कामनीयकंपूर्ववत् । भावेयोपधा द्वितिवुञ् ॥ ६४ ॥

रामणीयकगुणाद्वयवादं मूर्त्तमुत्थितममुंपरिभाव्य विस्मयायहृदयानिवितेनु स्तेषुतेषुनसुराःप्रबभू वुः ॥ ६५ ॥

रामेति ॥ सुराःइन्द्रादयः अमुंनलंमूर्त्तंआकारवन्तं उत्थितंउदीतंरामणी यकंसौन्दर्यमेवलक्षणोगुणस्तस्याद्वैतवादःअद्वितीयतावादः तंपरिभा व्यविचार्यहृदयानिअन्तःकरणानि विस्मयायआश्चर्याय वितोवितेनुर्दत्त वन्तः । आकारवत्सौन्दर्यमिदमेकमेवात्रदृष्टंनान्यत्रेत्याश्चर्ययुक्तोतोजा तस्तेनकारणेन तेषुतेषुहृदयेषुविषयेनबभूवुःसमर्थानाभूवन् आश्चर्यव शात्किंकरणीयमधुनेतिनस्फुरितमितिभावः । रामस्यस्वस्वत्वनिवृत्ति परस्वत्वोपादानत्वात्विस्मयदानेषुहृदयेषुस्वामित्वंनाभूदितियुक्तमेव रा मणीयकंगुणोयस्यतस्याद्वयवादएताद्रूशोयमेवनान्यइतिवा । रामणीयकं

कामनीयरूपवत् ॥ ६५ ॥

**प्रैयरूपकविशेषनिवेशैः संवदद्भिरमरोः श्रुतपूर्वैः एषएवसनलःकिमितीदंमन्दमन्दमितरेतमूचुः॥६६**

प्रैयेति । अमराःइतिएवंइदंइतरेतरंपरस्परंमन्दंमन्दंअल्पस्वरंयथात थाऊचुः । एवमिदकथं श्रुतपूर्वैःपूर्वैर्लोकमुखाच्छ्रुतैःसम्वदद्भिःयादृशागु णाःपूर्वंश्रुतास्तादृशाएवाधुनादृष्टाःइतिसम्वादंभजमानैः प्रैयरूपकस्यप्रि यरूपत्वस्ययोविशेषः अतिशयस्तस्यनिवेशैरवस्थानैःसौन्दर्यविशेषविन्या सैःकृत्वाखनलःएषएवकिं ।-श्रुतानुरूपगुणावलोकनेननलंव्यतर्कयन्नित्यर्थः प्रैयरूपकंमनोज्ञादित्वाद्भावेवुञ् । मन्दंमन्दंप्रकारेद्विरुक्तिः ॥ ६६ ॥

**तेषुतद्विधवधूवरणार्हंभूषणंससमयःसरथाध्वा ॥ तस्यकुण्डिनपुरंप्रतिसर्पन् भूपतेर्व्यवसितानिशशंसुः ॥ ६७ ॥**

तेष्विति । एतेपदार्थाःभूपतेर्नलस्यव्यवसितानिउद्योगान् तेष्विन्द्रादिषु विषयेशशंसुः । अयंभैमीवरणार्थंगच्छतीतितेभ्यःकथयामासुः । एतेके । तद्विधातिसुन्दरीवधूर्भैमीतस्यावरणायाहंयोग्यंभूषणमेकःपदार्थः । ससम यःस्वम्बरकालश्चैकः । कुण्डिनपुरंप्रतिगच्छन्सरथाध्वारथमार्गःएकः न लस्यभूषणादिविचार्यअयंभैमीवरणार्थं तत्रगच्छतीतिनिर्णीतमित्यर्थः ६७

**धर्मराजसलिलेशहुताशैः प्राणताश्रितममुंजगतस्तैः ॥ प्राप्यहृष्टचलविस्तृततापैश्चेतसानिभृतमेतदचिन्ति ॥ ६८ ॥**

धर्मराजेति ॥ तैधर्मराजसलिलेशहुताशैःयमवरुणानलैः चेतसाकृत्वा निभृतंगुप्तंएतद्वक्ष्यमाणंअचिन्तिविचारितं । किंभूतैःजगतःसम्यकूपाल- नात् लोकस्यप्राणतांश्रितंजीवत्प्रियम् । अथच प्राणाख्यवायुभूतंचामुंप्रा प्य यथासख्यंहृष्टचलविस्तृततापैःजगत्प्रियत्वाद्धर्मराजत्वाद्यमोहृष्टः व- रुणोपिसलिलेशत्वाद्द्रवंयशादेवचञ्चलः वह्निरपिहुताशत्वाद्द्रवंयस्यादेव विस्तृततापपरिपुष्टोजातइत्यर्थः । असूनांप्राणीयमोहृष्यतिलोकप्राणहा रित्वाद् वायूनांप्राणैअवात्मकत्वान्मेघरूपत्वाद्वरुणश्चञ्चलोभवति तथा

वायुनांप्राप्तौवह्निरपितद्वर्चिर्भवति । वचनंभङ्ग्यायमःक्रुद्धोभूद्वरुणोपि चिन्तावशाच्चञ्चलोभूत् । वह्निरपिचिन्तावशादतिसंतप्तोभूदितिभावः ६८

नैवनःप्रियतमोभयथासौ यद्यमुंनवृणुतेवृणुतेवा॥ एकतोहिधिगमूमगुणज्ञा मन्यतः कथमदःप्रतिल म्भः ॥ ६९ ॥

यमचिन्तामाह । नैवेति । असौभैमीयदिअमुंनलंनवृणुतेवृणुतेवा उभयथापिवरणेऽवरणेचनोस्माकंप्रियतमाप्राणेश्वरीपत्नीहितकारिणीचनैव भवेत् कुतःहियस्मात्एकतोऽवरणपक्षेअमूभैमीमगुणज्ञाधिक्नलोनलगुणाधिक्यंनजानातिसाकथंवरणीया । वरणपक्षेगुणाधिक्यज्ञानेन वृतेन लेनअदःप्रतिलम्भःअनुव्यालाभोममकथंउभयथापि नप्रियतमेतिधर्मराजस्याचिन्ताकृता । एकतोन्यतःशब्दम्यर्थेतसिः ॥ ६९ ॥

मांवरिष्यतितदायदिमत्तो वेदनेयमियदस्यमहत्व म्॥ईदृशीचकथमाकलयित्री मद्विशेषमपरान्नृपपु त्री ॥ ७० ॥

वरुणचिन्तामाह । मामिति । इयंभैमीमान्तदावरिष्यतियदिमत्तःसकाशादियदतिबहु अस्यमहत्वंमाहात्म्यंनवेदनजानातिनत्वन्यथा ईदृशीचनलोनलस्यविशेषअजानानैवचेद्राजपुत्रीतर्हि अपरात्अन्यस्मात्सजातीयाद्वासकाशाद्वमद्विशेषंनलाधिक्यं कथमाकलयित्रीज्ञास्यतिअपितुज्ञास्यतीतिउभयथाअस्याअलाभइति वरुणेनचञ्चलंचिन्तितम । नलोमत्तोविशेषापरिज्ञानवदन्यस्मान्ममाविशेषापरिज्ञानात्नमामपिवरिष्यतीतिभावइति वा ॥ ७० ॥

नैषधेवतवृतेदमयंत्या व्रीडितोनहिवहिर्भविता स्मि॥ स्वांगृहेपिवनितांकथमास्यं ह्रीनिमीलिख लुदर्शयिताहे ॥ ७१ ॥

वह्निचिन्तामाह नैषधइति । अहंदमयन्त्यानैषधेवृतेसतिव्रीडितःसन्बहिर्नभवितास्मि ॥ बतखेदे । गृहेपिस्वांवनितांआस्यंमुखंकथंदर्शयिताहे दर्शयिष्ये खलुयस्माद्ह्रीनिमीलितलज्जासङ्कुचितं गृहेस्वस्त्रीभयंवहिर्लोक

दर्शनमयंचभवथाकष्टमिति । वह्निनासन्तापेनचिन्तितं दर्शयितावे चि चषेत्यात्मनेएदेशुध्यघंत्वाद्गौकर्मत्वम् ॥ ७१ ॥

इत्यवेत्यमनसात्मविधेय किंचनाग्निविबुधौबुबुधे
न नाकनायकमपास्यतमेकं सास्मपश्यतिपरस्पर
मास्यम् ॥ ७२ ॥

इतीति । साग्निविबुधौदेवद्वयौमनसाइतिपूर्वोक्तं अवेत्याकलय्यकिंच नात्मविधेयंकिमपि स्वीयंकार्यंनबुबुधेनज्ञातवती किन्तुतमेकंनाकनायक मिन्द्रंअपास्यविहायपरस्परमास्यवदनंपश्यतिस्म किंकर्तव्यमितिमूढाभू दित्यर्थः । आत्मविशेषमितिपाठेनलाग्नेद्वयात्मनोन्यूनत्वरूपंविशेषंमन साविचिन्त्यकिंचननबुबुधइत्यर्थः ॥ ७२ ॥

किंविधेयमधुनेतिविमुग्धं स्वानुगाननमवेक्ष्यम
रुद्भिः ॥ शंसतिस्मकपटेपटुरुच्चै र्वञ्चनंसमभिल
ष्यनलस्य ॥ ७३

किमिति । मरुताइन्द्रः अधुनाकिंविधेयंकिंकरणीयमित्यस्फुरणाद्वि मुग्धंविशेषेणभ्रान्तंस्वानुगानांमुखंसमवेक्ष्यविलोक्य उच्चैरतितरांकैत वेपटुःकुशलः । नलस्यवञ्चनंप्रतारणंसमभिलष्यशंसतिस्मवक्ष्य माणंवदतिस्म ॥ ७३ ॥

सर्वतःकुसलवानसिकच्चि त्वंहिनैषधइतिप्रतिभा
नः ॥ स्वासनार्द्धसुहृदस्त्वयिरेखा वीरसेननृपतेरि
वविद्मः ॥ ७४ ॥

सर्वतइति ॥ त्वंसर्वतःसमाद्रराज्यादौकुशलवानसिकच्चित्कथय । क च्चित्कामप्रवेदने । कामप्रवेदनंस्वाभिप्रायकथनम् । अपरिचितस्यकुशल प्रश्नोनयुक्तोइत्यतआह । सप्रसिद्धोनैषधःत्वंइतिनःअस्माकंप्रतिभाज्ञानु मानिकीबुद्धिः कुतइत्यतआह । वयंस्वस्यममआसनार्द्धेविषयेसुहृदोऽ तिमित्रस्यवीरसेननाम्नोनृपतेरिवत्वयिविद्यमानारेखांशोभांविद्मः जानी मः । वीरसेनतुल्यशोभत्वात्नलपुत्रस्त्वंप्रायेणपितृसदृशःपुत्रोभवतीति । शोभामितिपपाठः । उपमानोपमानयामूषवस्यापिभूपथंअङ्गश्रीःकथ्यमे

रेखावतुःपीयूषवर्षिणीत्यालङ्कारिका: ॥ ७४ ॥

क्लमयास्यसिनलेत्यलमुक्का यात्रयात्रशुभयाजनि यन्तः ॥ स्तन्नयैवफलसत्वरयोत्वं नाध्वनोऽहमिद मागमितःकिम् ॥ ७५ ॥

क्लेति । हेनलत्वंक्लमयाऽपसिकिंप्रदेशमुद्दिश्यगमिष्यसिइत्युक्त्वाऽलम् । प्रयोजनंयुक्तः । यद्वा साकंअत्रपृथिव्याम् । मार्गविषयेयापृथ्वीमार्गेच तांउद्दिश्ययायात्रातयाशुभयाजनिजातम् । सत्तस्मात्फलेसत्वरयोऽन्मु ष्यातयैवयात्रयात्वंइहम‌ध्वनोऽहंनागमितःप्रापितःकिं अपितुतयैवप्रा- पितः अस्मत्कार्यायैनतुस्वकार्यवशादत्रसमागतोसीत्यर्थः । अयच गंता रंप्रतिक्लमयास्यसीतिवक्तुंलोकेऽनुचितम् ॥ ७५ ॥

एषनैषधसदण्डभृदेषज्वालजालजटिलःसहुताशः यादसांपतिमवेहिचत्रेाेयं शासितारमधिगच्छसुरा णाम् ॥ ७६ ॥

एषइति । हेनैषधएषपुरोदृश्यमानः सप्रसिद्धोदण्डभृद्यमः ॥ सयाएषः ज्वालाजालेनजटिलःपरीतः सहुताशनःअग्निःएषस्त्वयादसांपतिर्वरुणः यो यमवेहि इमंसुराणांशासितारंइन्द्रंअधिगच्छजानीहि । दंडभृदादिवि शेषणंआदरायजयीत्यादनायच । वन्हेर्द्वयोर्ज्वालकीलाविति पुंस्त्रिकेपि ज्वालाशब्दः । पूर्ववाक्यत्रयेपिअधिगच्छेतिवाक्यार्थःकर्म । जटिलःनस्व वैरूप्यादित्यादिलच् ॥ ७६ ॥

अर्थिनोवयममीसमुपेमस्त्वांनलेतिफलितार्थमवेहि ॥ अध्वनःक्षणमपास्यचखेदं कुर्महेभवतिकार्य निवेदम् ॥ ७७ ॥

अत्रागमनकारणमाह ॥ अर्थिनइति । हेनलत्वंफलितार्थंतात्पर्यंअवे हिजानीहि । इतिकिंअमीवयंअर्थिनःसन्तःत्वांसमुपेमःयाचकत्वेनत्वां प्राप्ताःस्मकिलेति तर्हियाच्यतामित्यतआह । अध्वनोजातंखेदंक्षणमात्रम पास्यभवतिजवत्समीपेकार्यनिवेदनंप्रयोजनज्ञापनंचइदानीमेवकुर्महे ७७

इत्थमीगिरमुदीर्यविडौजाः जोषमासनविशिष्यव

भाषे ॥ नात्रचित्रमभिधाकुशलत्वे शैशवावधिगुरुर्गुरुरस्य ॥ ७८ ॥

ईदृशीमिति । बिडौजाः इन्द्रः ईदृशींगिरंपूर्वांक्तांवदीयंवरकाजोर्जर्तूष्णीमासवन्नूपविशिष्यनवभाषे । भैमीवरार्थमागतामांअस्माकंदूत्यंकुर्विर्तिविविच्यप्रकटंनावोचत्नैवेयभिप्रेतिभावः । एतावदेवमलवचनंश्रेयम् अत्रईदृशेअभिधाकुशलत्वेवचनकौशलविषयेचित्रमाश्चर्यंन । कुतोयतोगुरुर्बृहस्पतिर्यस्येन्द्रस्यशैशवमवधियंथाभवतितथाशैशवमारभ्यगुरुःशिक्षकः । सएवंवदतीतिकिमाश्चर्यमित्यर्थः । आसेतिअसगतिदीप्त्यादानेषु लेननकाव्यनुपपत्तिः ईदृशीत्यदादिष्विदिकञ्चितिद्वेतिङीप् ॥ ७७ ॥

अर्थिनामहृषितानिखिललोमा स्वंनृपः स्फुरकदंबकदंबकम् ॥ अर्चनार्थमिवतच्चरणानां सप्रणामकरणादुपनिन्ये ॥ ७९ ॥

कपटाभिप्रायमजानतोनलस्यधीरोदात्ततांपञ्चदशभिःश्लोकैराह ॥ अर्थीति स्वनशूरत्वादर्थनाश्रुतेनहृषितानिविकसितानि अखिलानिलोमानियस्यसनृपोनलःप्रणामकरणात्भक्तिश्रद्धादिप्रकर्षेणनमस्करणाद्धेतोस्तच्चरणानामर्चनार्थमर्चनायैवस्वमात्मानमुपनिन्येतच्चरणसमीपेउपहृतवान् कमिवस्फुटकदंबकदंबकमिवरोमांचितत्वाद्विकसितनीपकुसुमसमूहमिवेतिस्वपदविशेषणतुल्यमित्यर्थः । कदम्बपुष्पैरपिजनकेनदेवतार्चनाक्रियतेस्वमङ्गमेवपूजोचितकदंबपुष्पसदृशंकृत्वार्पयामसेत्यर्थः । हृषितेति । हृषेर्लोमस्विति इट् ॥ ७८ ॥

दुर्लभंदिगधिपैः किममीभिस्तादृशंकथमहोमदधीनम् ॥ ईदृशंमनसिकृत्यविरोधं नैषधेनसमशायिचिराय ॥ ८० ॥

दुर्लभमिति । नैषधेननलेनईदृशंयाच्ञादानयोःपरस्परविरोधंमनसिकृत्यआस्तिकत्वेमविचार्यचिरायचिरकालंवक्ष्यमाणप्रकारेण समशायिसंशयितंईदृशंकथंअहोआश्चर्यं । अमीभिर्दिगधिपैःदिक्पालैःकिंवस्तुदुर्लभंयाचितुनकिमपि । तादृशयाद्दिक्पालैर्दुर्लभंवस्तुतदस्याधीनंकथमहोआश्चर्यं

नीयतांकथमभीप्सितमेषां दीयतांकथमयाचित मेव तंधिगस्तुकलयन्नपिवाञ्छा मर्थिवागवसरं स हतेयः ॥ ८३ ॥

नीयतामिति अर्थोद्यातयेतिसंबध्यते । मया ऽयाचितमेवाप्रार्थितमे वशीघ्रमेतेभ्योयथामयादीयतांतथैषामभीप्सितंवस्तुकथंनीयतांदीयताम् अभीप्सितज्ञानेमविनादातुंनशक्यतेततोऽकथितेऽप्यभीप्सितज्ञानंभवतिचे त्तर्ह्यप्रार्थितमेवद्रुतंशीघ्रंदीयतामित्यर्थः । ज्ञातेऽप्ययाचितंकिमितिदातव्य मित्यतआह । गत्वायद्दीयतेदानंतद्दानसकलंस्मृतम् । सहस्रगुणमाहूययाचि तेतुतदर्धकमितिवचनप्रामाण्यात् । वाञ्छांयाचकस्याभीष्टंकलयञ्जानन्न पियएतद्याचनानन्तरंदास्यामीति अर्थिवाचोवसरंसहतेप्रतीक्षतेतंवदा न्यंधिगस्तुसोधमः । वाञ्छांज्ञात्वापिप्रार्थनानन्तरंदास्यामीतिविचारयति सोऽधमइतिकिंवाच्यम् । तस्मादयाचितमेवदेयमितिभावः । एषांकस्यचवर्त मानइतिषष्ठीअभीप्सितंमतिबुद्धीतिवर्तमानेक्तः । कलयन्निति हेतौशताऽऽ

प्रापितेनचटुकाकुविडम्बं लम्भितेनबहुयाचनलज्जाम् अर्थिनायदघमर्जितिदाता तन्नलुम्पतिविलंब्यददानः ॥ ८४ ॥

प्रपीति । दाताऽर्थिनाकृत्वायदघंपातकमर्जति विलम्ब्यचिराद्ददानो दातातत्पातकंनलुम्पतिपरिमार्ष्टुंनशक्नोति । अधिकस्मत्तुकृतस्यकाकर्येय थं । किंभूतेनार्थिनाचटुप्रियवाक्यकाकुदीनवाक्यंताभ्यांविडम्बंपराभवंप्रा पितेनस्वस्यप्रियंदैन्यंवधादिनेनतथाबहुअनेकवारंयाचमानं तेनकृत्वाया लज्जातामपिलम्भितेनप्रापितेन प्रियवचनाद्यवादयित्वैवमर्थित्यर्थिनेदेय म् अन्यथापातकंस्यादितिभावः । अर्जतिअर्जअर्जनेत्यादिः । घर्गअर्ज नेचुरादिः ॥ ८४ ॥

यत्प्रदेयमुपनीयवदान्यैर्दीयतेसलिलमर्थिजनाय ॥ सार्थनोक्तिविफलत्वविशंका त्रासमूर्छदपमृत्युचिकित्सा ॥ ८५ ॥

यदिति । वदान्यैर्बहुप्रदैःप्रदेयंदातव्यंवस्तुउपनीयसमीपेस्थाप्यार्थिज नायतत्सलिलंदीयतेदेयसंकल्पार्थमुदकमर्थिहस्तेप्रक्षिप्यते सासलिदान- रूपाक्रियाऽर्थिनोक्तिर्याचनवचनंतस्यविफलत्वविशंकावैकल्यविशंकातया आतङ्कात्रासस्तर्कजन्यंभयंतेन मूर्छनतिप्रयेनवर्धमानोपमृत्युरकालमरणंतस्य चिकित्साप्रतिक्रिया सलिलदानेनयाच्ञासाफल्यनिश्चयात् । मरणेयानिचि न्हानितानिचिन्हानियाचकेइतिवचनप्रमाणकोयाच्ञावैकल्यजन्योपमृत्युः शाम्यतीत्यर्थः । मूर्छोनोपमृत्युःसलिलप्रक्षेपेणशाम्यति अर्थिन्युपस्थिते दानविधिसिद्ध्येजलदानेविलम्बोपिनकर्तव्यइतिभावः ॥ ८५ ॥

अर्थिनेनतृणवद्धनमात्रंकिंतुजीवनमपिप्रतिपाद्य म् एवमाहकुसवज्जलदायि द्रव्यदानविधिरुक्ति विदग्धः ॥ ८६ ॥

अर्थिनइति । कुशंचसलिलोपेतंदानंसंकल्पपूर्वकमितिवचनात्दर्भस हितंजलंदात्रार्थिनेदापयतीतिदर्भसहितसलिलदानेदातारंप्रयोजयतीति कुशवज्जलदायीउक्तिविदग्धःश्लोकोक्तिचतुरश्चद्रव्यदानविधिर्दानप्रकारस्य ज्ञापकंयच्छास्त्रंसएवमाहब्रूते । एवंकिं दात्राअर्थिनेतृणवत्तृणमिवकेवलं धनमात्रंकेवलंधनंप्रतिपाद्यंअभिलाषकस्यानदेयकिंतुजीवनमपिप्राणा अपितृणवद्देयाःतृणादानेइवप्राणदानेपिविचारोनकर्तव्यः । अथतृणंदर्भ स्तद्युक्तंवलधनंनदेयकिंतुजीवनमपिउदकमपिदेयमितिब्रूतेअतएवोक्तिवि विदग्धः अर्थिनेप्राणाअपितृणवद्देयाःकिमन्यदितिभावः ॥ ८६ ॥

पंकसंकरविगर्हितमर्हंनाश्रियःकमलमाश्रयणाय ॥ अर्थिपाणिकमलंविकलंतद्वा सवेश्मविदधीतसुधी स्तत् ॥ ८७ ॥

पंकेति । पङ्कस्यसंकरेणसंबंधेनविगर्हितंनिन्दितंकमलंश्रियोलक्ष्म्याःसंप दआश्रयणायार्हंयोग्यंनभवतिएकंकिलस्थानपङ्केनापिनाश्रीयते । अथवा न्यदपिपातकंसम्बन्धनिन्दितस्थानमाश्रययोग्यंनभवतितस्मात्सुधीर्विद्वान् विमलअपङ्कम्पातकरहितञ्च अर्थिपाणिलक्षणंकमलं तस्याःलक्ष्म्याःसम्प दश्चवासवेश्मवसतिगृहंविदधीतकुर्यात् । विदुषासम्पदर्थिभ्योदेयेत्यर्थः अन्येनापिविदुषाउज्वलंदेवतायतनंक्रियते ॥ ८७ ॥

याचमानजनमानसवृत्तेः पूरणायवतजन्मनयस्य॥ तेनभूमिरतिभारवतीयं नद्रुमैर्नगिरिभिर्नसमुद्रैः ॥ ८८ ॥

याचमानेति । यस्यपुरुषस्यजन्मउत्पत्तिः याचमानस्यजनस्यमानसवृत्तेः मनोरथस्यपूरणायसमर्थानभवति तेनैवपुरुषेणेयंभूमिरतितरांभारवतीवर्त्तकष्टं । नद्रुमैःनगिरिभिःनसमुद्रैः भारवतीतेनपुंसायावान्भूमेर्भारो भवतितावान्वृक्षादिभिर्न । एतेकश्चित्पुष्पादिनाऔषधादिनारत्नादिना चोपकुर्वन्तिनत्वदाता तस्मात्याचकाभिलाषपूरणंकरणीयमितिभावः ८८॥

माधनानिकृपणःखलुजीवन्स्तृष्णयार्पयतुजातुपरस्मै ॥ तत्रचैषकुरुतेममचित्रं यत्तुनार्पयतितानिमृतोपि ॥ ८९ ॥

मेति । कृपणोऽतिलुब्धःजीवन्तृष्णयातिलोभेन परस्मैअर्थिनेजातुकदाचिदपिधनानिखलुनिश्चितंमाअर्पयत्मास्मदात् । जीवत्वाल्लोभसद्भावान्नददातीत्यत्रनाश्चर्यम् मृतोप्येवकृपणःयत्तुपुनस्तानिधनानिनार्पयति नप्रयच्छतितत्रचपुनस्तत्रैवत्वाविषयेममचित्रं आश्चर्यंकुरुते मृतस्यापिलोभसद्भावात् । अथचमृतःसन्नपिकृपणधनानिनृपसम्बन्धीनिराजायत्तानिनकरोतिनार्पयतितत्राश्चर्यंयोजीवन्कस्मैचिन्नददातिसमृतोपिराज्ञेददातीत्याश्चर्यं तस्माद्यावज्जीवतितावदेवदत्तव्यम् । मृतेराजानेष्यतीतिभावः ॥ ८९॥

मामभीभिरिहयाचितवद्भि र्दातृजातमवमत्यजगत्याम्॥यद्यशोमयिनिवेशितमेत न्निष्क्रयोस्तुकतमस्तुतदीयः ॥ ९० ॥

मामिति इहजगत्यांभूतलेदातृजातंवदान्यमात्रं अवमत्यअनादृत्यमां याचितवद्भिर्याचमानैरमीभिरिन्द्रादिभिः मयियद्यशोनिवेशितमाहितंइन्द्रादयोयस्ययाचकाजाता इत्यसाधारणयेममकीर्तिःकृता एतस्याःकीर्तेः निष्क्रयोविनिमयःतदीयः इन्द्रसम्बन्धीकतमस्तुकःपुनःपदार्थः अस्तुभवतु इन्द्रादिभिःपूर्वमन्यः कोपिचेद्याचयिष्यत्तेनचतेभ्यः किञ्चिद्देददास्यत्तर्हितदेववस्तुकीर्त्तेर्विनिमयःसमभविष्यत्नत्वेवंइत्येतत्कीर्तितुल्यंएते

स्योवितरणीयंविनिमयंवस्तुनास्तीतिभावः । यदेतद्यशइतिवा स्वर्लोके वर्त्तमानंकल्पवृक्षादिदातृवर्गइतिवादातृतावतिष्ठतुयशोवितरणस्यमूल्यम पिदातव्यमित्यर्थः ॥ १० ॥

**लोकएषपरलोकमुपेता हाविहायनिधनेधनमेकम् ॥ इत्यमुंखलुतदस्यनिनीष त्यर्थिवन्धुरुदयद्दयचितः ॥ ११ ॥**

लोकइति । एषलोकोनिधनेमरणेप्राप्तेधनंविहायएकएव असहायएव परलोकंउपेतागमिष्यति हाकष्टम् इतिहेतोःखलुनिश्चितंउदयन्तीउदिता दयायस्मिन् एवंविधंचित्तंमनोयस्यसअर्थिवन्धुःयाचकलक्षणःसुहृत् अस्य दातृलोकस्यतद्धनंअमुंपरलोकंपरलोकगतंजनंवानिनीषतिनेतुमिच्छति स्व सूत्प्रेक्षेवा अर्थिनेदत्तंपरलोकेतदधिकंउपतिष्ठतीत्यर्थः । अन्योपिवन्धुः पूर्वस्थानंत्यक्त्वास्थानान्तरंप्रत्येकाकिनएवगच्छन्तः सुहृदोधनादितत्स्थानं प्रापयति । उपेताइणतृन् दुह्यादित्वाद्द्विकर्मकः ॥ ११ ॥

**दानपात्रमधमर्णमिहैकग्राहिकोटिगुणितंदिविदायि साधुरेतिसुकृतैर्यदिकर्तुं पारलौकिककुसीदमसीदत् ॥ १२ ॥**

दानेति । इहभुविएकग्राहिएकसंख्यायुक्तं देयंवस्तुगृह्णातितच्छीलंदिविस्वर्गेकोटिगुणितंकोटिपरिमितंदायिददातिदास्यति वा एवंशीलं दान पात्रंअधमर्णंयाचकलक्षणंऋणग्रहीतारंसुकृतैःपुण्यैः कृत्वापारलौकिकंस्व र्गलोकभवंकुसीदंवृद्धिजीविकांअसीदद्विनश्वरंकर्तुंयदिएतिप्राप्नोति जा नातिवा तर्हि साधुःसज्जनएवनान्यः । एवंविधंदानपात्रंसाधुव्यतिरेके णकेनापिनलभ्यतेलब्धेच तस्मिन्साधुनातस्मिन्चिरकालंस्थीयते तस्मा- त्तेनमनोरथःपूर्णःकर्तव्यइति भावः । कुसीदंमसीदत्कर्तुं साधुर्यथैतित हिंसुकृतैःकृत्वानान्येनप्रकारेणेतिवा । अन्योऽधमर्णोद्विगुणादधिकंनद- दाति दानपात्रमधमर्णस्तुएकगुणंगृहीत्वाकोटिपरिमितंददाति ततएव तादृशमधमर्णंसाधुरेवसुकृतैरेवप्राप्नोतिनान्योऽन्येनोपायेनेति वा । कुसी दंवृद्धिजीविकेत्यमरः । दायीभविष्यतिगम्यादयइतिभविष्यदर्थेणिनिः ।

आवश्यकाधमर्णयोरितिवाऽधमर्णेवा । तद्योगेध्यकेनोर्भविष्यदाधमर्ण्य योरितिषष्ठीनिषेधात् कोटिगुणितमितिकर्मणिद्वितीया । पारलौकिकं अध्यात्मादिषुलोकोत्तरपदाच्चेतिवक्तव्यात्ठञितिअनुशतिकादिपाठादुभयप दवृद्धिः ॥ ९२ ॥

एवमादिसविचिन्त्यमुहूर्तं तानवोचतपतिर्निषधा नाम् ॥ अर्थिदुर्लभमवाप्यसहर्षो न्याच्यमानमुख मुल्लसितश्रि ॥ ९३ ॥

एवमिति । सनिषधानांपतिर्नलः एवमाजीवितावधिइत्येवंप्रकृतिमु हूर्तंक्षणंविचिन्त्यविचार्यतानिन्द्रादीनवोचत किंभूतान् अर्थिनांदुर्लभंया च्यमानस्यजनस्य मुखंउल्लसितश्रिउदितशोभंअवाप्यसहर्षान् याचकैर्दा तातिप्रसन्नमुखोदुर्लभस्तंतुप्रसन्नमवाप्यकार्यसिद्धिर्भविष्यतीतिसहर्षैरुक्तोतमि त्यर्थः ॥ ९३ ॥

नास्तिजन्यजनकव्यतिभेदः सत्यमन्नजनितोजन देहः ॥ वीक्ष्यवः खलुतनूममृतादांदृग्निमज्जन मुपैतिसुधायाम् ॥ ९४ ॥

नास्तीति । जन्यजनकयोःकार्यकारणयोःव्यतिभेदोतिशयितोभेदोना स्ति । तथाजनस्यदेहः अन्नतइत्यन्नंभक्ष्यंतेनजनितोजन्यःइत्युभयमपिस त्यम् उभयत्रापिसुवर्णजन्यंकुण्डलंदृष्टान्तः । खलुयस्मादमृतमश्नन्तीत्यमृतादांवोयुष्माकंतनूंवीक्ष्य ममदृक्सुधायाममृतेनिमज्जनमुपैति । अमृ तमज्जनेनयथासुखंभवति तथाजनवद्दर्शनेनेतियतोभवन्तोऽमृतभक्षिणः अत्र पूर्वोक्तोहेतुः । यद्वाऽन्नजनितोजनदेहोनास्तिजन्यजनकयोर्यस्मिन्न सौनास्तिजन्यजनकभेदोऽन्नादभिन्नएवेतिसत्यं यस्मादितिपूर्ववत् । यद्वा न्नजन्योदेहिदेहोऽस्तिनासौनास्तिजन्यजनकभेदोऽन्नादभिन्नएवेति सत्यम् । यस्मादित्यादिपूर्ववत् यद्वाऽन्नंजन्यादेर्जनदेहोऽस्तिजन्यजनकयोर्व्यतिभे दोयस्मिन्नसावस्तिजन्यजनकव्यतिभेदः एवंविधोनभवति किन्तुअन्नाद भिन्नएवतत्सत्यं । यस्मादित्यादिपूर्ववत्- पूर्वव्याख्यानादेतद्व्याख्यानद्वयं न्यायः । अमृतादामितिपाठेऽदइत्यस्यहलन्तत्वादपितनूमित्यस्यविशेषे

स्त्वेनयोजना । मास्तीति । अत्रास्तिक्षीरादिनासमासंविधायपश्चान्न
ञ्समासः । अमृतादूरमितिअदोनम इतिविद् ॥ ९४ ॥

मत्तपः क्रतुतनुकफलंवा यूयमीक्षणपथंव्रजथेति
ईदृशंपरिणमंतिपुनर्नः पूर्वपूरुषतपांसिजयन्ति ९५

मत्तपइति ॥ तनुअल्पंमत्तपोममतपः क्रतुअदृश्याअपियूयंईक्षणपथं दृष्टिगोचरंव्रजथइतिफलंवाक्व अपितुअसम्भावितमेतत् मत्कृतपोलाभस्य फलस्याल्पत्वेनैवतपसादुर्लभत्वात्तर्हीदंफलंकथमित्यतआह ईदृशंनवदृशोर्मलकथांकलंपरिणमन्तिजनयन्ति । नयदृशंनफलरूपेणवापरिणतानिएत दाकाराणिनोस्माकं पूर्वपूरुषाणांपित्रादीनांतपांसितदुपार्जितानिपुण्यानिपुनः जयन्तिसर्वोत्कर्षेणवर्तन्ते मत्पूर्वजपुण्यैर्नवदृशंमानसमित्यर्थः । जयन्तिसर्वोत्कर्षेणवर्तमानानितपांसिपुनरीदृशंपरिणमन्तीतिवा ईदृशान्यपिददन्तीतिक्वचित्तत्रफलशब्दस्यविभक्तिपरिणामेनेदृशान्यपि दुर्लभान्यपिफलानिनोस्माकंददन्तिददानानि पूर्वपूरुषतपांसिपुनर्जयन्तीतिव्याख्या ददन्तिवानपुंसकस्येतिशतुर्नुम् । अस्मदोद्वयोश्चेतिएकत्वेनेतिषष्ठीबहुवचनस्यनआदेशः ॥ ९५ ॥

प्रत्यतिष्ठिपदिलांखलुदेवीं कर्मसर्वसहनव्रतजन्म
यूयमप्यहहपूजनमस्या यन्निजैः सृजथपादपयोजैः ॥ ९६ ॥

प्रतीति । सर्वसहनंव्रतंसर्वभारादिसहनलक्षणोनियमः तस्माज्जन्मयस्य तिर्यक्सएवंविधंकर्मव्यापारः सुकृतरूपंकर्तृ इलांभूमिंखलुनिश्चयेनदेवींप्रत्य तिष्ठिपत्प्रतिष्ठापयामास खलूत्प्रेक्षायांवा सर्वसहावसुमतीत्यभिधानात् भूमेःसर्वसहत्वंततः तेनसुकृतेनतस्यादेवीत्वंकृतमित्यर्थः । तत्रप्रमाणमाह अहहाश्चर्येयद्यस्मात् यूयमपिदिङ्नाथाअपिभूमिमस्पृशन्तोपिनि जैःस्वीयैःपादपयोजैःचरणकमलैःकृत्वाऽस्याःभूमेःपूजनमसृजथकुरुथ । भवन्तोयत्पूजांकुर्वन्तिसादेवीतिभवद्भिः देवीत्वेनप्रतिष्ठितेयंसर्वापरोपस्थापिदेवत्वंलभतेपूजांवापृथिव्यामागमनेकिङ्कारणमितिप्रश्नइतिभावः । प्रत्यतिष्ठिपत् णौचङ्गितिष्ठतेरिदितीकारः ॥ ९६ ॥

जीवितावधिकिमप्यधिकंवा यन्मनीषितमितोन रडिम्भात् ॥ तेनवश्चरणमर्चतुसोयं ब्रूतवस्तुपुनरस्तुकिमीदृक् ॥ १७ ॥

जीवितेति । जीवितमत्रमर्यादायस्य तत्मनाणपर्यंतंप्राणेभ्योप्यधिकंवायत्किमपिवस्तुइतोस्मत्प्रमाणान्नरडिम्भात् मनुष्यबालकाद्भवद्भिर्मनीषितं अभिलषितंसोयंनृबालःवःयुष्माकंचरणंतेनवस्तुनार्चतुपूजयतु ईदृग्वस्तुकिंपुनरस्तु ब्रूतवाक्यार्थःकर्म । आलोच्यइंप्राणाधिकमपिदास्यामियाचनशङ्कानकार्याईप्सितंचकथनीयमितिभावः । चरणद्वयपूजनेसाकल्याभावात् चरणमित्येकवचनेनविनीतत्वंसूचितम् । अर्चतुस्वादिः ९७

एवमुक्तवतिमुक्तविशङ्के वीरसेनतनयेविनयेन वक्रभावविषमामथशक्रः कार्यकैतवगुरुर्गिरमूचे ॥ १८ ॥

एवमिति । अथकार्यकैतवगुरुःकपटाचार्यःबृहस्पतिर्वाशक्रः नलंप्रतिस्वीयानलादीनपिवक्रभावेन वक्रत्वेनवक्रोक्त्याकुटिलाभिप्रायेणच विषमांदुष्टांदुर्बोधांचगिरमूचे । कस्मिन्सति । वीतागताविरुद्धाविशङ्काविंधावायस्मादृद्धिरुद्धमेकमनेकंवा किंयाचयिष्यन्तीति त्यक्तभयेवीरसेनतनयेनलेविनयेनविनीतत्वेनैवं पूर्वोक्तमुक्तवतिसति ॥ ९८ ॥

पाणिपीडनमहन्दमयंत्याःकामयेमहिमहीमिहिकांशो ॥ दूत्यमत्रकुरुनःस्मरनीतिं निर्जितस्मरचिरस्यनिरस्य ॥ ९९ ॥

पाणीति । महीपृथ्वीतस्यांमिहिकांशोहेचन्द्रनल वयंसर्वे दमयन्त्याःपाणिपीडनंविवाहः तत्प्रमाणमुत्सवंकामयेमहिइच्छामः । कान्त्यावशितया घनितरांजितःस्मरोयेनतत्संबुद्धिः चिरस्यचिरकालं स्मराद्भीतिभयंनिरस्य विरहजन्यंदुःखंविहाय अत्र भैमीविवाहोत्सवेविषयेनोस्माकंदूत्यंकुरु । सायथाऽवृणीतेतथाप्रयत्नं कुर्वित्यर्थः ॥ जितस्मरत्वान्नवततोभीतिर्नअतिसुन्दरस्यतवभैमींप्रतिदूत्यंयुक्तं नान्यंप्रति अथचस्वीयानपिवञ्चयति अहंदमयन्त्याःकामयेकिंभूतंमहउत्सवोऽस्त्यस्मिन् इतिमहि नोस्माकं चतुर्णांमध्येममदूत्यंकुरुनत्वेषांस्मरभीतिंनिरस्य जयास्नाभिर्जितस्मरंनि

रस्य । अस्यते लोडंतं मेदूत्यंकुरुविरस्यविलम्बमितियावत् । निरस्यत्य जेतिवा दूत्यविलम्बोनकार्यइत्यर्थः । भीतिंस्मरजानीहि । दूत्याकरणेवि लम्बोवामतःशापादितिभीतिःस्मरणीया । भीतिंकर्मत्वविवक्षयाषष्ठ्या भावः । नःपदेऽस्मदोद्वयोश्चेतिबहुवचनम् ॥ ९९ ॥

आसतेऽत्रतमधिक्षितिभूपाः स्तोयराशिरसितेखलुकूपाः ॥ किंग्रहादिविनजाग्रतितेते भास्करस्यकतमस्तुतुलास्ते ॥ १०० ॥

अस्मिन्विषयेराजान्तरंयाच्यतांनत्वहमित्याशंक्याह । आसतइति । इहेनलक्ष्यधिक्षितिपृथिव्यांशतंबहुसंख्याकाभूपाःराजानः आसतेतिष्ठन्ति परंभूपत्वेतुल्येपित्वमौदार्यादिगुणबाहुल्यान्महाशयत्वात्तोयराशिःसमुद्रो सितेभूपाःखलुनिश्चितंकूपाः । अगाधताज्ञावारसमुद्रापेक्षयाकूपाययाहो नास्तथात्वदपेक्षयान्येराजानइति । तस्मात्वयाचिताइतिज्ञावः । अधि क्यमेवसमर्थयते दिविस्वर्गेतेतेनेकसंख्याकाःप्रसिद्धाश्चशुक्रादयोग्रहाःन जाग्रतिस्फुरन्तिकिं अपितु प्रकाशंतएवपरंग्रहत्वेतुल्येसत्यपिभास्करस्यतु लयासाम्यस्वेनकतमोग्रहःपुनरास्ते अपितुसूर्यसदृशोग्रहमध्येकोपिना स्तियथातथात्वत्सदृशोन्योभूपोनविद्यते अतःत्वमेवयाच्यसेइत्यर्थः । भा स्करस्यकतमस्तुतुलास्तेइतिपाठेभास्करस्यतुलासमानः कतमआस्तेऽपितु नकोपि । अधिक्षितिसप्तम्यर्थेव्ययीभावः ॥ १०० ॥

विश्वदृश्वनयनावयमेव त्वद्गुणाम्बुधिमगाधमवेमः ॥ त्वामिहैत्रमानिवेश्यरहस्ये निर्वृतिंनहिलभेमहिसर्वे ॥ १०१ ॥

विश्वेति । विश्वंपश्यन्तिविश्वदृश्वानिसर्वसाक्षीणिनयनानियेषांतेवंजुलायल स्तस्माद्वयमेवागाधंगम्भीरंत्वद्गुणांबुधिंत्वद्गुणसमुद्रमवेमःजानीमः । त्वद्गु णसमुद्रं ज्ञातुंनान्यस्यसामर्थ्यंविश्वदृश्वनयनत्वाज्ञाताद्दित्यर्थः । सर्वेवयमि हजैमीपाणिग्रहणलक्षणेरहस्येगोप्यार्थेएवंदूतत्वप्रकारेणत्वामनिवेश्यदूत त्वमप्राप्यनिर्वृतिंपरमंसुखंनहिनैवलभेमहिप्राप्नुमः । इहैकमितिपाठे एकंत्वांमनिवेश्यानियुज्येत्यर्थः । त्वत्सदृशोन्योनास्तिअतोदूत्येनियुज्यसे त्वंमकरिष्यसिचेत्तापदासामइतिभावः अयमेवक्रमातः । वयमपिगुणस

मुद्रमगाधमेवजानीमः । अतएवावगाहितुमसमर्थाइतिभावोवा । सर्वंद्रिभिरस्माभिस्त्वद्गुणसमुद्रतुल्योन्योराजगुणसमुद्रोनदृष्टइतिवा सर्वेइतिस्रोकक्तामपिसहचरवर्णनांद्योतयति दृश्वेतिदृशेःक्वनिप् ॥ १०१ ॥

शुद्धवंशजनितोपिगुणस्य स्थानतामनुभवन्नपिशक्रः ॥ क्षिप्तुरेनमृजुमाशुसपक्षं सायकंधनुरिवाजनिवक्रः ॥ १०२ ॥

शुति । शक्रःधनुरिववक्रःअजनिक्रूरःकुटिलश्चजातः ॥ किंभूतःशक्रोधनुश्चशुद्धवंशजनितोविशिष्टकश्यपकुलोत्पन्नोपिदृढवेणुजनितोपिच विवेकगुणस्यविवेकवीर्यौदार्यादेर्मौर्व्याश्चस्थानतामाश्रयं । अनुभवन्नाश्रयन्नपिआश्रयीभवन्नपिऋजुंशुद्धाशयंअवक्रंसपक्षंलोकपालांशजत्वाद्धीहविदोनाद्धासपक्षंमित्रंभैमीप्राप्तिरूपसमानसाध्यत्वादपिमित्रंपक्षसहितंसायकंनिवनलंक्षिप्नुःप्रेरयितुकामःप्रतारयितुकामस्त्यक्तुकामश्च ततसवंशजस्यगुणाश्रयस्यचवक्रत्वंविरुद्धमिति । अपिशब्दौविरोधद्योतकौ । अथाक्षियांधनुश्चापावित्यमरोक्तेर्धनुःशब्दःपुंलिंगोपि क्षिप्नुःत्रसिगृधीतिक्नुःतद्योगेनलोकेतिनषष्ठी ॥ १०२ ॥

तेनतेनवचसैवमघोनः सस्मवेदकपटंपटुरुच्चैः ॥ आचरत्तदुचितामथवाणी मार्जवंहि कुटिलेषुन नीतिः ॥ १०३ ॥

तेनेति । उच्चैरतितरांपटुःप्राज्ञःसेषवक्रोस्मादित्यादिचतुरःसनलःमघोनइन्द्रस्य तेनतेनपाणिपीडनमहंत्वामिहैवमनिवेश्येत्यादिवचसैवकपटंवेदस्मजानातिस्म । अथतदुचितांकपटयोग्यांवाणीमाचरत्जचे इन्द्रेणतथोक्तेपिनलःकथमुक्तवानित्यतआह हियस्मात्कुटिलेषुआर्जवमकापट्यं नीतिर्नभवतिकिंतुकपटिषुकपटिनैवभवितव्यमितिन्यायः । व्रजन्तितेमूढधियःपराभवंभवन्तिमायाविषुयेनमायिनइतिभारविणोक्तेः । नलेनापिकपटित्वमङ्गीकृतंयुक्तमित्यर्थः ॥ १०३ ॥

सेयमुच्चतरितादुरितानामन्यजन्मनिमयैवकृतानाम् ॥ युष्मदीयमपियामहिमानं जेतुमिच्छति

दृग्गोवितरितुं ॥ १०६ ॥

यद्दिति । येषांयुष्माकंमतौबुद्धावेवविमलायांनिर्मलायांदर्पणिकायां आदर्शेखलुनिश्चितं अखिलन्तत्त्वंयथार्थंकरणीयाकरणीयंवस्तुसम्मुखस्थंप्रत्यक्षंस्फुरद्रूपम् । तेपिईदृशाअपियूयंईदृशमेवंविधामज्ञातस्मैमह्यंकिंकथं वितरथेति ।तांकांयाआज्ञायस्ययस्मैवितरीतुंदातुंमदृशीयुक्तान योऽस्म्याः क्षामुक्तोतिसुन्दरश्चतस्यैनैमीदूत्यंकुर्वित्याज्ञांदातुंनैवयुक्तेतिभावः ॥१०६ ॥

यास्मियन्नामिहवरीतुमहोवो दूततांनुकरवाणिकथं वः ॥ ईदृशावमहतांबतजाता वञ्चनेममतृणस्य घृणापि ॥ १०७ ॥

यामीति । महांस्मिन्सनयेमार्गेवायांवरीतुमहंयामिगच्छामि अहोसौ पहासनाश्चर्येसम्बोधनेवा । वोयुष्मत्संबन्धिलद्विषयांदूततांपुनः कथं कथङ्कारंकरवाणि अपितुनकुर्याम् । ईदृशांदिक्पालानांमहतांमनुभव तांतृणस्यतृणप्रायस्यातिहीनस्यनलस्यमम वञ्चनेप्रतारणेविषयेघृणाकृपा जुगुप्सावानजातानोत्पन्नाबतखेदे महतांहिकृपयाभवितव्यं महद्भिर्मया नैवप्रतारयितुंयुक्तोमतुलघीयम् तस्यायोग्यत्वादित्यपिशब्दार्थः । कप टोक्तिश्च । महतामन्येषांसुराणांजातौसमाजेईदृशांपरप्रतारकाणांभवता मर्चनेविषयेतृणस्याल्पस्यममापिघृणाच अपितुअस्त्येवकिमुतमहतामित्य र्थः । अथचेदृशानांवञ्चकानांनमहतांसमासेनसाधूनांभवतांतृणस्या पिजातीपूजनेतृणजातीयमद्येपिपूजनेनमघृणाभवति भवद्भ्योपितृणजा तिरेवश्रेयसीतिममप्रतिभातीतिभावः ॥ १०७ ॥

उद्भ्रमामिविरहात्खलुयस्या मोहमेमिचमुहूर्तमहंयः ॥ ब्रूतवः प्रभवितास्मिरहस्यं रक्षितुंसकथमिदृगवस्थः ॥ १०८ ॥

उद्भ्रमामीति । योऽहंअस्यामैस्याःविरहान्मुहुः पुनःउद्भ्रमामिउन्मादयु क्तोभवामि पुनःमुहूर्तंक्षणमात्रंमोहंमूर्छांचएमिप्राप्नोमि । अन्याःदशा वस्थाःमयानुभूताः अधाधुनामूर्छोन्मादलक्षणेऽवस्थे अनुभूयेतेइत्यर्थः । ईदृगवस्थाद्वययुक्तः सोहंवोयुष्माकंरहस्यंरक्षितुंगोपायितुंअन्तःकरणेऽ वधारयितुंकथंप्रभवितास्मिशक्तोभवितास्मिब्रूतकथयत अपितुनकथंचि

दित्यर्थः । वाक्यार्थःकर्म । स्वान्तोरहस्यंगोप्तुं समर्थोनभवतिसर्वस्याग्रेक थयति । योपिमूकोलुर्मूर्खस्सननसिरहस्यंधारयितुंनशक्नोतिकिंतुविस्मर त्येवेति । दूत्ययोग्योनभवामीतिभावः ॥ १०८ ॥

यांमनोरथमयींहृदिकृत्वा यःश्वसिम्यथकथंसतद ग्रे ॥ भावगुप्तिमवलम्बितुमीशे दुर्जयाहिविदुषा विषयाहि ॥ १०९ ॥

यामिति । योऽहंमनोरथजर्योसंकल्परूपांयांभैमींहृदिकृत्वाश्वसिमिजीवा मि । सोऽहंदूत्याङ्गीकारादथअनन्तरंतदग्रेतस्याःपुरः भावानांसम्भस्वेदा दिसात्विकानांगुप्तिंगोपनमवलम्बितुंकर्तुंमीशेसमर्थोस्मिअपितुनकथंचित् हियस्माद्विदुषापिपण्डितेनापिरूपादयोविषयादुर्जयाः जेतुनशक्याः अली कायाअपियस्यांचिन्तनेनजीवामितस्याः साक्षात्कारेसात्विकाभावाः स्फु टनुत्पद्येरन्ततःकुतोयुष्मद्दूत्यचिन्तेति । अतोपीयमकामजानुचितेति भावः । स्वपिमीतिपाठेनिद्रांकरोमि ॥ १०९ ॥

यामिकाननुपमृद्यचमादृ क्वान्निरीक्षितुमपिक्षम तेकः ॥ रक्षितक्रजयचयाढचरित्रे पुंसिविश्वसितिं कुत्रकुमारी ॥ ११० ॥

यामिति । चअपरंमाहक्अतिसुन्दरःकःपुरुषः यामिकान्प्रहरजागरु कान् अनुपमृद्यअनिष्पीड्याविनाश्यअन्तःपुरस्यान्तांभैमींनिरीक्षितुमपि क्षमतेशक्नोतिनकोपीत्यर्थः । क्वांहिदूरतइत्यपिपाठार्थः । सुन्दरस्यया मिकदर्शनेनजविमान्तःप्रवेशोनघटतेइत्यर्थः । तर्हिशूरेणत्वयातेविमर्दनीया इत्याह । रक्षितालङ्कतस्यजयेनचण्डंदारुणंचरित्रंयस्यएवंभूतेपुरुषेकुमारी बालामुग्धङ्गीकोमलहृदया कुत्रकुतःविश्वसितिविश्वासम्प्राप्नोति । अपितु नकुतोपि एवंविधंचण्डमाकर्ण्यबालापलायिष्यतीत्यतोपिनमद्दूत्यंयुक्त मितिभावः । एवंविधेकुत्रपुंसीतिवा रक्षणार्थंयामोस्त्यस्येतियामिकः अ स्त्यर्थेठक् । कालवाचित्वाद्भवार्थेवाठञ् ॥ ११० ॥

आदधीचिकिलदातृकृतार्थं प्राणमात्रपणसीमय शोयत् ॥ आददेकथमहंप्रिययोतत् प्राणतःशतगु

णेनपणेन ॥ १११ ॥

आद्धीचिद्धति । प्राणमात्रंजीवितमेवपणस्तीसमूल्यविधिर्यस्यैवंविधंय द्यशः । आद्धीचिद्धीचिनामकवदान्यपर्यन्तंदातृभिः वदान्यैःकृतःअर्थो मूल्यंयस्यकिलश्रूयते यशःप्राणेभ्योधिकंमूल्यंनाईतीतियशीयेदधीच्यादि भिःप्राणाएवदत्ताःनत्वधिकंकिञ्चित् अहंतद्यशःप्राणःप्राणेभ्यःअतनुनोना तितरांअधिकेनप्रियया्नैमीलक्षणेनपणेनमूल्येनकथमाददे ऽङ्गीकुर्याम् । अ पितुनकथञ्चित् यद्यशेमूल्येनलभ्यतेतद्धनाकेनापिनगृह्यते अतोवाञ्छ यापिजीवाद्धिकस्यादेयत्वात् भवतांभैमीप्राप्यर्थैनयायत्नोनक्रियतेएवेति भावः । अतिधीजूयत्वयाप्राणास्तदधीचेरपिप्राणागृहीताकिंपुनः क्षत्रि यस्येतिभावः ॥ १११ ॥

अर्थनामयिभवद्भिरिवास्यै कर्तुमर्हतिमयापिभव त्सु ॥ भीमजार्थपरयाचनवाचे यूयमेवगुरवःकर णीयाः ॥ ११२ ॥

अर्थनेति । मयापिभवत्सुअस्यैभैम्यर्थंअर्थनायाञ्चाकर्तुनर्हतिवचिता । कैःकस्मिंन्निवभवद्भिर्मयीव । यथाभवद्भिर्मयिभैम्यर्थेयाञ्चाक्रियतेतथाम यापिभैम्यर्थंभवत्सुयथासामांकरिष्यतितथाभवद्भिरपिकर्त्तव्यमितिमत्वानो याच्यन्तइत्यर्थः । क्षत्रियस्यदातृत्वमेवयुक्तंनतुयाचकत्वमतआह । भीम जारूपोयोर्थःप्रयोजनंतत्रपरस्तत्परः याचनवाक्प्रार्थनप्रियंवचनंतस्मिन् यूयमेवगुरवःउपदेष्टारःकरणीयाः दिक्पालाअपिभूत्वायाचन्तेतर्हिमाद् शांकाकथा । भवतांचेदेतद्युक्तंतर्हिममापियुक्तमेव । गुरूपदिष्टमेवशि ष्यःकरोति । याचनवाचइतिपाठेप्रार्थनवचनाय अर्थनाशब्दस्यकर्तुंशब्द स्यचभाववचनत्वान्ममेत्यत्रानुक्तेकर्तरितृतीयानलोकेतिषष्ठीनिषेधात् । एवंभवद्भिरित्यत्रापि । कर्तुमित्यर्हतावुपपदेशकधृषेतितुमुन् । याचनेति भाषितपुंस्कः ॥ ११२ ॥

अर्थितांप्रथमतोदमयन्तींयूयमन्वहमुपास्यमया त ॥ ह्रीर्नचेद्व्यतियतामपिवद्वः साममापिसुत रांनतदस्तु ॥ ११३ ॥

अर्थितावति । मयायूयमन्वहंप्रतिदिनंउपास्यपूजांविधायप्रथममादा वेवदमयन्तीयदिअर्थितायाचिता, तर्हि भीयाधनंव्यतियतांअभिक्रमताम् सयिसांप्रतियाचनेनभैमीयाचनव्यत्ययंकुर्वतांवोयुष्माकंह्रीश्चेन्नास्तितर्हि मालज्जामसापिसुतरांमास्तुमाभूत् । अतोमयापिभवन्तोभैमींयाचितुंयो ग्याः ॥ यत्रोभयोःसमोदोष-परिहारोपिवासमः । नैकःपर्यनुयोक्तव्यस्ता दृगर्थेविचारणेतिन्यायात् । अप्रधानेदुहादीनामितिवचनादप्रधानकर्म णिअर्थिताइतिनिष्ठा । व्यतिहारेसत्यपिनगतीतिवक्तोनिषेधात्कर्तरीणूश ता ॥ ११३ ॥

कुण्डिनेन्द्रसुतयाकिलपूर्वं मांवरीतुमुररीकृतमा स्ते ह्रीडमेष्यतिपरंमयिदृष्टे स्वीकरिष्यतिनसाखलु युष्मान् ॥ ११४ ॥

कुण्डिनेति । कुण्डिनेन्द्रसुतयाभैम्यापूर्वंकिलआदावेवमांवरीतुंअङ्गीकृत मस्तिकिलश्रूयतेवा । साभैमीदूत्यर्थंगतेमयिदृष्टेसतिपरंकेवलंसात्त्विकभा ववशाद्व्रीडांलज्जांएष्यतिप्राप्स्यति युष्मान्खलुनिश्चयेननस्वीकरिष्यति मय्यनुरागवशान्ममप्रार्थीभवद्दूतकथाकर्णनमपिकुलस्त्यमितिभावः । व्री डाशब्दस्यपुंल्लिङ्गत्वंवामनाचार्यवचनात् पचंतोपि । व्रीडमावहमित्येत तिरघुवंशेपि । व्रीडादिवाभ्याशगतैरिविनाधेनशोकविप्रयोगदर्शनात्पुंस्त्वी कसंज्ञावेक्तः ॥ ११४ ॥

तत्प्रसीदतविधत्तनखेदं दूत्यमत्यसदृशंहिममेदम् हास्यतैवसुलभानतुसाध्यं तद्विधित्सुभिरनौपयि केन ॥ ११५ ॥

तदिति । हियस्मात्पूर्वोक्तप्रकारेणइदंदूत्यंममेअत्यसदृशमतितरामनु चितंतत्तस्मात्प्रसीदतमनोपरिप्रसन्नाभवत खेदंअनेनास्मदीयंवचोनंकृत मितिखेदुःखंमाकुरुत अनौपयिकेनानुपायेनतद्दूत्यंविधित्सुभिःविधातुमि च्छद्भिःभवद्भिर्हास्यतैवउपहास्यत्वमेवसुलभंननुभैमीप्राप्तिरूपंसाध्यंसुलभं मदन्येनसाध्यंसाधनीयमित्यर्थः ॥ ११५ ॥

ईदृशानिगदितानितदानीं माकलय्यसनलस्ययथः

लारिः ॥ शंसतिस्मकिमपिस्मयमानःस्वानुगाननन
विलोकनलोलः ॥ ११६ ॥

शंद्रृशानिति । समलारिरिन्द्रस्तदानीतस्मिन्समयेनलस्यईदृशानियू
र्वोक्तानिगदितानिवचनान्याकलय्यविचार्यउपहासार्थंकिमपि स्मयमानः-
ईषद्धसन्शंसतिस्मवभाषे किंभूतः । अङ्गीकृतमपिपुनरनेनत्यज्यतइतिप
श्यतिइतिज्ञापनार्थंस्वानुगानांअग्न्यादीनामाननविलोकनेलोलः ॥ ११६ ॥

नाभ्यधायिनृपतेभवतेदं रोहिणीरमणवंशभुवैव ॥
लज्जतेनरसनातववाम्या दर्थिषुस्वयमुरीकृतका
म्या ॥ ११७ ॥

नेति हेनृपतेनल रोहिणीरमणस्यचन्द्रस्यवंशेभवतिइतिभूस्तेनैवपुरुषे
णैवभवता इदंसेयस्तुभ्रतरतेत्यादिकुण्डिनेन्द्रसुतयेतिपर्यंतंनाभ्यधायिनो
क्तम् । चन्द्रकुलोत्पन्नोह्यङ्गीकरोत्येव अङ्गीकृतंचपरिपालयत्येवत्वयातु
सोमवंशोत्पन्नेनाप्यङ्गीकृतंसोमवंश्येनेवनपरिपाल्यत इत्यर्थः । अर्थिषु
याचकेषुजीवनावधिमिनमप्यधिकंचेत्यादिनास्वयमात्मनैव उरीकृतंअङ्गीकृ
तं काम्यंयाचकाभिलषणीयंयया एवंविधा तवरसनाजिह्वा वाम्याद्वक्रत्वाद
ङ्गीकृतस्यापरिपालनाद्धेतोः नलज्जतेलज्जांनप्राप्नोति । अपित्वङ्गीकृतत्या
गाल्लज्जांप्राप्तुमुचिताअनयाङ्गीकृतंत्वयापरिपालनीयमेवेत्यर्थः । अथवेदं
रोहिणीगौस्तस्यारमणोबलीवर्दस्तत्कुलोत्पन्नेनबलीवर्देनेव त्वयाणोक्तं
अपितुतथैवोक्तम् । योह्युक्तं नकरोतिसगोसदृशोमूर्खःपशुश्च । त्वमपितता
दृश इत्यर्थः । बलीवर्दोपिजिह्वयाभक्षितस्यतृणादेर्वमनान्नलज्जते । ए-
वंजिह्वावाम्यान्नलज्जते । तस्मात्त्वमपिबलीवर्दोसीत्युपहासः । वामस्य
भावोवाम्यंष्यञ् । पक्षेवमनंवमिर्वमिरेवाम्यंचातुर्वर्ण्यादित्वात्ष्यञ् ११७ ॥

भङ्गुरंनवितथंनकथवा जीवलोकमवलोकयसी
मम् ॥ येनधर्मयशसीपरिहातुं धीरहोचलतिवी
रतवापि ॥ ११८ ॥

भङ्गुरमिति । हे वीरत्वंइमंजीवलोकंप्राणसङ्घं भङ्गुरंस्वयमेवनश्वरंकथंन
अवलोकयसिबुध्यसेवितथअलीकंवाकथंनबुध्यसेअपितु त्वयाएवंज्ञेयम्अ

हंजानामीत्यतआह । येनतवबोधलक्षणेनकारणेनधार्मिकस्य।तिथीरस्या पितवधीर्बहिरंकुरःअविलयेअपिधर्मयशःस्वयान्हातव्येइत्यर्थः ११८॥

कःकुलेजनिजगन्मुकुटेवः प्रार्थकेप्सितमपूरिनयेन ॥ इन्दुरादिरजनिष्टकलङ्की कष्टमत्रसभवानपिमाभूत् ॥ ११९ ॥

कइति । येनप्रार्थकेप्सितंयाचकाभिलषितंनअपूरिनपूरितम् । एतादृक् कःपुरुषोजगन्मुकुटेलोकालङ्कारभूतेवकुलेअजनिप्रसूतः । अपितुनकोपि अत्रतुकुलेआदि.वंशादिरिन्दुः कलङ्कीअजनिष्टजातःकष्टं सप्रसिद्धोभवान पिकलङ्कीमाभूत् । अङ्गीकृतत्यागात्त्वमपिकलङ्कीभविष्यसितत्तबोभाभ्या मपिकुलंमलिनीकृतंस्यात् इत्युपहासः । तस्माद्यथातथाकुलस्यकलङ्कोन भवति तथाकार्यमितिभावः ॥ ११९ ॥

पापदृष्टिरपियामुखमुद्रा याचमानमनुयाचनतुष्टिः॥ त्वादृशस्यसकलःसकलङ्कः शीतभासिशशकःपरमंकः ॥ १२० ॥

पूर्वंद्वाभ्यामपिकुलंकलङ्कितंमित्युक्तं इदानींत्वयैवेत्याह । पापेति । याचमानंयाचकमनुलक्षीकृत्य यापापदृष्टिःअनादरदर्शनंअदर्शनंवा याच मुखमुद्रामौनं याचनमनुतुष्टिरसन्तोषःसकलःसमस्तः त्वादृशस्यातिवदा न्यस्यवीरस्यकलङ्कंअपयशः । शीतभासिचन्द्रेपरंकेवलंशशकःअङ्कचि ह्नम् । चन्द्रेकलङ्कोनकिन्तुचिह्नंशशस्तस्मात् पापदृष्ट्यादिनकार्यमिति भावःशशकअल्पेतिकिम् ॥ १२० ॥

नाक्षराणिपठतांकिमपाठि विस्मृतोथभवतापठितोपि ॥ इत्यमार्थिचयसंशयदोलाखे लनंखलुचकारनकारः ॥ १२१ ॥

नाक्षराणीति । हेनल अक्षराणिबाल्येमातृकाःपठतःत्वयानकारःनेत्य यंशब्दः नापाठिकिंनपठितःकिम् । अथवा पठितोपिनकारःविस्मृतःन स्मृतःकिम्नकारःइत्यमेवंअर्थिचयस्ययाचकसमूहस्यसंशयएवदोलाद्धिका वलम्बना तस्यांखेलनंक्रीडनंनकारःखलुप्रेहायांमित्रयेवा । त्वयापूर्वया

कामाभिलाषोनेतिकदापिनोक्तं अद्यापिनवक्तव्यमितिभावः ॥ १२१ ॥

अब्रवीत्तमनलः क्षनलेदं लब्धमुज्जृम्भसियशः शशिकल्पम् ॥ कल्पवृक्षपतिमर्थिनमेनं दायकोपिशतमन्युमिहान्यः ॥ १२२ ॥

अब्रवीदिति ॥ अनलोग्निस्तंनलंअब्रवीत् । हेनलत्वंशशिकल्पंचन्द्रतुल्यंइदमेवंविधंलब्धं करस्थितंयशः क्रहेतोः उज्जृम्भसित्यजसि । इहक्षिम् । इहभूलोकेअन्योनलादन्यः कोपिकल्पवृक्षस्यपतिशतमन्युंशतक्रतुमेनंपूर्वोक्तप्रकारेणार्थिनंयाचकंनापनप्राप्तवान् । सर्वाभिलाषकरोयः कल्पवृक्षोपियद्यशः यच्छतयज्ञकारीतमिन्द्रंयाचकंनलएवप्राप्तवान् नान्यइतियशोमहत्त्वमितिभावः । कल्पवृक्षोपियन्मनोरथंपूर्णंकर्तुंनसमर्थोभूत्त्वन्तुसमर्थः शतमन्युरितिपात्रंचसूचितम् ॥ १२२ ॥

नव्यहन्यतकदापिमुदंयः स्वःसदामुपनयन्नभिलाषः ॥ तत्पदेत्वदभिषेककृतान्तः सत्यजत्वसमतामदमद्य ॥ १२३ ॥

नेति ॥ अभीष्टसाधनात्स्वःसदादेवानांमुदंहर्षमुपनयन्नयत्योभिलाषःकदापिकेनापिनव्यहन्यतनव्यर्थीकृतः तत्पदेअभिलाषस्थानेत्वदभिषेकंतवाभिषेकंस्वाभीष्टसाधनायकृतांतोस्त्वकंसोभिलाषः तादृशःकामकरणसमर्थः अन्योनविद्यतइत्यसमतामदंअचास्यविपर्ययंगवेम् अद्यत्यजतुकामपूरणेत्वमेवसमर्थ इत्यर्थः । व्यहन्यतकर्मणिलङ्कर्मकर्त्तरिवा ॥ १२३ ॥

अब्रवीदथयमस्तमहृष्टं वीरसेनकुलदीपतमस्त्वाम् ॥ किमप्यभिभूषतितत्किं चन्द्रवंशवसतेःसदृशंते ॥ १२४ ॥

अब्रवीदिति ॥ अथयमः भैमीप्राप्तिविघ्नसम्भावनयाअहृष्टंदुःखितंतंनलंअब्रवीत् । हे वीरसेनकुलस्यदीपप्रकाशकनल तमोभैम्यप्राप्तिसम्भावनाजन्यंदुःखंयत्किमपिअनिर्वाच्यंवा अभिभूषयतिअभिभवितुमिच्छतितच्चंद्रवंशोत्पन्नस्यतेतवकिंसदृशंउचितंकिंत्वयुक्तम् । चन्द्रवंशेत्पन्नोहिप्राणानपिददाति तदुत्पन्नेनत्वयापितथैवभवितव्यं नत्वन्यथेतिभावः । य-

यच्च दीपरूपत्वादन्धकारसमिवृत्तपतिचन्द्रवंशवसतेस्तेकिमुचितं अपितु अयुक्तंदीपस्यतमसोभिन्नवः युक्तस्तत्रापिचन्द्रवंशवसतेःचन्द्रस्यान्धकारे-णाभिभवोनयुक्तः अतस्तद्वंशोत्पन्नस्यतवापि । तस्मात्पराभवोनयुक्त इत्युपहासः ॥ १२४ ॥

**रोहणःकिमपियःकठिनानां कामधेनुरपियापशुरेव ॥ नैनयोरपिवृथाभवदर्थी हाविधित्सुरसिवदसकिमेतत् ॥ १२५ ॥**

रोहिणइति । कठिनानांनिष्ठुराणांपाषाणादीनांमध्येयःकिमपिलोकोत्तरोनिष्ठुरोरोहणोपिदूरोद्रिःमेरुः । अथचनिष्कृपणानांमध्येलोकोत्तरोकृपणोयोविदुराद्रिरचलःयापिकामधेनुःसोपिपशुरेवगौरेव । अत्रयोरेनयोःरोहणकामधेन्वोरपिसंबंधीअर्थीयाचकःवृथानिः फलोनाभवत्किन्तुसफलोजातः एनयोर्विषयेवा । हाकष्टम् । हेवत्सकिमेतदर्थिप्रातिकूल्यंविधित्सुःचिकीर्षुरसिअचेतनेषुकृपणावधिः कठिनावधिश्चरोहणःचेतनेषुपश्वावधिर्नृणांवधिश्चकामधेनुः ताभ्यामपिअर्थिनेऽभीष्टंदीयतेस्त्वंतुनृषुचितःबुधोपिततोदेयमेवइतिभावः । किमितिसामान्यनिर्देशान्नपुंसकत्वंएतयोरन्वादेशेएनादेशः । रोहणोवैदूर्यपर्वतोवा ॥ १२५ ॥

**याचितश्चिरयतिक्वनुधीरः प्राणनेक्षणमपिप्रतिभूःकः ॥ शंसतिद्विनयनीदृढनिद्रां द्राग्निमेषमिषघूर्णनपूर्णा ॥ १२६ ॥**

याचितइति । धीरोयाचितःसन्क्वनुकुतश्चिरयतिकालविलंबंकरोतिअपितुन । कुतःक्षणमपिमुहूर्तमात्रंप्राणनेजीवनेकःप्रतिभूःलग्नकः अपितुनकापि । अथचकःब्रह्माप्रतिभूःविध्यधीनंजगत्कःब्रह्माप्रतिभूरितिकाकुर्वा । तत्कुतः द्राक्झटितिनिमेषमिषेणनेत्रसङ्कोचव्याजेनघूर्णनेनतन्द्रापूर्णाद्विनयनीदृढनिद्रांमरणंकथयनिद्राकदृढनिद्रमितिवा । यावत्ताकालेनपुनरपिनिमेषोभवतितावत्येवकालेमरणं भवतीतिनिमेषतुल्यं मरणंतस्माद्विदुषात्वयाअविचारितंशीघ्रमेवदातव्यम् । मरणसमीपप्राप्तिभयादृश्यतिनिद्रितोपिघूर्णते ॥ १२६ ॥

अभ्रपुष्पमपि दित्सति शीतं सार्थिनाविमुखतायदि भाजि ॥ स्तोककस्य खलु चञ्चुपुटेन म्लानिरुल्लसति तद्घनसङ्घे ॥ १२७ ॥

अभ्रेति । स्तोककस्य चातकस्य अर्थिना याञ्चकेन चञ्चुपुटेन सा प्रसिद्धा विमुखता पराङ्मुखत्वं यद्भाजि आश्रिता तत्खलु तस्मादेव हेतोः तस्मादिव हेतोरित्युत्प्रेक्षा वा । म्लानिः चातकवैमुख्यजनिता कीर्तिः घनसंघे मेघसमूहे उल्लसति शोभते, किंभूते घनसंघे शीतं शीतलम् अभ्रपुष्पं जलं दित्सति दातुमिच्छति प्रियचातकेन याचितजलेऽप्यविलम्बान्मेघानां श्यामत्वं यशोजातमिति अर्थः । अथवा स्तोक एव स्तोककः प्रतिनिकृष्टः । तस्यार्थिना मुखेन पराङ्मुखत्वं यद्दाश्रितं तस्मान्मेघतुल्या पुरुषे म्लानिरुल्लसति यतः शीतलं वारि यद्वा अभ्रपुष्पमपि खपुष्पतुल्यमपि वस्तु दित्सति न ददात्येवं भूतेषु रूपेणैव जनस्य कीर्तिश्च प्रकाशते । अतिनिकृष्टस्याप्यर्थिनः पराङ्मुखत्वेन तस्याश्च मा शीघ्रमेव देयमिति भावः । यद्यपि विमुखतया मेघे म्लानिर्भवति किंपुनरन्यत्रेति भावः । तस्मादिन्द्रादीनामसत्वतो विमुखत्वेऽपयशो भावी इति किंवक्तव्यमिति भावः । मेघपुष्पं घनरसस्त्वमरः ॥ १२७ ॥

ऊचिवानुचितमक्षरमेनं पाशपाणिरपि पाणिमुदस्य ॥ कीर्तिरेव भवतां प्रियदारा दाननीरसरमौक्तिकहारा ॥ १२८ ॥

ऊचिवानिति ॥ पाशपाणिरपि वरुणोऽपि पाणिमुदस्योद्यम्य एनं नलं उचितं अक्षरं वचनं ऊचिवान् । इतिकिं । भवतां भवादृशां राज्ञां दाने क्रियमाणे नीरसरः जलप्रवाहः एव मौक्तिकहारो यस्याः सा कीर्तिरेव प्रियदाराः प्रेयस्यः स्त्रियो न तु राजकन्याः अतः कीर्तिरेव त्वया ऽर्जनीया नाकीर्तिः पाणिमुदस्येति याचकजातिः ॥ १२८ ॥

चर्म वर्म किल यस्य न भेद्यं यस्य वज्रमयमस्थि च तौ चेत् ॥ स्थायिनाविह न कर्णदधीची तन्न धर्ममवधीरय वीर ॥ १२९ ॥

चर्मेति ॥ यस्य कर्णस्य चर्म त्वक् न भेद्यं अभेद्यं वर्म कवचं किल श्रुतौ । येन

कवचनिर्माणार्थंत्वगूदत्ता । यस्यचास्थिवज्रमयंवज्रनिर्माणार्थंयेनदधीचिनास्वीयमस्थिदत्ततावेवंविधौवदान्यौकर्णदधीचौअपिइहलोकेचेत् । यस्मात्स्यापिनौनकिंतुमृतावेव तत्तस्मात्त्वंवीरप्राधान्यंधनेनावधीरयनांबभासीः । धर्मएवंस्थिरतरः । नतुरूपादिकंदेहविशेषः ॥ १२९ ॥

अद्ययावदपियेननिबद्धौ नप्रभूविचलितुंबलिविन्ध्यौ ॥ आस्थितावितथतागुणपाशः स्त्वादृशास्विदुपादुरपाशः ॥ १३० ॥

अद्येति । येनसत्यप्रतिज्ञत्वगुणलक्षणपाशेननिबद्धौबलिविन्ध्यौदैत्याचलौअद्ययावदपि एतावन्तमपि कालंविचलितुंप्रतिज्ञातमतिवर्तितुंनप्रभूसमर्थौनजातौ । किन्तुताभ्यामङ्गीकृतंयद्द्वयेनप्रतिपालितं । एकःपाताले स्थितः । अन्यश्चयद्द्वयेनवर्धेतइत्यर्थः । स आस्थितस्याङ्गीकृतस्यावितथतासत्यतातल्लक्षणोगुणःसूत्रंचतल्लक्षणःपाशोरज्जुः । सत्यवादितागुणःत्वादृशेनत्वद्विधेनविदुषापण्डितेनदुरपासोदुर्लङ्घ्यः । अङ्गीकृतंपरिपालनीयमित्यर्थः । दैत्यपाषाणाभ्यामपिअङ्गीकृतंसत्यंकृतंअतस्त्वयाप्यङ्गीकृतंनिर्वोढव्यमितिभावः ॥ १३० ॥

प्रेयसीजितसुधांशुमुखश्री र्यांनमुञ्चतीदिगन्तगतापि ॥ भङ्गिसंगमकुरङ्गदृगर्थे कःकदर्थयतितामपिकीर्तिम् ॥ १३१ ॥

प्रेयसीति । प्रेयसीप्रियतमा तथाजितातिरस्कृताउज्ज्वलत्वात्सुधांशुमुखानांसुधांशुश्चन्द्रस्तत्प्रमुखानान्तारकादीनांश्रीःयस्यांएवंविधायाकीर्तिःदिगन्तगतापिदिक्प्रान्तंगतापिनमुञ्चतिनत्यजति । तामेवंविधामपिकीर्तिंभङ्गीविनश्वरःसङ्गमोयस्याःसा भङ्गिसङ्गमाएवंभूताकुरङ्गदृक्मृगाक्षीतस्यार्थेनिमित्तम् । अथच कुत्सितोरङ्गोरचनायस्याएवंविधादृक्यस्याःस्तत्कृतेकः कदर्थयतिपीडयति । अपितुनित्याङ्कीर्तिंविहायचञ्चलांप्रेयसींकोपिनवाञ्छति तस्मात्कीर्तिरेवत्वयाप्युपार्जनीयेतिभावः । अथच कलिप्रजावभङ्गिसङ्गमत्वंजैन्याःसूचितम् । अन्योपिदुष्टसपत्न्याःकृतेगुणवतींपत्नींनपीडयति । स्त्रियःकृतेकीर्तिर्नत्याज्याइत्यर्थः । कुत्सितोदुः-

स्वरूपोर्थःकदर्थः कोःकदादेशेअर्थंआद्यपिमतुपिचतत्करोतीतिणिचिपा विष्टवदितिटिलोपेसुतुक्लोपेचपीडयतीतिसात्यथार्थः । एवंकदर्थनार्थत येत्यादावपिज्ञेयम् ॥ १३१ ॥

**यान्वयंप्रतिपरेर्थयितार स्तेपि यंवयमहोसपुन स्त्वाम् ॥ नैवनःखलुमनोरथमात्रं शूरपूरयदिशो पियशोभिः ॥ १३२ ॥**

यानिति । परेन्येपुरुषाः यानस्मान्प्रत्युद्दिश्यवरमभीष्टमर्थयितारः या चनशीलाः वरमुद्दिश्यास्मानर्थयितारइतिवा तेपिवयंत्वामर्थयितारः अहोआश्चर्ये येन्यस्मैवरंदातुंसमर्थाः तेपिवयंतवयाचकाजाताः सएवं भूतस्त्वंपुनःशूरः दानशूरोनःखलुनिश्चितंनोस्माकं मनोरथमात्रंकेवलं मनोरथंपूरयपरिपूर्णंकुर्वितिनैव किंतुइन्द्रादयोपियस्यार्थिनोजाताइति यशोभिर्दिगन्तानपिपूरय अस्मन्मनोरथपूरणेन तवमहतीकीर्तिर्भविष्य तीतिभावः । यान्परमितिपाठेअन्येयानस्मान् प्रतिपरंकेवलंअर्थयितारो नतुदातारइतिभावः । अर्थयितारःताच्छील्येतृन् ॥ १३२ ॥

**अर्थितांत्वयिगतेषुसुरेसु म्लानदानजनितोरुयशः श्रीः ॥ अद्यपाण्डुगगनंसुरशाखी केवलेनकुसुमेन विधत्ताम् ॥ १३३ ॥**

अर्थितामिति । सुरशाखीकल्पतरुः सुरेषुदेवेषुत्वयिविषयेअर्थितांया चकतांगतेषुप्राप्तेषुसत्सु म्लानाविनष्टप्रायादानजनिता स्वीयासहजाबाच र्वीमहतीयशःश्रीर्यस्यैवंभूतःसन् अद्यकेवलेनकीर्तिरोहितेन कुसुमेनपु ष्पेणाकृत्वागगनंपाण्डुश्वेतविधत्तांकरोतु एतावन्तंकालंकीर्तिपुष्पाभ्यांश्वे तंकृतंत्वयाकीर्तेरपहृतत्वात्केवलेन पुष्पेणेतिभावः ॥ १३३ ॥

**प्रवसतेभरतार्जुनवैन्यवत्स्मृतिधृतापिनलत्वमभी ष्टदः ॥ स्वगमनाफलतांयदिशङ्कसे तदफलंनिखिलं खलुमङ्गलम् ॥ १३४ ॥**

आस्तांतैवसुलभ्यानतुसाध्यं इत्यस्योत्तरमाह प्रवसतइति । हेनलभरता र्जुनवैन्यवत् भरतः शाकुंतलेयःअर्जुनःकार्तवीर्यःवैन्यः पृथुस्तद्वत्स्मृत्यापि

तोगोचरःस्मृतइत्यर्थः । एवंभूतोपिप्रवसतेदेशांतरगामिनेपुरुषायाभीष्टं द दातीत्यभिष्टदःसत्वंस्वगमनाफलतां स्वगमनस्यनैष्फल्यंयदियां हिशङ्कसे संभावयसितर्हि निखिलंसमस्तं वैन्यादिस्मरणलक्षणंमङ्गलंशकुनादित्व दृष्टात्तेनखलुनिश्चितंअफलंनिष्फलं वैन्यंपृथुमित्यादीनांस्मरणस्यापि वैय र्थ्यप्रसङ्गात् स्वगमनवैफल्यंत्वयानाशङ्कनीयं अतोगच्छेत्यर्थः । भरता दिवत्त्वमपीतिवा भरतादेरभ्यर्हितत्वात्पूर्वनिपातः ॥ १३४ ॥

इष्टंनःप्रतितेप्रतिश्रुतिरभूदद्यस्वराल्हादिनी धर्मा
र्थासृजतांश्रुतिप्रतिभटीकृत्यान्विताख्यापदाम् ॥
त्वत्कीर्तिः पुनतीपुनास्त्रिभुवनंशुभ्राद्वयादेशनाद्द्र
व्याणांशितिपीतलोहितहरिन्नामान्वयंलुम्पतु१३५

इष्टमिति । हेनलनोस्माकंइष्टंवाञ्छितंप्रत्युद्दिश्यस्वराल्हादिनीअस्व दाल्हादनायस्वर्गानन्ददायिनी स्वरेणाङ्गीकारसूचकनघुरस्वनेन वानन्द दायिनीतयाधर्मार्थोधर्मप्रयोजनिकायातवप्रतिश्रुतिः जीवितावधिकिम प्यधिकंचेत्यादिकाप्रतिज्ञाभूत्जाता तांप्रतिश्रुतिंअद्यइदानींसत्यत्वेन श्रु तिप्रतिभटीकृत्यवेदसदृशीकृत्वा अन्वितंश्रुतेः प्रतिभटाप्रतिश्रुतिरितिसा र्थकं आख्यापदंसंज्ञापदंयस्याः एवंभूतांकुरुसत्यांसृजेत्यर्थः। श्रुतिप्रतिभट त्वेहिप्रतिश्रुतिशब्दःसार्थकोभवति सत्यत्वेनस्वीयवचनंश्रुत्यन्तरंकुर्वित्य र्थः । अङ्गीकृतंपरिपालयेतिभावः । पुनःप्रतिज्ञासिद्धौसत्यांत्रिभुवनंत्रि लोकींपुनतीपुनाना । अथवाउज्ज्वलांकुर्वाणात्वत्कीर्तिः शुक्लस्यश्वेतवर्ण स्यअद्वयंअद्वैतन्तस्यादेशनात्करणाद्द्रव्याणांवस्तूनां शितिपीतलोहितह रितांकृष्णगौररक्तनीलानांवर्णानांनामसञ्ज्ञा तस्यान्वयःसंबन्धःतलुम्पतु विनाशयतु सर्वस्यत्रिलोकस्यश्वेतीकरणात्कृष्णादिवर्णाभावोऽभवत्वित्यर्थः। प्रतिज्ञातपरिपालनात्लोकत्रयेपि तवअतिनिर्मलंयशः प्रसरिष्यतीतिभा वः । कर्मप्रतिपादिकाश्रुतिरपिइष्टंयागमुद्दिश्यप्रवर्त्तते । स्वरैःउदात्ता दिभिः अकारआद्योयेषांतेआद्याःस्वराःअथःकर्मफलभूताआद्यःप्रथमभो क्तव्यःस्वःस्वर्गःतेनानन्ददायिनी । तथाचोदनालक्षणोर्थोधर्मइतिवाक्यप्र तिपादितस्यधर्मस्यवेदैकगम्यत्वोक्तेः धर्मार्थोभिधेयवाक्यार्थोवायस्याःसा धर्मप्रतिपादिनी । तथाश्रूयतइतिश्रुति रित्यन्वितमनुगतार्थंनामपदंय

स्याः एवंभूताच । अथच प्रतिश्रुधिः प्रतिवचनरूपं अस्तु श्रौषडित्यादिवा क्वंसापिइष्टंयागंप्रतिभवति स्वरैरुदात्तादिभिराल्हादिनीयाभवंति । अथचत्वत्कीर्तिरूपाब्रह्मप्रतिपादिकाश्रुतिःत्वयाकीर्त्यमानावावेदान्तश्रुतिः श्रवणमननादिद्वारात्रैलोक्यपवित्रंकुर्वाणा । यद्वारजः सत्वतमरूपेभ्यस्त्रिभ्योगुणेभ्योभवतीतित्रिभ्योभूरुत्पत्तिर्यस्येतिवा त्रिभूः स्वाद्यवस्थात्रयसहितत्वमितियावत् । तच्चतद्भुवनंचातिगहनंसंसाराख्यंपृथग्वापदं । निवृत्तिद्वारापुनानाशुभ्रस्यातिनिर्मलस्यनिर्दोषस्यब्रह्मणोद्वैतस्योपदेशात् । भव्यानांद्रव्यपदार्थानांकृष्णपीतादीनां सम्बन्धंलुम्पतीयाचारंभणमिति श्रुतिरेकमेवाद्वितीयंब्रह्मेत्यादि श्रवणाद्घटादेर्मिथ्यात्वसाधनांकाकादिविकारंनिराकरोतीतिध्वनिः । धर्मोधर्मोमितिक्वचित् इष्टंच्छायामिति अत्यायजेवकर्नेपिभावेचक्तः । यजेः संप्रसारणंचत्वष्टुत्वेचइष्टमिति अमरादयः सर्वेपिव्याचक्षते । इष्टियोगेच्छयोरित्यादिनातत्तुशिष्टप्रयोगाद्बुद्धासव्यम् । विशेषस्तुग्रन्थविस्तरभयान्नलिख्यते । इष्टमित्येवपाठः साधीयानित्यलम् ॥ १३५ ॥

**यंप्रासूतसहस्रपादुदभवत्पादेनखञ्जः कथं सच्छायातनयः सुतः किलपितुः सादृश्यमन्विच्छति ॥ एतस्योत्तरमद्यनः समजनि त्वत्तेजसांलङ्घनैः साहस्रैरपिपङ्गुरङ्घ्रिभिरभिव्यक्तिभवद्भानुमान् १३६**

यमिति। सहस्रपात्सहस्रचरणोऽथचसहस्रकिरणः सूर्योयंप्रासूतप्रसूवान्सच्छायानाम्न्याः पत्न्याः तनयः सुतः पुत्रः शनैश्चरः पादेनचरणेनपङ्गुः कथमुदभवत्जातः सहस्रचरणस्यपुत्रेणसहस्रचरणेननभवितव्यंअस्यतुनएकोपीति। किलयस्मात्सुतः पितुः सादृश्यमन्विच्छतिमाप्नोति कारणगुणाहिकार्यगुणानारभन्तेइतिन्यायात् तस्माच्छनैश्चरस्यएकोपिपादोनास्तीत्येतस्यनोस्मदीयप्रश्नस्यअद्यभानुमानुत्तरंसमजनिजातः किंकुर्वन्त्वत्तेजसांलङ्घनैरतिक्रमविषयैःसाहस्रैः सहस्रसङ्ख्याकैरपि अङ्घ्रिभिः चरणैः अथवाकिरणैःपङ्गुश्चरणरहितः अभिव्यक्तोभवन्प्रकटीभवन् अतःपङ्गुः पितुः पङ्गुत्वात्पुत्रस्यापिपङ्गुत्वंयुक्तमेवेत्यर्थः । त्वत्तेजः सूर्यतेजसोप्यधिकंतस्मात्त्वयाअस्मदिष्टंसाधनीयमितिभावः । पादारश्म्यंघ्रितुर्यांशाइत्यमरः । सहस्रंपा

त्संख्यासुपूर्वस्येतिपादस्यान्त्यलोपः। पादेनखञ्जो ऽङ्घ्रिभिःपङ्गुरितियेना-ङ्गविकारइतितृतीया। साहस्रैःतदस्यपरिमाणमित्यर्थेशतमानविंशतिक सहस्रेत्यण् ॥ १३६ ॥

इत्याकर्ण्यक्षितीशस्त्रिदशपरिषदस्ता गिरश्चाटुग
र्भावैदर्भीकामुकोपिप्रसभविनिहितंदूत्यभारंबभा
र ॥ अङ्गीकारगतेस्मिन्न मरपरिवृढःसंभृतानन्द
मूचे भूयादन्तर्द्धिसिद्धेरनुविहितभवच्चित्तताय त्रत
त्र ॥ १३७ ॥

इत्याकर्ण्येति । क्षितीशोराजा वैदर्भीकामुकोपिसन् प्रसभंविनिहितं बलादारोपितंदूत्यभारंदूत्यलक्षणंभारंबभार । किंकृत्वाश्चाटुपूर्वीक्तप्रका रेणउपकारस्यापिकारणात् चाटुगर्भाःप्रियोक्तियुक्तास्त्रिदशपरिषदः देवसभायास्ताःपूर्वोक्ता गिरःवाणीः आकर्ण्यत्रिदशपरिषदःसकाशाद्वा। अन्योपिबलात्निहितंभारंदुःखेनवहति । अस्मिन्नलेअङ्गीकारगतेप्राप्ते सतिकरिष्यामीतितेनाभ्युपगतेसति अमरपरिवृढःदेवप्रभुरिन्द्रःसम्भृतान न्दयथातथातंनलंप्रतिइत्यूचे । इतिकिम् । अन्तर्द्धिसिद्धेःअन्तर्धानवि-द्यासिद्धेः यत्रतत्रसर्वत्रदेशेकालेच अनुविहितमनुसृतंभवच्चित्तंययातस्याभावःअनुविहितभवच्चित्तताकार्यसिद्धिर्भूयात् । यत्रादृश्योभवितुमिच्छसि तत्रान्तर्द्धिसिद्धिर्भूयात् यत्रनेच्छसितत्रमाभूयात् । यामिकाननुपमृद्येत्या दिपरिष्कृतमनेन ॥ १३७ ॥

श्रीहर्षंकविराजराजिमुकुटालङ्कारहीरःसुतं श्रीही
रःसुषुवेजितेन्द्रियचयंमामल्लदेवीचयम् ॥ तस्य
श्रीविजयप्रशस्तिरचनातातस्यनव्येमहा काव्ये
चारुणिवैरसेनिचरितेसर्गोगमत्पञ्चमः ॥ १३८ ॥
पुरुहूतकपटोनाम पञ्चमः सर्गः समाप्तः ॥

श्रीहर्षमिति। पूर्वार्धन्तुपूर्ववदेव । श्रीविजयप्रशस्तिनाम्नः रचनायोग्य-न्यस्ततातस्यजनकस्य । सापियेनरचिताइत्यर्थः नव्ये नूतनेप्रमेयेचारुणि योज्ञत्तेपञ्चमःपञ्चानांपूरणः सर्गः समाप्तः ॥ ॥ ॥ ॥ ॥ ॥

# अथ नैषधीयचरिते षष्ठोसर्गः

## ॥ प्रारभ्यते ॥

दूत्यायदैत्यारिपतेःप्रवृत्तो द्विषांनिषेद्धानिषधप्रधानः ॥ सभीमभूमीपतिराजधानीं लक्षीचकाराथरथस्यदस्य ॥ १ ॥

श्रीगणेशायनमः ॥ दूत्यायेति । अथदूत्याङ्गीकारादनन्तरंदैत्यारयः देवास्तेषांपतिरिन्द्रः तस्यदूत्यायदूतकर्मणेप्रवृत्तःउद्युक्तः द्विषांनिषेद्धापरन्तपःसःनिषधप्रधानःनिषधदेशानामधिपः भीमनामकभूमीपतिः राजा तस्यराजधानींकुण्डिनाख्याम् । रथस्यस्पदोजवस्तस्यलक्षीचकारतांप्रतिययावित्यर्थः चतुर्णांदूत्यकरणेप्रवृत्तत्वादपिप्राधान्यादिन्द्रोपादानम् । इन्द्राद्युपकारार्थंप्रवृत्तःस्वयंपरन्तपश्चेत्यनेन भीमस्यभयानकस्यापिराज्ञोनगरींप्रतिगमनेसामर्थ्यं सूचितम् । प्रधानशब्दःक्लीबे । निषेद्धेतितृच् ॥ १ ॥

भैम्यासमंनाजगणद्वियोगं सदूतधर्मैस्थिरधीरधीशः ॥ पयोधिपानेमुनिरन्तरायं दुर्वारमप्यौर्वमिवौर्वसेयः ॥ २ ॥

भैम्येति । स्थिरधीरनन्यहृदयः दृढबुद्धिःसःअधीशःनलःनिर्विकारत्वलक्षणेदूतधर्मैविषयेदुर्वारंदुर्लङ्घमन्तरायंविघ्नभूतमपि भैम्यासमंसार्धंवियोगंनाजगणत्मनसिनधृतवान् । कःकमिव । और्वशेयःमुनिरगस्त्यः पयोधिपानेसमुद्रपानेदुर्वारंअंतरायरूपं और्वमिववडवानलमिव । विकारहेतौसत्यपिगाम्भीर्यात्स्वीयंवरनायकंदूरेंत्यक्त्वानिःकपटेनाशयेनतेषांदूत्यमङ्गीकृतवानितिभावः । दुष्टंवाःवारियेनसदुर्वारस्तं और्वविशेषणम् । मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वावासतीवरेकुम्भेरेतोऽपतत्ततोऽगस्त्यवसिष्ठावजायेतामित्यनुक्रमणिकोक्ते रगस्त्यश्चौर्वशेयः उर्वशीपुत्रः । उरुंवहुअश्नातिउर्वशीतत्पुत्रस्यबहुभोक्तृत्वमेवयुक्तमितिचज्ञेयम् २

नलप्रणालीमिलदंबुजाक्षी संवादपीयूषपिपासव

स्ते ॥ तद्दृश्वबोद्धार्थमिवानिमेषा देशस्यतस्या भरणीबभूवुः ॥ ३ ॥

नलेति । तेदेवाः यत्रनलदेवानांसम्वादः अभूत्तस्यदेशस्यआभरणीबभूवुः तत्रैवस्थिताइत्यर्थः । किंभूताःनलरूपयाप्रणाल्यानिसलतआगच्छतोस्मु खात्याभैम्याःसंवादपीयूषस्य रसस्य कथालक्षणस्यामृतस्यपिपासवःपानेसा भिलाषाः सदाकर्णनैकपराः । तथातद्दृश्वबोद्धार्थमिवनलमार्गावलोकना र्थमिवानिमेषाः निमेषरहिताः । देवत्वात्सहजमपिनिर्निमेषत्वंनलोऽनेन मार्गेणभैमीकथाकथनार्थंकदासमागमिष्यतीतिनलमार्गप्रतीक्षार्थत्वेनोत्प्रे क्षितम् । नलप्रतीक्षार्थंतत्रैवस्थिताइत्यर्थः ॥ ३ ॥

तांकुण्डिनाख्यापदमात्रगुप्ता मिन्द्रस्यभूमेरमरावतींसः ॥ मनोरथःसिद्धिमिवक्षणेन रथस्तदीयःपुरमाससाद ॥ ४ ॥

तामिति । सतदीयःनलसंबन्धीरथः भूमेरिन्द्रस्यभीमस्यकुण्डिनमिति आख्यापदमात्रेणसंज्ञापदेनैवगुप्तांगोपितांअमरावतींनामपुरंक्षणेनशीघ्रं आससादप्राप । स्वरूपतः साक्षादमरावतीपुरंकुण्डिननामधेयमितिविज्ञे यः । कःकामिव । तपःप्रभाववतांमनोरथःसिद्धिमिव । मनोरथदृष्टान्तेन रथस्यातिजवत्वंसूचितम् ॥ ४ ॥

भैमीपदस्पर्शकृतार्थरथ्या सेयंपुरीत्युत्कलिकाकुलस्ताम् ॥ नृपोनिपीयक्षणमीक्षणाभ्यां भृशंनिशश्वासपुरैःकृताशः ॥ ५ ॥

भैमीति । भैमीपदस्पर्शेनकृतार्थारथ्यामार्गोयस्याः यत्रभैमीविचर तिसेयंपुरीनगरीत्युत्कलिकाकुलः उत्कंठाबाहुल्येनविमनाःसःनृपःनलः तांनगरींईक्षणाभ्यांनेत्राभ्यांक्षणमात्रंनिपीयसादरंप्रेक्ष्य भृशंबहुनिःश्वास निश्वसितवान् । यतोदूत्यादेशनात्सुरैः कृताशःखण्डिताशः । भैम्यासार्धं मत्राहंविचरामीतिमनोरथेनपूर्वमुत्कण्ठितोभूत् । पश्चाद्दूत्यस्मरणाद्दुः खितोऽभूदितिभावः ॥ ५ ॥

स्विद्यत्प्रमोदाश्रुलवेनवामं रोमाञ्चभृत्पक्ष्मभिर

स्यचक्षुः ॥ अन्यत्पुनःकंप्रमपिस्फुरत्वा त्तस्याःपुरःप्रापनवोपभोगम् ॥ ६ ॥

स्विद्यदिति । मैमीनगरीमयादृष्टेति प्रमोदेनसंसर्गप्रीतिजनितानन्देन जातोयोऽश्रुलवोबाष्पलेशः तेनस्विद्यत्स्वेदयुक्तंबाष्पएवस्वेदस्थानेजातोय स्यएवंभूतंपक्ष्मभिर्नेत्ररोमभिः रोमाञ्चभृत्रोमाञ्चयुक्तं तान्येवरोमाञ्चस्था नेजातानियस्यएवंभूतमस्यनलस्य वामंसव्यंचक्षुः तस्याःपुरः प्रथमदर्शन लक्षणंनवोपभोगंभूतनकामकेलिंचप्राप । अन्यद्दक्षिणंचक्षुः पुनःस्फुरती तिस्फुरत्तद्भावेनकम्प्रमपिकम्पनशीलमपि भैमीप्राप्तिसूचकंस्फुरणंप्राप्ये तियावत् । एवंभूतंदक्षिणमपितस्याःपुरःनवोपभोगंप्राप । चलत्वंनयन स्यद्यपिस्वभावतोविद्यतेतथापि प्रियाप्राप्तिसूचकत्वादित्युत्प्रेक्षार्थंकथनम् । अन्यस्यापिकामिनोनवोपभोगेस्वेदादयः सात्त्विकभावाःप्रभवन्ति । दक्षि णनयनस्फुरणंभैमीलाभलक्षणसूचकंशकुनेकथितम् ॥ ६ ॥

रथादसौसारथिनासनाथा द्राजावतीर्याशुपुरंविवेश ॥ निर्गत्यबिम्बादिवभानवीयात् सौधाकरंमण्डलमंशुसङ्घः ॥ ७ ॥

रथादिति । अथासौराजानलः सारथिनासनाथादधिष्ठितात्रथादव तीर्यपुरंविवेश । कःकिमिव । अंशुसङ्घःभानवीयात्सूर्यसंबन्धिनोबिम्बा न्मण्डलान्निर्गत्यसौधाकरंचन्द्रसंबन्धिमंडलमिव । अमावास्यायांसूर्यंप्रवि ष्टश्चन्द्रकिरणसमूहोयथाप्रतिपदिततोनिर्गत्यचन्द्रंप्रविशति । सूतंरथेसं स्थाप्यएकाकीनगरंप्रविष्टइत्यर्थः ॥ ७ ॥

चित्रन्तदाकुण्डिनवेशिनःसानलस्यमूर्तिर्नवभूतेनदृश्या ॥ वभूवतच्चित्रतरंतथापि विश्वैकदृश्यैवयदस्यमूर्तिः ॥ ८ ॥

चित्रमिति । तदातस्मिन्समयेकुण्डिनवेशिनः नगरप्रवेशिनःनलस्यदृग्गोचराथवातिसुन्दरीमूर्तिःकायःदृश्यानवभूतेदृग्गोचरोयत्सुंदरीनवभूते नाभूदाश्चर्यम् । एतावन्तकालं दृग्गोचरस्याकस्मादन्तर्हितत्वात्सुन्दरस्यचे दानीमसुन्दरत्वादाश्चर्यम् । भूयादन्तर्धिरिति वचनादिच्छावशादन्त

र्हितोऽभूदित्यर्थः । यद्यपिदृश्यानभूत्तथापि अस्यमूर्त्तिर्विश्वस्यसर्वस्यलोकस्यएकामुख्या ऽसहायावादृश्यैवदृग्गोचरएवबभूवेतियत् तच्चित्रतरं अतिशयितमाश्चर्यम् । अन्तर्हितस्याप्यनन्तर्हितत्वेविरोधादाश्चर्यम् । अयचसर्वस्मिन्जगतिएकारमणीयाभूत्तदतिचित्रम् । एतादृक्सौन्दर्यस्यान्यत्राभावात् । नदृश्येतिनसमासोवा ॥ ८ ॥

जनैर्विदग्धैर्भवनैश्चमुग्धैः पदेपदेविस्मयकल्पवल्लीम् ॥ तांगाहमानापुरमस्यदृष्टि रथाययौराजकुलातिथित्वम् ॥ ९ ॥

जनैरिति । अथतांपुरींगाहमानाविलोकयन्ती अस्यनलस्यदृष्टिःराजकुलातिथित्वराजसदनातिथ्यमाययौ । राजमन्दिरंददर्शेत्यर्थः । गाहमानस्येतिपाठेराज्ञोविशेषणम् । राजकुलाभिमुख्यमितिक्वचित् । किंभूताम् । विदग्धैःचतुरैःजनैर्मुग्धैःसुन्दरैः भवनैश्चकृत्वापदेपदेविस्मयस्यकल्पवल्लीकल्पलतांअतिशयाश्चर्यकारिणीं कल्पवृक्षसंबन्धिनींवल्लीमित्यर्थः । कुलंजनपदेगृहेइतिविश्वः ॥ ९ ॥

हेलांदधेराक्षिजनेस्वलज्जे लीनश्चरामीतिहृदालज्जे ॥ द्रक्ष्यामिभैमीमितिसंतुतोष दूतांविचिन्त्यस्वमशोशुचाच ॥ १० ॥

हेलामिति । असौनलःअलज्जेशज्जरहिते रक्षिजनेराजगृहरक्षकलोकेहृदाहेलांनवज्ञांदधौ । एतेममकिमपिकर्तुंनशक्नुवन्तीति । तथाअहंलीनश्चौरवददृश्योराजासन्चरामीति विचार्यमनसालज्जे । तथाहमद्यभैमींद्रक्ष्यामीति हेतोर्हृदासंतुतोष । तथाअनन्तरंस्वमात्मानंदूतंविचिन्त्यहृदाशुशोच । दुःखंकृतवान् । भैमीदर्शनेपिममलाभोनास्तीति हृदेत्यनेनअवज्ञादिसूचकाकारादिचेष्टानकृतेत्यर्थः । प्रथमतृतीयचरणाभ्यांवीरत्वानुरागौचुक्तौ । द्वितीयचतुर्थाभ्यांतौप्रशान्तीकृतौ । दूतत्वमनलस्याऽयोग्यत्वोऽनुचितइत्यात्मानंनिनिन्देतिभावः । हेलांहेलृअनादरइत्यस्मात्षिद्भिदादिभ्योऽङ्इत्यङ् ॥ १० ॥

अथोपकार्याममरेन्द्रकार्यात्केक्षाक्षुरक्षाधिकृतैर

दृष्टः ॥ भैमीं दिदृक्षुर्बहुदिक्षुचक्षुः क्षिपन्नसौताम विघ्नाद्विशंकः ॥ ११ ॥

अथेति। अथअसौतामुपकार्यांपूर्वदृष्टामुपकारिकांअविशत् । किंभूतः। अमराज्ञान्येत्रयः इन्द्रस्तेषांप्राधान्यादमरेन्द्रस्यवाकार्याद्धेतोः कार्याद्व रदानाद्वाहेतोः । कक्षासुगृहप्रकोष्ठेषुस्थितैरधिकृतैःरक्षकैः अन्तर्हित त्वाददृष्टः । अतएवाविशङ्कोगतभयः । तथाबहुवारंदिक्षुचक्षुःक्षिपन्ददा नः । यतोभैमींदिदृक्षुर्द्रष्टुकामः । कक्षाप्रकोष्ठेहर्म्यादेरित्यमरः ॥ ११ ॥

अयंक इत्यन्यनिवारकाणां गिराविभुग्नारिविभु ग्यकण्ठम् ॥ ददर्शददेविस्मयनिस्तरङ्गांसलङ्घि तायामपिराजसिंहः ॥ १२ ॥

अयमिति । स राजसिंहोनलःलङ्घितायामतिक्रान्तायामपिविभुग्नारि उपकार्याद्वारि अन्तर्हितोप्यहमेभिर्दृष्टःकिमितिविस्मयेनाश्चर्येण निस्त रङ्गांनिश्चलांदृष्टिंददौदत्तवान् । किंकृत्वाकोयमित्यन्यनिवारकाणांनलान्य निषेधकारिणांरक्षकाणांगिराकृत्वा मामेवकिमेतेनिषेधयन्तीतिधियाकण्ठं विभुग्नवक्रीकृत्य । राजसिंहइत्यनेनदृष्टेप्यात्मनिनिर्भयत्वंसूच्यते । सिं होप्यवज्ञयाग्रीवांवक्रीकृत्यगर्वेणदृष्टिंपश्चाद्ददाति । राजसिंहःमङ्गांसाव यवेश्चेतिउपमितेतिवासमासः ॥ १२ ॥

अन्तःपुरान्तःसविलोक्यबाला कांचित्समालब्धु मसंवृतोरुम् ॥ निमीलिताक्षःपरयाभ्रमत्या संघ ट्टमासाद्यचमच्चकार ॥ १३ ॥

अन्तरिति । सःनलःअन्तःपुरस्यअन्तःमध्येसमालब्धुमुद्वर्तयितुंअसंवृ तेअनाच्छादितेउरूअङ्घ्रेयस्यास्तांकाञ्चित्बालांस्त्रियंविलोक्य ननग्नांस्त्रि यमीक्षेतेतिश्रुतेः । उत्तमपुरुषत्वाच्चनिमीलिताक्षोवभूवेतिशेषः । तया वधेच्छयाभ्रमन्त्याचलन्त्याकयाचित्परयास्त्रियासहनिमीलिताक्षः निमी लितनयनत्वादेवसङ्घट्टंसम्यकंआसाद्यप्राप्यचमच्चकार सचकितोबभूवेत्य र्थः । एकंसन्धित्सतोऽपरंप्रच्यवतइतिन्यायात्सजुगुप्सोजातः ॥ १३ ॥

अनादिसर्गस्रजिवानुभूता चित्रेपुराभीमसुतान

लेन ॥ जातेवयद्वाजितशम्बरस्य साशाम्बरीशि
ल्पमलक्षिदिक्षु ॥ १४ ॥

अनादीति । मलेनसाभैमीदिक्षुप्रतिदिशंअलक्षिदृश्यतेस्म । ननुचक्षु
षाऽसंनिकृष्टाकथंदृष्टा । नचशुक्तौरजतमिवतत्रासत्यपिसारूप्याद्भासते
इतिवाच्यम् । अननुभूतपूर्वस्यवस्तुनआरोपासम्भवादित्याशङ्क्यअन्यथा
न्यथानुपपत्त्यापूर्वानुभवमपेक्षते अनादयोयेसर्गाःसृष्टयस्तेषांपरंपराते
स्यामनुभूतावा । ननुजन्मान्तरेपिभैम्याःपरिग्रहेतत्स्मरणेवा प्रमाणंना-
स्तीत्यतआह । चित्रेषुआलेख्येषुचअनुभूता । ननुचित्रेष्वियंनिष्क्रियैवा
नुभूतायथानुभवंचआरोपोभवति तत्कथमियंमामालिङ्गतीवसानुरागमा
लोकयन्तीवप्रणयमनुनयन्तीवसकेलिकोपमाचारयन्तीवदृश्यतेऽतआह ।
यद्वाजितःशम्बरोयेनसजितशम्बरोमदनःतस्ययामायाशाम्बरी । शम्बरो
दैत्यस्तस्ययाशाम्बरीमायातस्याःशिल्पंनिर्माणंजातेव । कामेनशम्बरंजय
तातस्यमायाप्यपहृतातयामायथेयंनिर्मितेत्यर्थः । यद्वाशम्बरारेःसम्बन्धि
मायानिर्माणकौशलंजातेवसा । मदनस्यैवेदंशिल्पंतस्यमायामात्रहेतुकंन
तुमयसदृशास्यवास्तुकाररचितंइति मायानिर्मितंचातिसुन्दरंभवति का
रणगुणानुरोधाभावात् । यद्वानलेनसाकामस्यशाम्बरीरूपंशिल्पंकौशलं
जातेवालक्षि । शम्बरस्यजितत्वात्तन्मायैवभैमीरूपापहृतेत्यर्थः । अ-
थवाजातेवेत्युत्प्रेक्षान्तरम् । प्रागननुभूतापितदानींकामस्यशिल्पभूतासा
जाताउत्पन्नेवालक्षितातोपरोक्षमनुभूयतेनचबाध्यते । आलिङ्गनादिरू
पसमर्थप्रवृत्तिजनकत्वादितिभावः । यद्वाशाम्बरीत्युत्प्रेक्षान्तरमितिव्या
ख्येयम् । विरहवशात्सर्वत्रभैमीदृष्टासापूर्वमनुभवतारतस्येनस्मृतासति
आरोपात्प्रतीयतेशुक्तौरजतवत् । यद्वापूर्वमनुभूतैवस्मरणप्रतिदिशम-
पूर्वैवेत्यादिना । यद्वाआविश्वकरजतवद्गन्धर्वनगरवद्वामायावशाद्दृश्यन्त
मसत्येवाननुभूतापिभासतइतिसमुदायतात्पर्यम् ॥ १४ ॥

अलीकभैमीसहदर्शनान्न तस्यान्यकन्याःस्मरसो
रसाय ॥ भैमीभ्रमस्यैवततःप्रसादै र्भैमीभ्रमस्तेन
तास्वलम्भि ॥ १५ ॥

अलीकेति । मोहवशादवलोकिता अलीकभैमीमिथ्याभैमीतयासहता

साम्यपिदर्शनादन्यकन्याम्सरसः अन्तःपुरेस्थिता अप्सरस्तुल्याजैमीव्यातिरि
क्ता अबलास्तस्य नलस्य रसाय प्रीत्यै नाभूवन् । सहदर्शनाद्वारतम्यज्ञानसंभ
भवादलीकदृष्टायाअपि भैम्याः सकाशादन्याअतिहीनाइति तास्वनुरक्तोना
भूत् किन्तु अलीकदृष्टायामपि तस्यामेवेत्यर्थः । तास्वेव भैमीबुद्धिः कथनेत्य
तत्राह । ततः षष्ठ्यर्थेतसिः । तस्य भैमीभ्रमस्यैव भैमीभ्रान्तेरेवप्रसादात्
याः सम्यग्ज्ञातेन नलेन तासु अन्यकन्याप्सरःसु भैमीभ्रमो नालम्भि न प्राप्तः । अ
लीकदृष्टायास्तस्याः सकाशात्तासांअतिहीनत्वात्सादृश्यलक्षणभ्रान्तिकार
णाभावाद्भैमीभ्रान्तिर्नोत्पन्नेत्यर्थः ॥ १५ ॥

भैमीनिराशेहृदि मन्मथेन दत्तस्वहस्तादिरहाद्विह
स्तः ॥ सतामलीकामवलोक्यतत्र क्षणादपश्यन्
व्यषदद्विबुद्धः ॥ १६ ॥

भैमीति । दूत्याङ्गीकाराद्भैमीविषयेनिराशेविलक्षेपिहृदिविद्यमानत्वा
न्मन्मथेनदत्तः स्वहस्तः स्वहस्तावलम्बनं यस्मैएवंभूताद्विरहाद्वियोगात्वि
हस्त विह्वलः हृदिभैमीनराशास्तीतिवा हृदिव्याकुलइतिवा एवंभूतः
सनलःतत्रतपंक्त्यायांअलीकान्तां असत्यरूपाभैमीमवलोक्यक्षणात्तस्मि
न्नेवक्षणेविबुद्धः भ्रान्तिरहितस्तामपश्यन् अवलोकयन्व्यषदत्विषादंप्रा
प । दूत्याङ्गीकाराद्भैम्यांनिराशत्वेनशान्तोपिविरहः कामेनस्वहस्तंदत्वा
पुनरुद्दीपितः । विरहजनितयाभ्रान्त्याभैमीतेनावलोकिता भ्रान्त्य
पगमेचनालोकितेति अनवबोधहेतुर्मनबोधोदयाजातः यत्प्रसादान्मया
भैमीविलोकितासाभ्रान्तिर्गताकष्टं जातमितिदुःखितोभूदित्यर्थः । येनह
स्तोदत्तस्तस्यहस्तसाहित्ययुक्तम् । अत्रतुविपरीतमित्याश्चर्यम् । व्यषद
त्लृदित्वादङ् । प्राक्सितादड्व्यवायेपीति अधिकारेसदिरप्रतेरितिषत्व
म् । विहस्तव्याकुलौसमावित्यमरः ॥ १६ ॥

प्रियांविकल्पोपहृतांसयात्र ह्रिणीग्रसन्देशमजल्प
दल्पम् ॥ अदृश्यवाग्भीषितभूरिभीरु भवोरवस्ता
वदवेदयत्तम् ॥ १७ ॥

प्रियामिति । सनलः विकल्पेनसंकल्पेनोपहृताउपनीतांप्रियांभैमींप्रति

दिगीशानामिन्द्रादीनां संदेशं नलस्य मपि यावदजल्पत् अवोचत् । तावदेव तस्मिन्नेव क्षणेऽदृश्यस्य तस्यैव वाचा मीषिता भयं प्रापिता भूरयः बह्वः भीरवः भयशीलाया बालाला भ्यो भवः तत्पश्चात् रवः शब्दः तं नलं श्रावयते स्म श्रावयांचकार। भ्रान्तिर्वीक्षितां भैर्मी प्रति इन्द्रादिभिरेवमुक्तमिति यावद्वक्तुं प्रारब्धं तावदेव अनेन शब्देन अदृश्यो भूतादिः कोप्यायातः इति भीतानां बालानां कलकलेन पुनः भ्रान्तो भूत्वा तूष्णीं बभूवेति भावः । अस्य संदेशमितिवा । भीषितेति भियो हेतुभये षुक् । चितीसंज्ञाने भीवादिकाद्धेतुमति णिच् अचेतयत् ॥ १७ ॥

पश्यन्स तस्मिन्मरुतापितन्व्याः स्तनौ परिस्पष्टुमि वात्तवस्त्रौ ॥ अक्षान्तपक्षान्तमृगाङ्कमास्यं दधा रतिर्यग्वलितं विलक्षः ॥ १८ ॥

पश्यन्निति । तस्मिन्नन्तःपुरेऽचेतनेन मरुता वायुनापि च देवेनापि परिस्प्रष्टुमिव मर्दयितुमिवात्तवस्त्रौ हृतवस्त्रौ कस्याश्चित्तन्व्याः स्तनौ पश्यन् अबुद्धि पूर्वकं अकस्माद्विलोकयन् परस्त्रीकुचदर्शनाद्विलक्षो विचित्तः सन् सोमृगा ङ्कत्वादेव अक्षान्तः असोढः पक्षान्तः पूर्णिमाचन्द्रो येन एवं भूतं आस्यं वदनं तिर्यग्वलितं तिरश्चालितं दधार । पराङ्मुखो भूदित्यर्थः । नलादन्यः कोप्युत्तमः पुरुषो नासीदिति भावः । अक्षान्तकामुकत्वभोगे चन्द्रस्यातिरोधानं युक्त मिति ध्वन्यते ॥ १८ ॥

अन्तःपुरे विस्तृतवागुरोपि बालावलीनां वलितैर्गु णौघैः ॥ नकालसारं हरिणं तदक्षि द्वयं प्रभुर्वद्धुम भून्मनोभूः ॥ १९ ॥

अन्तरिति । मनोभूः कामः कालः कृष्णः कनीनिकालक्षणः सारः श्रेष्ठभागो यस्य तत्तथा हरिणं अभितः पाण्डुरं तत्स्य नलस्याक्षिद्वयं बद्धुं सौन्दर्यस्य वशं कर्तुं प्रभुः समर्थो नाभूत् । अथ वने अद्वयसेव हरिणं मृगं बन्धुं न । अरण्ये मृग युना मृगो घर्त्तुं शक्यः । कामो मृगयुस्तु अन्तःपुरे नगरमध्ये हरिणं धर्त्तुं न श शाकेत्याश्चर्यम् । किम्भूतः । बालावलीनां अवरोधतरुणीपङ्क्तीनां वलितैः सविलासैः पुनः प्रवृत्तैर्वा गुणौघैः नृत्यगीतादिसौन्दर्यगुणसमूहैः वलितैः अ ङ्गसौष्टवैर्गुणौघैश्च वा कल्पान्तःपुरे विस्तृता वागुरा लक्षणयोक्षवशीकरणार्थं मृग्यं येन । गुणा एव वागुरा यस्य अनेयस्य जाता इत्यर्थः । अथ च केशपङ्क्तीनां वलितैः

स्त्रिगुणितैर्दोरकसङ्घैः नगरमध्ये विस्तृतवागुरोपिकामपिबालांमलःसाभि लाषंनापश्यदित्यर्थः ॥ १९ ॥

दोर्मूलमालोक्यकचंनुनुत्सो स्ततःकुचौतावनुलेप यन्त्याः ॥ नाभीमथैषश्लथवाससोनु मिमीलदि क्षुक्रमकृष्टचक्षुः ॥ २० ॥

दोरिति । एषःनलःकचश्चेशपाशंनुनुत्सोर्बन्धुमिच्छोःकस्याश्चित्केशसंय मननादेवदोर्मूलंबाहुमूलं आलोक्यततस्तस्माद्देशात्किंचिद्धोनमितदृष्टि स्ततश्चन्दनादिनानुलेपयन्त्याविलेपयन्त्यास्तस्याएवतावतिसुन्दरौकुचौस्त नौ आलोक्यततोपिकिञ्चिन्नमितदृष्टिः अथकुचलेपमानन्तरंनाभिविलेप नार्थंश्लथवाससः श्लथीकृतवसनायास्तस्याःएवनाभीमालोक्यततोप्यधोन मितदृष्टिः एवंदिक्षुऊर्ध्वदेशादधोदेशेक्रमेणकृष्टंसनाकृष्टंचक्षुर्येनएवंभूतः सन् अनुपश्चादनवलोकनीयस्यकस्याप्यङ्गस्यअवलोकनप्रसङ्गान्निमीलनं अनिमीलनमेवचकार मीलसङ्कननेधातुः अत्राप्युत्तमत्वंसूचितम् ॥ २० ॥

मीलन्नशोकेभिमुखागताभ्यां घर्तुंनिपीड्यस्तनसा न्तराभ्याम् ॥ स्वाङ्गान्यपेतोविजगौसपश्चा त्पुमङ्ग सङ्गोत्पुलकेपुनस्ते ॥ २१ ॥

मीलन्निति । मीलन्संकोचितनयनःसनलः अभिमुखंसंमुखमागताभ्यां स्त्रीभ्यांमध्ये विद्यमानोनिपीड्यनितरांपीडनंकृत्वा घर्तुंनशोकेनशक्तः । यतःस्तनाभ्यांकृत्वासान्तरेव्यवधानसहितेताभ्याम् । उभयोरुन्नैःस्तनावेव परस्परंमिलितौनतुतयोः परस्परंसंश्लेषोजातः । सान्तरत्वात्ताभ्यामपेतो निर्गतःसन्पश्चात् स्वाङ्गानिस्वीयानवयवान् परस्त्रीसंसर्गोद्विजगौ । वि शेषेणनिनिन्द । एतेऽनुचितकारिणइति तेस्त्रियौपुंसःअङ्गसङ्गेनउत्पुल केसात्विकभावोद्बोधात्रोमाञ्चितेजाते । स्त्रीणांपापप्रधानत्वात्परपुरुष संयोगेनतयोरोमाञ्चितत्वंजातम् । नलेनतूत्तमपुरुषत्वात्परस्त्रीसंसर्गाद ङ्गनिन्दाकृतेतिभाव । घर्तुंशकियोगेतुमुन् ॥ २१ ॥

निमीलनस्पष्टविलोकनाभ्यां कदर्थितस्ताःकलय न्कटाक्षैः ॥ सरागदर्शीवमृधांलज्जे स्वतःसतां

ह्रीपरतोऽतिगुर्वी ॥ २२ ॥

निमीलनेति । निमीलनेपरस्त्रीसंसर्गोऽप्रकटविलोकनेचविवक्षोद्भ्रांतान्निमीलनस्पष्टविलोकनाभ्यांकदर्थितः पीडितः अतःस्ताःतरुणीरुभयपरिहारार्थंकटाक्षैः कलयन्नवलोकयन्सनलोरागेणदर्शीवपश्यन्निवमुग्धोऽलज्जितः । लज्जातुअन्यतोभवतिसतकथंलज्जितोनलइत्यतआह । सतांसाधूनांपरतःसकाशात्स्वतोह्रीर्लज्जातिगुर्वी अतिमहतीभवति स्वतोयावतीलज्जातावतीपरतोनेत्यर्थः । तस्माद्दृश्यत्वेनकटाक्षावलोकनेनस्वयमेवनललज्जइत्यर्थः ॥ २२ ॥

रोमाञ्चितांगीमनुतत्कटाक्षै भ्रान्तेनकान्तेनरते निसृष्टः ॥ मोघःशरौघःकुसुमानिनासी त्तद्धैर्यपूजां प्रतिपर्यवस्यन् ॥ २३ ॥

रोमाञ्चितेति । नलाकृष्टत्वाद्रोमाञ्चिताङ्गींस्त्रियमनुलक्षीकृत्यतस्यनलस्यकटाक्षैः स्त्रीअपिपरस्परमनुरक्तोऽइति भ्रान्तेनरतेःकान्तेनकामेनपरस्परसंभोगार्थंनिसृष्टःक्षिप्तः कुसुमानिपुष्पलक्षणःशरौघःमोघोनिष्फलःनाभूत् । यतःतस्यनलस्यधैर्यपूजांप्रतिउद्दिश्यपर्यवस्यन्सञ्जातःतात्पर्यःमुख्यप्रयोजनाभावेपिनलसदृशःकोपिधीरोनास्तीति तद्धैर्यपूजायामुपयोगात्पुष्पसाफल्यम् ॥ २३ ॥

हित्वैववर्त्मैकमिहभ्रमन्त्याः स्पर्शःस्त्रियाःसुत्यज इत्यवेत्य ॥ चतुष्पथस्याभरणंबभूव लोकावलोकायसतांसदीपः ॥ २४ ॥

हित्वेति । एकंवर्त्मएकपदींहित्वात्यक्त्वैवइहैकपद्यांअन्तःपुरेवा भ्रमन्त्याःविचरन्त्याःस्त्रियाःस्पर्शःसुत्यजःसुखेनत्यक्तुंशक्यलेनान्यथेति अवेत्यविचार्य सतांसाधूनांप्रकाशरूपत्वाद्दीपइवदीपः सनलः लोकानांकर्मभूतानांपुरलोकानामवलोकायचतुष्पथस्यचतुर्णांपथांचतुर्दिग्भ्यः समागतानांमार्गाणांएकत्रसमाहारः यस्मिंस्थितेनलोकेनचतुर्दिग्भ्यः समागतोजनोदृश्यतेतस्याभरणंबभूव । दीपोपिलोककर्तृकायावलोकनायचतुष्पथस्याभरणंभवति । चतुष्पथंसमाहारेपथः संख्याव्ययादेरितिनपुंसकत्वम् ॥२४॥

क्तुं निन्दति । इष्टभुजोः स्वेष्टभक्षणशीलयोस्तयोः समायान्तुल्यायांप्रीतौस त्यांनएकतरोपहासः द्वयोर्मध्येएकतरायत्उपहासः नमध्यस्थताकिन्तुनएक तरोपहासोमध्यस्थता । यद्यपितौद्वावपिपरस्परनिन्दाकारित्वादनुचित कारिणौतथापिउदासीनेनपक्षपातोनकार्यः । तस्मान्ममनलेपक्षपातोस्ति दूत्यारित्वन्द्रेइत्यावयोस्तुल्यायांप्रीतौसत्यांभवतीभिर्माध्यस्थ्यमेवकार्यंन त्वेकतरोपहासःकार्यः । किमपिनवक्तव्यमितिभावः । समायामितितु ल्यार्थत्वात्सर्वनामत्वाभावः ॥ १०४ ॥

गुणाहरन्तोपिनरैर्नरेमे नरोचमानंपरिहारयन्ति
नलोकमालोकयथापवर्गा त्रिवर्गमवाञ्चममुञ्च
मानम् ॥ १०५ ॥

गुणाइति । हरन्तोमनोरमाअपिहरेरिन्द्रस्यदूत्युक्तागुणानेमह्यंरोचमा नंनमप्रीतिविषयंनरंअथचनलंनपरिहारयन्तिनत्याजयन्ति । अथचरम णीयाअप्यन्येहरेरीश्वरस्यगुणारोचमानास्वयंआवर्तनंनपरिहापयन्ति । अन्य गुणापेक्षयातस्याधिकगुणत्वादित्यर्थः । हरणशीलत्वेपिकिमितितंनत्याज यन्तीत्याशङ्क्यदृष्टान्तेनपरहरति । हेसख्यःयूयंअपवर्गात्मोक्षाद्वाञ्छंही नमपित्रिवर्गंधर्मार्थकामरूपंअमुञ्चमानं अत्यजन्तंलोकंनआलोकयथापर मसुखरूपंमोक्षंपरित्यज्यत्रिवर्गंसेवतेतथाइन्द्रंपरित्यज्यनलंसेवेअत्रकोपिरे षप्रमाणमितिभावः । नेष्टतिरुच्यर्थानामितिचतुर्थी ॥ १०५ ॥

आकीटमाकैटभवैरितुल्यः स्वाभिष्टलाभात्कृतकृ
त्यभावः ॥ भिन्नस्पृहाणांप्रतिचार्थमर्थं द्विष्टत्वमि
ष्टत्वमपव्यवस्थम् ॥ १०६ ॥

आकीटमिति । हेसख्यः आकीटंकीटेषुकृमिमभिव्याप्यचतथैवआकैट भवैरिपुरुषोत्तममभिव्याप्य स्वाभीष्टलाभात्सर्वेषांस्वीयस्वीयेप्सितमाप्तेः कृतकृत्यभावःकृतकृत्यत्वन्तुल्यः । विष्णोर्यथास्वाभीष्टलाभात्कृतकृत्यत्व म् । तथैवकीटस्यापिस्वाभीष्टलाभात्कृत्यत्वं अर्थान्तरन्यासेनैतदेवाह च यस्माद्भिन्नस्पृहाणांस्वीयंस्वीयमीप्सितमभिलाषुकाणांसर्वेषामर्थमर्थंप्रति विषयंउद्दिश्यद्विष्टत्वंद्वेषविषयत्वंइष्टत्वंइच्छाविषयत्वं अपव्यवस्थं अपग

ताव्यवस्थानियमोयस्य एकस्ययद्विष्टन्तत्सर्वस्यापिद्विष्टं एकस्ययदिष्टन्त त्सर्वस्यापीष्टमितिनियमोनास्ति तस्माद्यद्यस्मैरोचते तत्तस्येष्टंयत्नरोचतेत त्तस्यद्विष्टमितितस्मान्ममनलेएवानुरागाद्भवतीभिः किमपिनवक्तव्यमिति भावः। चकारोयस्मादर्थेसमुच्चयार्थेवाद्विष्टत्वमिष्टत्वञ्चेति आकीटमाकैटभ वैरीतिप्याङ्मर्यादाभिविध्योरितिसमासः ॥ १०६ ॥

अध्वाग्रजाग्रन्निभृतापदन्धुर्बन्धुर्यदिस्यात्प्रतिब द्धुमर्हः ॥ जोषञ्जनःकार्यविदस्तुवस्तु पृच्छ्यानिजे च्छापदवीमुदस्तु ॥ १०७ ॥

अध्वाग्रजेति हेसख्यः बन्धुः सुहृत्अध्वाग्रेपुरोमार्गेजाग्रद्वर्तमानःनिभृत आच्छादितआपदन्धुः कूपोयस्यएवंभूतोयदिस्यात्तर्हिसुहृत्प्रतिबद्धुंनिषे द्धुमर्हेउचितःस्यात् तेनपथागच्छयदिगमिष्यसितर्ह्यापद्रूपेगम्भीरकूपेप तिष्यसीतिसुहृदासुहृन्निषेद्धुमुचितःप्रकृतेतुनैवमित्यर्थः। तस्मात्कार्यवित् विपत्कूपाभावज्ञाताजनोभवज्ञतयोजनः जोषन्तूष्णीमस्तुभवतु गुणिजोनल स्यवरणेममानिष्टंकिञ्चिदपिनभविष्यतीतिभवतीभिरवगमनिषेद्धव्येति । न यानलोविचार्यैववृतोस्तितस्मात्तूष्णींस्थातव्यमित्यर्थः । अस्मिन्नर्थेभव त्स्यएवदृष्टान्ततुरेवार्थः । भवतीभिर्निजेच्छास्वेच्छैवमुदोहर्षस्यपदवीव स्तुमार्गरूपंवस्तुपृच्छ्याप्रष्टव्या । भवतीनामपियस्मिन्पुरुषाहीहर्षस्तमेव किमितिहर्षंइत्यनुयोगेभवतीभिरप्यनुरागएवकारणंवक्तव्यम् । तत्मकृता वपितुल्यमितिभावः। मत्कार्यज्ञाताजनोजोषमस्तु । अजानानस्तुय त्किञ्चिद्वदत्वित्यर्थः। पुंस्येवान्धुःप्रहीकूपइत्यमरः। प्रच्छिर्द्विकर्मा १०७

इत्थंप्रतीपोक्तिमतिंसखीनां विलुप्यपाणिग्रहस्यब लेनबाला ॥ अपिश्रुतस्वर्पतिमन्त्रिसूक्ति न्दूतीं वभाषेद्भुतलोलमौलिम् ॥ १०८ ॥

इत्थमिति। बालाभैमी सखीनांप्रतीपोक्तौप्रतिकूलवचनविषयिणींम तिंबुद्धिं पाणिग्रहस्यस्यबलेनसामर्थ्येन इत्थंपूर्वोक्तप्रकारेणविलुप्यविलुप्य प्रमार्ज्यइन्द्रदूतींबभाषे किंभूतान्दूतींश्रुतास्वर्पतिमन्त्रिणोबृहस्पतेःसूक्तिः शोभनोक्तिर्यया एवंभूतामपितयाभैम्युक्तिंश्रुत्वाजातेनाद्भुतेनाश्चर्येणलो

लोमौलिमस्तकौयस्याः अवशिष्टप्रतिवचनार्थंपुनरुवाचेत्यर्थः ॥ १०८ ॥

**परेतभर्त्तुर्मनसैवदूती नभस्वतेवानिलसख्यभाजः॥ त्रिस्रोतसेवाम्बुपतेस्तदाशु स्थिरास्थमायातवती निरस्थम् ॥ १०९ ॥**

किमुवाचेत्यतआह । परेतभर्त्तुरिति । हेइन्द्रदूति यस्मात्मनसामया नलोवृतः तत्तस्मात्स्थिराआस्थावशीकरणशक्तिर्यस्मिन्कर्मणि अहंइमौ वशीकरिष्यामीतिबुद्ध्याआशुशीघ्रं आयातवती आयातांपरेतभर्त्तुर्यमस्य दूतींमनसाएवनिरास्थंनिराकृतवत्यस्मि तत्रानभिलाषाद्धेतोः त्रिषयमेवहे तुसदर्थैवानिलसख्यभाजोग्नेः स्थिरास्थंशीघ्रमायातवतीन्दूतीनभस्वतेव वायुनेवनिरास्थतथास्थिरास्थंआयातवतीमम्बुपतेर्वरुणस्यदूतीन्त्रिस्रोत सेवमन्दाकिन्येवनिरास्थम् । यमस्यपरेतभर्तृत्वात्परेतप्राणानान्तदधीन त्वाद्धनसश्च प्राणाधीनत्वाद्धनसैवकत्वाशीघ्रमायातांयमदूतीवन्हेरनि लमित्रत्वादनिलेनैवकत्वाशीघ्रमायातांवन्हिदूतींवरुणस्य जलपतित्वान्म न्दाकिन्येवभूत्वाशीघ्रमागतामम्बुपदूतींनिरास्थमितिवा । तस्मादहमेव निराकृतेविदुःसंनाकार्यादितिभावः । मनोनभस्वन्त्रिस्रोत शब्द नउक्ता गमनवेगोद्योत्यते । मनआदिभिःसहायातवतीमिवेतिवा । निरास्थं अस्यतिवक्तीत्यङ् । अस्यतेस्थुक् ॥ १०९ ॥

**भूयोर्थमेनंयदिमान्त्वमात्थ तदापदोव ालभसेम घोनः ॥ सतीव्रतैस्तीव्रमिमन्तुमन्तु मन्तर्वरम्भाग्नि णिमार्जितास्मि ॥ ११० ॥**

भूयइति । हेदूतित्वंअनमिन्द्रवरणरूपमर्थंमांभूयःपुनर्यदिआत्थब्रवी षितदातर्हिमघोनइन्द्रस्यपदौआलजसेस्पृशसि । एवंशपथदानात्त्वया भूयोनवक्तव्यमित्यर्थः । तर्हिइन्द्रस्त्वयिकोपंकरिष्यतीत्यतआह ॥ अहं सतीव्रतैःपतिव्रतानियमैःवज्रिणिइन्द्रविषयेअन्तः अन्तकरणेतीव्रम्दुःसहं इममंतुंअपराधन्तुपुनःवरंमार्जितास्मि । प्रोञ्छिताऽस्मि । वरंमनागि ष्टोवरंसम्यगन्तर्हृदयस्थितैःसतीव्रतैरितिवा । अन्तर्वरस्वरस्यनलस्यअन्तः मध्येवर्तमानेवज्रिणिरााज्ञोलोकपालांशत्वादंशत्वेननलेस्थितेइन्द्रइतिवा

मलेतुष्टेइन्द्रोपिवृतोभवत्येवेतिभावः । आगोपराधोमन्तुश्चेत्यमरः । मा र्जितेतिमृजेरितिवृद्धिः । अदित्यादिट् ॥ ११० ॥

**इत्थंपुनर्वागवकाशनाशा न्महेन्द्रदूत्यामपयातव त्याम् ॥ विवेशलोलंहृदयंनलस्य जीवःपुनःक्षीव मिवप्रबोधः ॥ १११ ॥**

इत्थमिति । इत्थंअनेनप्रकारेणपुनर्वागवकाशस्यवचनावसरस्यनाशा न्महेन्द्रदूत्यामपयातवत्यांकृतायांसत्यांनलस्यजीवःप्राणः जैमीमदूत्यमे तिचिन्तावशाल्लोलञ्चञ्चलंहृदयंपुनर्विवेश । कःकमिव प्रबोधःक्षीवंमत्तमि व तस्याश्चिन्तावशात्तस्यप्राणागतप्रायाएवाभूवन् गतायान्तुतस्यजैमी प्राप्तिनिश्चयेनदूत्यप्राप्तिसम्भावनयाचतस्यप्राणाःपुनरागताइत्यर्थः मत्तोपि चञ्चलोभवति । मत्तेशौण्डोत्कटक्षीबाइत्यमरः । अनुपसर्गात्फुल्लक्षीबेति साधुः ॥ १११ ॥

**श्रवणपुटयुगेनस्वेनसाधूपनीतं दिगधिपकृपया प्रागीदृशःसन्निधानात् ॥ अलभतमधुबालारा गवागुत्थमित्थं निषधजनपदेन्द्रःपातुमानन्दसा न्द्रः ॥ ११२ ॥**

श्रवणेति । निषधजनपदानांइन्द्रोनलः बालाजैमीतस्याःरागवागनुरा गवचनंतस्मादुत्थमुत्पन्नं इत्थं पूर्वोक्तंमधुअमृतं पातुंसादरमाकर्णयितुमान न्दसान्द्रंयथाभवतितथालब्धवान् किंभूतंमधु दिगधिपइन्द्रः तस्यकृपयाप्रा गीदृशाद्दूत्याङ्गीकारप्रागात्सन्निधानादङ्गीकरणलक्षणादुपायाद्धेतोः स्वे नस्वीयेनश्रवणलक्षणेनपुटयुगेनपात्रयुगेनसाधुसम्यक् प्रकारेणोपनीतमा नीतंस्वयमाकर्णितमित्यर्थः आनन्दसान्द्रमितिपाठेनलविशेषणंपूर्वोक्तमे ध्यनुरागवचनंआनन्दसहितःसादरमाकर्णयामासेत्यर्थः । मञ्जुशारवकीये मकेनचित्पात्राभ्याममीयमधुपीयते इन्द्रादयस्तर्हिजैम्यनुरागवचनमहं स्वयंपोमह्यंदूत्यंचेन्नदास्यं अतस्तत्प्रसादान्मयाजैमीवचनंस्वयमाकर्णित मित्यानन्देनसान्द्रइत्यर्थः ॥ ११२ ॥

श्रीहर्षंकविराजराजिमुकुटालङ्कारहीरःसुतंश्रीही -

रः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् षष्ठः खण्डनखण्डितोपि सहजात्क्षोदक्षमे तन्महाकाव्येयद्यगलल्ललीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ॥

षष्ठः सर्गः समाप्तः ॥ ॥ नमोकटुकाय ॥

श्रीहर्षमिति । सहजात्सोदरात्खण्डनखण्डात्खण्डतः इक्षुविकाराच्छर्कराविशेषादपिक्षोदक्षमे घर्षणसहे परीक्षाक्षमे यथायथा पृच्यते तथा तथा सरस इत्यर्थः । षष्ठां पूरणः व्यगलत् समाप्त इत्यर्थः । स्यात्खण्डः शकले चेक्षुविकारे गुणविद्दोषयोरिति विश्वः । षष्ठः पूरणे डटिषट्कतीत्यादिना थुक् अस्मिन्सर्गे दूतगुणाः धर्मशास्त्रद्वारेणोक्ताः ॥ इति नारायणकृत नैषधटिप्पण्यां षष्ठः सर्गः समाप्तः ॥ नमः संकटायै ॥

## नैषधीये चरिते सप्तमः सर्गः प्रारभ्यते

श्रीगणेशाय नमः ॥ अथ प्रियासादनशीलनादौ मनोरथः पल्लवितश्चिरं यः ॥ विलोकनेनैव स राजपुत्र्याः पत्याभुवः पूर्णवदभ्यमानि ॥ १ ॥

श्रीगणेशाय नमः ॥ इत्थं इन्द्रदूतीनिराकरणेन भैम्याः स्वस्मिन्ननुरागं दृढं परीक्ष्य तुष्टो नलो भैमीमेवावर्णयदिति वक्तुं सप्तमसर्गमारभते ॥ अथेति । अथेन्द्रदूतीनिराकरणानन्तरं यो मनोरथः प्रियायाभैम्या आसादने प्राप्तिविषये शीलनादौ च तेन तेन विशेषेण रूपादिपरिकल्पने विषये आदिशब्देनाश्लिङ्गनादिसम्भोगविषये पल्लवितः पूर्वं पल्लवयुक्तो जातः । भैमीं कथं प्राप्नोमि कथं वा तस्या विशिष्टभावादिकं जानामीति चिरमुदितः पूर्वमासीत् । स मनोरथो भुवः पत्या राज्ञा नलेन राजपुत्र्या विलोकनेनैव पूर्णवत् परिपूर्णो ऽक्षवफलित इवअभ्यमानि संमानितः । प्राप्तिं विनैव दर्शनमात्रेण प्राप्त्यादिजन्यमानन्दं प्रापेति भावः । पल्लवितशब्देन मनोरथस्य वृक्षत्वं सूचितम् । अन्योपि वृक्षारोपितं फुल्लितं दृष्ट्वाऽत्यन्तं सन्तुष्यति । आसादनश्च शीलनादिश्चेति समासे एकवद्भावः । अन्यथा शीलशब्दस्य पूर्वनिपातात् ॥ १ ॥

प्रतिप्रतीकंप्रथमंप्रियाया मथान्तरानन्दसुधासमुद्रे ॥ ततःप्रमोदाश्रुपरंपरायां ममज्जतुस्तस्यदृशौ नृपस्य ॥ २ ॥

प्रतीति । तस्यनृपस्यदृशौनेत्रेप्रथमंप्रतिप्रतीकंप्रत्यवयवंप्रियायांभैम्यां ममज्जतुः निमग्ने अथपश्चादन्तःकरणेआन्तरोवायःप्रत्यवयवदर्शनजनि तस्थानन्दस्तद्रूपासुधाअमृतन्तत्रममज्जतुस्तथः पश्चात्प्रमोदाश्रुपरंपराया मानन्दजनितबाष्पप्रवाहेममज्जतुः । अनयारीत्यासर्वेषामप्यवयवानाम तिसौन्दर्यंसूचितम् । प्रत्यवयवसौन्दर्यदर्शनादानन्दस्तस्माच्चाश्रुपरंपरा जातः तयानलनयनाभ्यांकिमपितदानदृष्टमित्यर्थः । समुद्रेजलप्रवाहेच निमज्जनंसूचितम् ॥ २ ॥

ब्रह्माद्वयस्यान्वभवत्प्रमोदं रोमाग्रएवापिनिरीक्षितेस्याः ॥ यथौचितीत्यन्तदशेषदृष्टा वथस्मराद्वैतमुदन्तथासौ ॥ ३ ॥

नेत्रप्रमोदमुक्त्वामनःप्रमोदमाह । ब्रह्मेति । असौनलोऽस्याभैम्याःरो म्णोप्यग्रएवप्रथमंनिरीक्षितेसतिनपिद्यतेद्वयंयस्यतदद्वयं ब्रह्मणोऽद्वयंब्र ह्माद्वयन्तस्यब्रह्मैक्यस्येत्यर्थः । तस्यप्रमोदमानन्दमन्वभवदनुबभूव । अ थानन्तरमित्यनमेनप्रकारेणतस्याभैम्याअशेषावयकलायाकृत्स्नदेहदर्शनन्तस्यांच त्यामशेषभैमीदर्शनेसतियथायादृशौऔचितीभवतितथाह्यैवंद्वयोर्भावो द्वितान्द्वितेयद्वैतन्नविद्यतेयस्याःसाऽद्वैतःस्मरश्चासावद्वैतश्चस्मरस्याद्वैतरा हित्यंवा तस्यमुदमन्वभवन् मदनैक्यजनितमानन्दमनुबभूवेत्यर्थः । यस्य निकृष्टरोमाग्रस्यैवनिरीक्षणेब्रह्माद्वैतानन्दोभवति तस्यारमणीयसकलाव यवदर्शनेब्रह्माद्वैतानन्दादधिकोमदनाद्वैतानन्दएवभवितुंसमुचितइत्यर्थः । सर्वावयवदर्शनेमदनानन्देऽमज्जदितिभावः । तेषांरोम्णामग्रेपदृष्टौसत्या मितिवा । द्वैतंप्रज्ञादित्वात्स्वार्थेऽण् ॥ ३ ॥

वेलामतिक्रम्यचिरंमुखेन्दो रालोकपीयूषरसेनतस्याः ॥ नलस्यरागाम्बुनिधौविवृद्धे तुङ्गौकुचावाश्रयतःस्मदृष्टी ॥ ४ ॥

वेलामिति । नलस्यदृष्टीदृशौ तस्यामुखेन्दोरालोकनेनतल्लक्षणेनपीयूषरसेनामृतरसेन विलोकनलक्षणंयद्मृतन्तस्मिन्वा । तमेवतद्विषयिण्या प्रीत्याकृत्वापूर्णंमहतीम्वेलान्दूत्यसमयकृपामतिक्रम्य नलस्यरागाम्बुनिधौअनुरागसमुद्रे विवृद्धेवृद्धिङ्गतेसति तुङ्गावुच्चौकुचौआश्रयतःस्म दूत्यसमयमविचार्यमुखचन्द्रावलोकनविवृद्धेन अनुरागेणकृत्वातुङ्गौकुचौनलोवलोकयतिस्मेतिभावः । चन्द्रस्यप्रकाशलक्षणेनामृतरसेनमहतींमर्यादामतिक्रम्यसमुद्रे वृद्धिङ्गतेसत्याप्लवनभयादन्योपितुङ्गस्थानमाश्रयति । वृष्टिरितिक्वचित्पाठस्तथा ॥ ४ ॥

मग्नासुधायांकिमुतन्मुखेन्दो र्लग्नास्थितातत्कुचयोःकिमन्तः॥ चिरेणतन्मध्यममुञ्चतास्य दृष्टिः कृशीयःस्खलनाद्भियानु ॥ ५ ॥

मग्नेति । अस्यनलस्यदृष्टिःकृशीयः अतिशयेनकृशन्तस्याभैम्याः मध्यञ्चिरेणचिरकालेनामुञ्चत अत्यजत् । मध्यस्थितत्वेनतस्याजेत्यर्थः ॥ अमध्ये प्रेक्षते स्खलनात्पतनाद्भियाभयेननुकिं अतिकृशमेतन्मध्यं चेत्त्यक्ष्यामितर्हिपतिष्यामीतिबुद्ध्याकिंविलम्बेनात्यजत् । किंभूतादृष्टिः । तन्मुखेन्दोःसुधायांमग्नाकिंमुखेन्दावेवविलम्बिता । तथाऽनन्तरंकृणालसूत्रेणापिदुर्लभावकाशेतत्कुचयोरन्तर्मध्ये लग्नासम्बद्धासतीनिर्गन्तुमशक्त्वास्थिताविलम्बिता पूर्वंयदङ्गम्विलोकितन्तदङ्गंसुन्दरतरत्वात्परित्यक्तुंनशक्तंकिन्तुपुनःपुनस्तदेवावलोकयतिस्मेतिभावः । कृशीयसःप्रकाशात्स्खलनंकृशीयसस्खलनमितिवा ॥ ५ ॥

प्रियाङ्गपान्थ्याकुचयोर्निवृत्य निवृत्यलोलानलदृग्भ्रमन्ती ॥ बभौतमान्तन्मृगनाभिलेप तमःसमासादितदिग्भ्रमेव ॥ ६ ॥

प्रियेति । नलदृगेवंभूतासतीबभौतमांअतितरांशुशुभे । किंभूताप्रियायाभैम्याःअङ्गस्यप्रत्यङ्गंपान्थीनित्यपथिका अतएवलोलाचञ्चलाऽथचस्पृहासती निवृत्यनिवृत्यव्यावृत्यव्यावृत्यकुचयोर्भ्रमन्तीसञ्चरन्ती तत्प्रकृते । किंभूतेव तयोःकुचयोर्मृगनाभिलेपःकस्तूरिकालेप स्तल्लक्षणन्तमोऽ

भ्यकारस्तेनकृत्वासमासादितःप्राप्तःदिग्भ्रमोदिङ्मोहोयथासैवंभूतेव । अ
न्योपिपान्थस्तमसाप्राप्तदिङ्मोहोऽभ्रमन्निवृत्यनिवृत्यपूर्वमेवस्थानंप्राप्नो
ति । सर्वावयवावलोकनतत्परापिकुचावेवालोकयतिस्म । कुचौत्यक्तुं न
शशाकेत्यर्थः । लोलश्चलसतृष्णयोरित्यमरः । नित्यंपन्थानंकृत्वतीतिपान्थः
पथोणनित्यमितिणस्ततष्टाप् । बभौतमाङ्क्ष्मिमेतिङ्क्ष्व्ययेत्यादिनाम् ॥६॥

विभ्रम्यतच्चारुनितम्बचक्रे द्रुतस्यदृक्तस्यखलुस्ख
लन्ती ॥ स्थिराचिरादासतदूरुरम्भा स्तम्भावुपा
श्लिष्यकरेणगाढम् ॥ ७ ॥

विभ्रम्येति । तस्याश्चारुणिसुन्दरेनितम्बरूपेचक्रे विभ्रम्यपरिभ्रम्य
स्खलन्तीखलुपतन्तीव तस्यदृग्नलस्यदृष्टिः तदूरूलक्षणौरम्भास्तम्भौक
दलीस्तम्भौकरेणरश्मिनाकरेणगाढंनिबिडमुपाश्लिष्यआलिङ्ग्य चिरात्
चिरकालंस्थिरानिश्चलाआसबभूव । अन्यापिचक्रभ्रमणंप्राप्यपतन्तीव
तीहस्तेनस्तम्भङ्गाढमालिङ्ग्यस्थिराभवति । नितम्बम्विलोक्यआदरेण
तदूरूपश्यतिस्मेतिभावः ॥ ७ ॥

वासःपरंनेत्रमहंननेत्र ङ्किमुत्वमालिङ्ग्यतन्मयापि
उरोनितम्बोरुकुरुप्रसाद मितीवखातत्पदयोःप
पात ॥ ८ ॥

वासइति । वानलदृग् इतीवकारणात्तत्पदयोर्भैम्याश्चरणयोःपपातप्र
णामञ्चकार । इतिकिम् । हेभैमिवासोवसनंउत्तमपट्टदुकूलविशेषःपरं
केवलंनेत्रमर्थपनेत्रशब्दवाच्यम् । अहंनेत्रंनकिन्तुअपितुअहमपिनेत्रंनेत्रश
ब्दवाच्यंयस्माद्भवामि ततस्मादुभयोरपिनेत्रशब्दवाच्यत्वलक्षणात्कार
णाद्धेभैमित्वनेत्रेणवसनेनेवमयापिप्रयोज्येनत्वदुरोवक्षोनितम्बोजघनप
श्चाद्भागऊरूचस्तेषांसमाहारउरोनितम्बोरुआलिङ्ग्यवेष्टय । अथचद्वयं
त्वमप्रसादम्कुरु तदालिङ्गनार्थममोपरिप्रसन्नाभवेति । अन्योपिस्वसमान
स्यकस्यचिद्राजादेःसकाशाद्-मनापदमाप्तिंदृष्ट्वास्वस्यापि तल्लाभार्थंराज्ञश्च
रणयो-पततिमह्यमप्येतद्देयमितिचप्रार्थयते । उरोनितम्बोरुविलोक्य
चरणावपिविलोकयतिस्मेतिभावः । नेत्रंत्वचिगुणेवस्त्रेनन्तृणेविलोचन
इतिविश्वःप्रास्यद्वत्वादेकाङ्गत्वेनपुंसकत्वञ्च ॥ ८ ॥

दृशोर्यथाकाममथोपहृत्य सप्रेयसीमालिकुलं वचस्तस्याः ॥ इदं प्रमोदाद्भुतसंभृतेन महीमहेन्द्रो मनसाजगाद ॥ ९ ॥

दृशोरिति । अथ स महीमहेन्द्रो भूमीन्द्रो नलः प्रमोदो भैमीविलोकनेनानन्दः सौन्दर्यदर्शनादद्भुतमाश्चर्यं च ताभ्यां संभृतेन पूर्णेन मनसा इदं वक्ष्यमाणं जगाद । चिन्तयन्मनसैव तामवर्णयदित्यर्थः । किंकृत्वा प्रेयसीं भैमीं तस्याश्चालिकुलं सखीसमूहं च दृशोर्नयनयोर्यथाकामं सञ्जिलाषमनतिक्रम्य नयनाभ्यामेवोपहृत्योपायनीकृत्य ॥ ९ ॥

पदे विधातुर्यदि मन्मथो वा ममाभिषिच्येत मनोरथो वा ॥ तदा घटेतापि न वा तदेतत्प्रतिप्रतीकाद्भुतरूपशिल्पम् ॥ १० ॥

तदेवाह । पद इति । यदि मन्मथो मीनकेतनो वा विधातुर्ब्रह्मणः पदेऽधिकारे मन्मथो वाऽभिषिच्येत मम मनोरथो वाभिषिच्येत तदापि तत्र निर्वर्णनीयमेतद्दृश्यमानमेतस्या वा प्रतिप्रतिकं प्रत्यवयवमतिसुन्दरत्वादद्भुतमाश्चर्यकारि रूपलावण्यं तस्य शिल्पं निर्माणं घटेत न वा घटेत ब्रह्मणाप्येतत्प्रत्यवयवं सौन्दर्यं कर्तुं न शक्यत इत्यर्थः । ईदृक्सौन्दर्यं कदापि कुत्रापि न दृष्टमिति भावः ॥ १० ॥

तरङ्गिणी भूमिभृतः प्रसूता जानामि शृङ्गाररसस्य सेयम् ॥ लावण्यपूरोऽजनि यौवनेन यस्यां तथोच्चैः स्तनताघनेन ॥ ११ ॥

तरङ्गिणीति । घनेन निबिडेन यौवनेन वयस्या भैमी लक्षणायां तरङ्गिण्यां लावण्यपूरोऽजनि जनितस्तथाच्चैस्तनी यस्यास्तस्या भावश्चैस्तनता उच्चकुचत्वमजनि सेयं शृङ्गारलक्षणस्य रसस्य तरङ्गोद्रेकस्तद्वती अथ च नदीत्येवम्भूता भीमनाम्नो भूमिभृतो भूमीपतेः सकाशात्प्रसूता उत्पन्ना इति जानामि वाक्यार्थः कर्म । प्रथमं सहजसौन्दर्यरूपा शृङ्गाररूपा जाताऽनन्तरं निबिडयौवनेन सौन्दर्याधिक्यजननादुच्चकुचत्वजननाच्च पूर्वापेक्षया शृङ्गाररसस्य मूर्तिरियं नदीति मन्ये इति भावः ॥ अथ च रसस्य उदकस्य नदी पर्वतादुत्पद्यते । तस्यां

स्तनतावच्चैशब्दायमानेनघातिवरा कृजंताचलेनमेघेनपूर्वंजलप्रवाहोजलो द्रेकोपिश्रूयते । तथानिर्वचनीयप्रकारावच्चैस्तनतावयाकृत्वाघनेननिरन्त रेणैकंपदम् । यौवनविशेषणम्वा । पूरोजलप्रवाहेस्यादितिविश्वः । भूति भूतोभुवःप्रभवकृत्यपादत्वत्वम् । प्रसूतेतिअकर्मकात्कर्तरिक्तः ॥ ११ ॥

अस्याम्वपुर्व्यूहविधानविद्यां किंद्योतयामासन वीतकामः । प्रत्यङ्गसङ्गस्फुटलब्धभूमा लावण्य सीमायदिमामुपास्ते ॥ १२ ॥

अस्यामिति । अङ्गमङ्गप्रत्यङ्गंप्रत्यवयवंयः स्वस्यैवलावण्यस्यसङ्गःसंबन्ध स्तेनकृत्वास्फुटंव्यक्तंलब्धोभूमाप्राचुर्येयथाएवंभूता लावण्यसीमासौन्दर्य परमकाष्ठायद्यस्मादिमांभैमीमुपास्तेसेवते यस्मात्कारणात्कल्यापेक्षयानवां नूतनांवीतकामःतदेवापूर्वजन्यस्तान् । वपुर्व्यूहस्यशरीरसमूहस्यविधानंनि र्माणन्तस्यविद्यांशक्तिकायव्यूहरचनाकौशलमस्यांभैम्यामेवकिंद्योतयामा स । नत्वन्यस्यामित्यर्थः । किंवितर्के कान्यापेक्षयातरुणिमन्यधिकंसौन्दर्यं भवतित्वकलावयवेषुसाकल्येनसौन्दर्यसीमाभैम्यामेवविद्यतेनान्यस्यामिति भावः। प्रत्यङ्गसङ्गमवयवसन्धिंप्रतीतिर्वा अस्यामित्यनेनभैम्याधिदूष्यंसूच्यते। विद्याप्रकाशनंहिविद्वत्समीपएवभवति । मनदमोस्यांनवानपूर्वांकायव्यू हनिर्माणविद्यान्द्योतयामासकिं यस्मात्सौदर्यस्यपरमाकाष्ठा सकामःप्रत्य ङ्गंविद्यमानत्वेनप्राप्तोभूमाबाहुल्यंयेनैवंभूतःसन्निमांभैमींसेवते । प्रत्यव यवंसाकल्येनमदनस्यविद्यमानत्वान्मदनेनस्वीयंबहुरूपत्वंप्रकटीकृतमित्य र्थः । मुखावलोकनेनयादृशोमदनप्रादुर्भावोभवतितादृशएवनयनावलो कनेनेतिवदीयैकैकावयवदर्शनेसकलस्यसाकल्येनमदनप्रादुर्भावोभवतीति भावः । लब्धभूमेत्यादौपदेनेनहति निषेधाद्ङीबभावः ॥ १२ ॥

जम्बालजालात्किमकर्षिजम्बू नद्यानहारिद्रनिभ मङ्गेयम् ॥ अप्यङ्गयुग्मस्यनसङ्गचिन्ह मुन्नीयतेद न्तुरतायदत्र ॥ १३ ॥

जम्बालेति । इयंभैमीजम्बूनद्याःजम्बूफलरसजातनद्याःजम्बालजाला त्पङ्कसमूहात्किंनाकर्षिनाकृष्टाअपितुततएवाकृष्टा यद्वयस्माद्हारिद्रनिभ

प्रभाहरिद्रारक्तवस्त्रतुल्यकान्तिःजम्बूनद्याजम्बालजालंनिजाम्बूनदत्वा न्यसुवर्णापेक्षयात्युत्तमन्ततआकृष्टा तदैवहरिद्रातुल्यवर्णत्वन्घटतेनान्यथे त्यर्थः । हरिद्रासुवर्णौवा । अपिशब्दोहेत्वन्तरंसमुच्चिनोति । यदपिअत्रास्यां भैम्यामङ्गयुग्मस्यहस्ताद्यवयवयुगलस्यसङ्गचिह्नंपरस्परसंश्लिलाञ्छनन्तु रतालवलयाविसंस्थूलतानिम्नोन्नतानोन्नीयते नतर्क्यते यज्जम्बालजाला दाकृष्यतेतस्योच्चावचप्रदेशेषुपङ्कस्यलग्नत्वाद्विसंस्थूलता नलक्ष्यतेभैम्याम पितथायतस्ततोपीयञ्जाम्बूनदपङ्कादाकृष्टेत्यनुमीयते । अवयवसन्धिसू चकंकूर्परादिभैम्यांनलक्ष्यतेसुवर्णगौरीचेयमितिभावः । कूर्परादेरलक्ष्यत्वे नसामुद्रिकलक्षणवत्त्वं सूचितम् । यदित्युभयत्रापिसम्बध्यते । पूर्वार्धेहा रिद्रपदेनयोजना उत्तरार्धेयथास्थितम् । मध्यस्थत्वेनयोरङ्गयुग्मसङ्गाभा वोज्ञातव्यः नोचेन्मध्यस्यपरमाणुरूपत्वात्तयोश्लिष्टत्वाज्जाम्बूनदज म्बालपूर्णत्वेनैतेमुद्रितास्युरित्यादिज्ञातव्यम् ॥ १३ ॥

**सत्येवसाम्येसदृशादशेषाद् गुणान्तरेणोच्चकृषेय**
**दङ्गैः अस्यास्ततःस्यात्तुलनापिनाम वस्तुत्वमेषा**
**मुपमोपमानः ॥ १४ ॥**

सत्येवेति । यदङ्गैर्भैम्याअङ्गैर्मुखाद्यवयवैरशेषाद्गुणान्तरेणवृत्तत्वादिनागु णेनचन्द्रादिनासमंसाम्येसत्येवसदृशात्कविसमयेमुखादेः सदृशत्वेनोपमा नत्वेनाभिमताच्चन्द्रादेरशेषात्सकलाद्वस्तुनः सकाशाद्गुणान्तरेणकेनचिद्गु णान्तरेणान्येनगुणेनकृत्वायद्यस्मादुच्चकृषेउत्कृष्टैर्जातन्ततस्तस्मादर्थादस्या अङ्गैःकृत्वासदृशस्यचन्द्रादेस्तुलनापिसमीकरणमपितैःसहसाम्यंवास्यान्ना म कविसमयेसर्वत्रोपमानस्याधिक्यमुपमेयस्यचन्यूनत्वंप्रसिद्धम् । तथा चान्यरमणीयमुखाद्यपेक्षयाचन्द्रादेराधिक्यादुपमानत्वं मुखादेश्चन्यूनत्वा दुपमेयत्वंघटते अस्यास्तुमुखंयद्यपिवर्तुलत्वेनचन्द्रेणसमानन्तथापिचन्द्रा पेक्षयाधिकामृतयुक्तत्वेनाधिकगौरत्वेनकलङ्काभावेनचचन्द्रादाधिक्यम् । नेत्रेऽप्याकारेणनलिनाचयद्यपिनीलोत्पलदलेनसमानेतथापिनीलोत्पल दलस्यकटाक्षविक्षेपादिराहित्येन स्वस्यचतत्साहित्येननीलोत्पलदलापेक्ष याधिके । एवमोष्ठादेरपिकेनचिद्गुणेनसाम्येसत्येवगुणान्तरेणबन्धूकाद्यपे क्षयाधिक्यं द्रष्टव्यं तथाचचन्द्राद्यपेक्षयाधिक्यनैतदीयवदनाद्यङ्गानामुप

मानत्वंचन्द्रादेश्चैतदीयवदनाद्यपेक्षयान्यूनत्वेनोपमेयत्वमिति चन्द्रोभैमी वदनसदृशोनीलोत्पलदलञ्चभैमीनयनसदृशमिति एवंसदृशस्यचन्द्रादेर्भै मीवदनादिनासमीकरणंसाम्यस्याभवेदपि भैमीवदनादेरुपमानत्वं चन्द्रा देश्चोपमेयत्वंयुक्तमेवेत्याशयः । अमीषामेतदीयानामङ्गानान्तुपुनःयस्तु चन्द्रादिलक्षणंउपमानमपमानोधिक्कारएवयदमीषामेवहीनस्योपमानत्वा भावादधिकस्योपमेयत्वाज्ञावादितिभावः । यतउत्कर्षेततोहेतोरस्याभैम्या स्तुलनापिस्यान्नामसाम्यस्त्विनोत्कर्षोनसिध्यतीतिसाम्यमप्यस्तुनामवस्तुत स्तुपरमार्थस्तुअमीषामङ्गानामुपमानन्तिरस्कार इतिभावउपमीयतेअनेने त्युपमानं उपमार्थेतिकरणेभावेवातश्चोपसर्गेइत्यङ् ॥ १४ ॥

पुराकृतिस्त्रैणमिमांविधातु मभूद्विधातुःखलुहस्त लेखः ॥ येयंभवद्भाविपुरन्ध्रिसृष्टि स्तस्यैयशस्त ज्जयजंप्रदातुम् ॥ १५ ॥

पुरेति । पुराप्रथमंकृतिर्निर्माणंयस्यैवम्विधंप्रथमनिर्मितंस्त्रैणंस्त्रीसमूहं यद्यदि इमांभैमींविधातुंस्रष्टुंविधातुः खलुनिश्चितम् । हस्तलेखःप्रथमो भ्यासोभूत् अन्योपिशिल्पीप्रथमंहस्तलेखकृत्वापश्चात्सुन्दरतरवस्तुनिर्मा ति । उत्तरशिल्पापेक्षयाहस्तलेखस्यातिहीनत्वाद्भैमीजन्मनः पूर्वंयत्स्त्री समूहोहस्तलेखोभूत्सभैम्यपेक्षयातिहीनःभैमीचातिसुन्दरीतिभावः । न नु यन्निर्माणार्थमभ्यासःकृतःसानिर्मिताअग्रिमस्त्रीसृष्टिःकिन्निमित्तकृतेत्या शङ्क्याह येयंभवतीवर्तमानाभविष्यन्तीचपुरन्ध्रिसृष्टिःस्त्रीनिर्मितिःअस्यै भैम्यैतज्जयजन्तस्यांभवद्भाविपुरन्ध्रिसृष्टेः भैमीकर्तृकोयोजयःतस्माज्जातं यशःप्रदातुंनत्वन्यत्किमपिप्रयोजनमस्ति । तस्याभैम्याअपेक्षयातिहीन त्वान्नयापीदृशीनिर्मातुंनशक्यतइति सर्वान्ज्ञापयितुंब्रह्मणाभैमीजन्मा नन्तरमपिस्त्रीनिर्मितिःकृता अकरिष्यत्तुभैम्यनन्तरम्वेदन्याःस्त्रियंधातानिरमा स्यत तर्हि तदपेक्षयापिसातिरमणीयाभविष्यदितिलोकस्यसंभावनाभवे त् तन्निवारणार्थंब्रह्मणैवंकृतमित्यर्थः । भूतभविष्यद्वर्तमानेषुभैमीसदृशी कापिनास्तीतिभावः । खलूत्प्रेक्षायांवा पुरन्ध्रीतिङ्यापोःसंज्ञेतिवाहुल काद्ह्रस्वः । ह्रस्वान्तएववा भवद्भावीतिप्रागेवस्त्रीत्वविवक्षयाद्वंद्वं कृत्वापु रन्ध्रिशब्देनयथाकर्थञ्चित्कर्मधारयः । अन्यथाभवन्तीभावेतिस्यात् । दृ

वासमाप ॥ पक्षस्थताबद्दहुचन्द्रकोपि कलापि नायेनजितःकलापः २० ॥

अधुनाआनुपूर्व्यात्केशादारभ्यपादपर्यन्तवर्णनमारभते । अस्याइति । स दूरत्वात्सपक्षोमित्रंसहायश्चैकः केवलोविधुश्चन्द्रोयस्यअस्यामुखस्योपरि शिरसिकचौघःकेशसमूहःवासंवसतिमाप । तत्स्थानेयुक्तम् । कथमित्यतआह । येनकचौघेनपक्षस्याःपक्षेषुस्थितास्तावन्तोतिबहवश्चन्द्रकायस्यएवंविधोपिकलापिनांमयूराणांकलापःपिच्छभारःजितःपराजितः । चन्द्रकोपिमयूरपिच्छभारोयेनजितस्तस्यात्युन्नतत्वाच्छिरसिवसतियुक्तैवेत्यर्थः ॥ २० ॥

अस्यायदास्येनपुरस्तिरश्चि तिरस्कृतंशीतरुचान्धकारम् ॥ स्फुटस्फुरद्भङ्गिकचच्छलेन तदेवपश्चादिदमास्तबद्धम् ॥ २१ ॥

श्लोकद्वयेनकेशानेववर्णयति । अस्याइति अस्याःभैम्याआस्येनवदनलक्षणेनशीतरुचाचन्द्रेण पुरोग्रतस्तिरश्चितिर्यक्प्रवर्तमानं यदन्धकारन्तिरस्कृतमपसारितंपराजितञ्च तदेवेदंस्फुटंप्रकटंस्फुरन्तोविलसन्तःभङ्गिनोनिम्नोन्नताःकचास्तेषांच्छलेनव्याजेनपश्चान्मुखस्यपश्चाद्भागेबद्धमस्ति । पुरस्तिरश्चियत्तिमिरंस्थितन्ततस्तोपसारित्वापश्चाद्भागोऽपसारणेचन्द्रस्यासामर्थ्याद्गत्यसन्धीभूयपश्चाद्भागेस्थितिमकरोदित्यर्थः । विलसत्कौटिल्योनिबद्धःकेशसमूहोयंनभवति किन्तुचन्द्रेणतिरस्कृतत्वाद्विलसत्पराजयचिन्हंपश्चाद्बद्धमन्धकारमेव । अन्योपिजातजयोधृतपराजयचिन्हःपश्चाद्बाहुर्वध्यतइति अतिनीलोतिकुटिलश्चभैमीकेशसंघइतिभावः अन्धकारोक्रियामित्यमरः । भङ्गुरइत्यपिपाठः ॥ २१ ॥

अस्याःकचानांशिखिनश्चकिंनु विधिंकलापौविमतेरगाताम् ॥ तेनायमेभिःकिमपूजिपुष्पै रभार्दि दत्वासकिमर्धचन्द्रम् ॥ २२ ॥

अस्याइति । अस्याःकचानांकेशानांशिखिनोमयूरस्यच कलापौसंघपिच्छभारौ विमतेरहमुत्कृष्टोऽहमुत्कृष्टइतिविवादाद्धेतोर्मध्यस्थत्वेनविधिंब्रह्माणंअगातांजग्मतुः किंनुइतिसमुदायोवितर्के । तेनब्रह्मणाअयंपुरोदृश्य

मानः केशकलापः पुरोदृश्यमानैरेभिः पुष्पैरपूजिपूजितः किम् स मयूरकला पश्चार्द्धचन्द्रकलहस्तन्दत्वा अपसारितः किम् । मध्यस्थेन प्रश्नलणोविवदमा नयोस्तयोर्मध्ये केशकलापोऽत्युत्कृष्टइतिज्ञापयितुंपुष्पपूजाकृतामयूरक लापस्तुनितरांहीनोऽतितरामधिकेनकेशकलापेनसहस्पर्धमानोनुचितका रित्वाद्गलहस्तितइत्यर्थः अर्धचन्द्राकाराश्चन्द्रकामयूरकलापेविद्यन्तेततः शश्चद्गलेनेयमुत्प्रेक्षा । अन्योप्यधिकोमध्यस्थेनपुष्पैःपूज्यतेयश्चहीनउत्तमेन सहस्पर्धते सभास्थैर्गलहस्त्यतेचेति । अगात्वांशयोगालुकीतिगादेशः २२

केशान्धकारादथदृश्यभालस्थलार्द्धचन्द्रास्फुटमष्ट
मीयम् ॥ एनान्तदासाद्यजगज्जयाय मनोभुवासि
द्धिरसाधिसाधु २३ ॥

भालंवर्णयति । केशेति । केशलक्षणादन्धकारादथानन्तरंअधोदेशेदृ श्योदर्शनविषयोरमणीयश्चभाललक्षणोललाटपट्टलक्षणोर्द्धचन्द्रोयस्याः अ थचभालस्थलेऽर्धचन्द्राकारस्तिलकविशेषोयस्याः सेयंभैमीस्फुटंअष्टमीक ष्णाष्टमीरूपेयमित्यर्थः कृष्णाष्टमीअपिप्रथमयामद्वयान्धकारादनन्तरंदृश्या र्द्धचन्द्राभवति । अतएवएनांआसाद्यप्राप्यस्वयम्भ्वरेजगतोजयायमनोभु वाकामेन सिद्धिर्जगद्वशीकरणलक्षणायदसाधिसाधितातत्साधुयुक्तमेव । अतिसौन्दर्ययाभैम्याकृत्वामदनेनजगद्वशीकृतमित्यर्थः । कृष्णाष्टम्यांजग द्वशीकर्त्तुंगुटिकादिसिद्धिःसाध्यते । अर्धचन्द्राकारभालस्थलेयमितिभावः एतेनललाटसौन्दर्यंसलक्षणात्वसूचितम् ॥ २३ ॥

पौष्पन्धनुःकिंमदनस्यदाहे श्यामीभवत्केसरञ्चोप
मासीत् ॥ व्यधाद्द्विधेशस्तदपिक्रुधाकिं भैमीभ्रुवौ
येनविधिर्व्यधत्त २४ ॥

श्लोकत्रयेणभ्रुवौवर्णयति । पौष्पमिति मदनस्यदाहेदाहसमयेपौष्पंपुष्प रूपन्धनुस्तस्यैवचापंश्यामीभवन्तः श्यामायमानाः केसराएवज्ञोपायस्यैव म्विधस्वरूपेणादग्धमपिश्यामीभवत्केसरशेषमासीत्किम् । मदनदाहानन्त रमीशोमहादेवः श्यामीभूतन्धनुराकारन्तत्केसरमपिक्रुधाकोपेन द्विधाव्य धाच्चकार मध्येचद्विधाभूतेनकृत्वाविधिर्ब्रह्माभैमीभ्रुवौव्यधत्तचकार । अ न्यथातत्सादृश्यंभ्रुवोर्नघटतेइत्यर्थः । असंलग्नेधनुराकारेश्यामेहिभैमी

भ्रुवावितिभावः । अन्योपिवैरिणन्हत्वाक्रोधेनतदायुधमपिभनक्ति २४

भ्रूभ्यांप्रियायाभवतामनोभू चापेनचापेघनसार भावः ॥ निजांयदप्लोषदशामपेक्ष्य संप्रत्यनेनाधि कवीर्यताजिं ॥ २५ ॥

भ्रूभ्यामिति । प्रियायाःभ्रूभ्यांकृत्वाभवतोत्पद्यमानेनभ्रून्वक्षच्छनामनो भूचापेन घनोदृढोसारोमज्जायस्यतद्भावोतिदृढत्वञ्चआपेप्रापे । यदैवच भ्रूत्वन्तदैवदृढत्वमितिचकारार्थः । पुष्पत्वदशायांनिःसारस्यापिधनुषोभै मीभ्रूभवनदशायांससारत्वञ्जातमित्यर्थः । कथंससारत्वमित्यतआह । य द्यस्मात्निजांस्वीयांअप्लोषदशामदाहावस्थांअपेक्ष्यसंप्रतिदग्धस्यभैमीभ्रु भवनसमयेऽनेनधनुषाऽधिकवीर्यताअतिशयित पराक्रमत्वमाजिंअर्जित म् । अदग्धपुष्परूपचापापेक्षयादग्धस्यश्यामीभवत्केसरशेषस्यभैमीभ्रूभव तस्तस्यैवचापस्यजगद्वशीकरणेअधिकसामर्थ्यदर्शनादेवमनुमीयतइतिभा वः । घनत्वंसारत्वंदृढत्वंश्रेष्ठत्वप्रापइतिवा । अथचघनसारभावःकर्पूर त्वञ्च । यतःकर्पूरोपिनिजाङ्गदाहात्स्वीयापक्वावस्थामपेक्ष्यादाहावस्था यामधिकवीर्यतामशयितंसौगन्ध्यं शीतलत्वञ्चार्जयति । अथकर्पूरमस्त्रि याम् । घनसार मित्यमरः ॥ २५ ॥

स्मारन्धनुर्यद्विधुनोज्झितास्या यास्येनभूतेनच लक्ष्मलेखा ॥ एतद्भ्रुवौजन्मतदापयुग्मं लीलाच लत्वोचितवालभावम् ॥ २६ ॥

स्मारमिति ॥ यत्स्मारंमदनसम्बन्धिधनुस्तदेकम् । अस्याआस्येनभूतेन वदनत्वङ्गतेन विधुनाचन्द्रेण उज्झितात्यक्ता याचलक्ष्मलेखाकलङ्कलेखा भैम्यामुखस्यनिष्कलङ्कत्वात्तन्मुखभवनौचित्याय चन्द्रेणत्यक्तायालक्ष्मलेखे तियावत् । त्यक्तन्तन्मदनचापचन्द्रलक्ष्मलेखालक्षणंयुग्मंद्वयङ्कर्तृ । एतद् भ्रुवौभैमीभ्रुवौभैमीभ्रूरूपञ्जन्मआप । भैमीभ्रूस्वरूपेणतद्द्वयंपरिणतमित्य र्थः । किंभूतञ्जन्मलीलयाविलासेनचलत्वञ्चञ्चलत्वंयत्रतदुचितोवालभावः केशसत्तायस्मिन् । लीलाचलत्वेनविलासेनचेष्टयाचउचितस्तदुभययोग्यो वालभावःशिशुत्वंयस्मिन्नितुजन्मतेनयुग्मेनलब्धमित्यर्थइतिवा । जन्म प्राप्तौक्रीडाचञ्चलत्वोचितोवालभावःशैशवंभवति । लेखापदंसाम्यार्थम् ॥

भैमीभ्रूवौकामचापचन्द्रलन्मलेखाकारेसविलासेमदनजनितेचेतिभाव ॥ भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वित्यमरः ॥ २६ ॥

इषुत्रयेणैवजगत्त्रयस्य विनिर्जयात्पुष्पमयाशुगेन ॥ शेषाद्विबाणीसफलीकृतेयं प्रियादृगम्भोजपदेभिषिच्य ॥ २७ ॥

नवभिःश्लोकैर्दृशौवर्णयति । इषिति । पुष्पमयाशुगेनपुष्परूपबाणेन कामेनकर्त्रा इषुत्रयेणैवपुष्परूपेणैवबाणत्रयेण जगत्त्रयस्यविनिर्जयाद्वश्यीकरणात् एकैकेनबाणेनएकैकस्यजगतोजयाद्धेतोर्बाणत्रयस्यसार्थक्यात्स्वभावितवैयर्थ्योपस्थबाणत्वाच्छेषावशिष्टा इयंपुरोदृश्यमानाद्विबाणी प्रियायाभैम्यादृगम्भोजपदेनयनद्वयरूपकमलस्थानेऽभिषिच्यारोप्यसफलीकृता सार्थकीकृता । तत्तत्स्थानप्रापणेतस्याःसाफल्यंजातमित्यर्थः । पुष्पमयकरणत्वाद्दृगम्भोजयोरपिबाणत्वमुचितम् । अयमभिप्रायः । बाणत्रयेणजगत्त्रयीजयात्त्रयाणांसाफल्यमवशिष्टंबाणद्वयं भैमीनेत्रांभोजयोरभिषिच्यकामेन सार्थकीकृतमत्रच त्रयेणत्रयजितमित्याश्चर्यंनकिन्तुवैयर्थ्यं सम्भावनापिद्वयेनजगत्त्रयञ्जितमितिअत्यन्तमाश्चर्यंतस्मादेतद्बाणद्वयमेवसार्थकंयथातथा बाणद्वयंनेत्यभिप्रायः । विनिर्जयाद्विनिर्जयपर्यालोच्येतिल्यपब्लोपोवा २७

सेयंमृदुःकौसुमचापयष्टिः स्मरस्यमुष्टिग्रहणार्हमध्या ॥ तनोतिनःश्रीमदपाङ्गमुक्तां मोहाययादृष्टिशरौघवृष्टिम् ॥ २८ ॥

सेयमिति । मुष्टिग्रहणायार्होयोग्योमध्योयस्याःसेयंभैमीस्मरस्यकौसुमी चापयष्टिर्धनुर्लता । अतएवमृदुः । चापयष्टिरपिमध्येमुष्टिनाध्रियते । सा कायाभैमीनोस्माकंमोहायमदनजन्यविकाराय श्रीमतासलक्ष्मीकेनापाङ्गेनमुक्तानांदृष्टिलक्षणानांनयनकमललक्षणानां शराणामोघस्य समूहस्यवृष्टिं ओघेनपरंपरयावावृष्टिं तनोतिविस्तारयति । मदनोप्यस्माद्दृशांमोहाय पूर्वोक्तामेवबाणपङ्क्तिवृष्टिमुञ्चति तथेयमपिकटाक्षविक्षेपमात्रेणजगत्त्रयमपिमोहयतीतिभावः । ओघःपरंपरायाम्वेतिविश्वः ॥ २८ ॥

अपाघूर्णितंपक्ष्मलमक्षिपद्मं प्रान्तद्युतिश्वेत्याजि

तामृतांशु ॥ अस्याद्वयास्याश्चलदिन्द्रनील गो
लामलश्यामलताररतारम् ॥ २९ ॥

आघूर्णितमिति । अस्याभैम्याः अक्षिपद्मं नयनकमलं अस्याभैम्याइव भवत्वन्यनयनाभ्यान्तुल्यमित्यर्थः ॥ किंभूतं । अक्षिपद्मं आघूर्णितं घूर्णायमानमन्दमुन्मीलदित्यर्थः । अथच विकसदवस्थम् । तथापक्ष्मलं रोमसहितम् । अथच दलसहितम् । तथाप्रान्तद्युतेरपाङ्गकान्तेः श्वैत्येन धवलतयाकृत्वाजितोऽमृतांशुश्चन्द्रमायेन प्रान्ते तस्मादधिकमुज्ज्वलं चन्द्रः सुधयायथाह्लादकारी तथापाङ्गद्युत्यातथाह्लादकारीत्यर्थः । कमलमपि प्रकृष्टायाअन्तर्द्युतिर्गर्भकान्तिस्तस्याः श्वैत्येन जितचन्द्रम् । प्रांशुद्युनीतिपाठे महाकान्तिश्वैत्येनर्जितचन्द्रमभिन्नंपदम् । तथाचलन् चंचलोयमिंद्रनीलगोलस्तद्वदमलातस्यवाऽमलाम्निग्धतराश्यामलतां कृष्णतामारात्यादत्तेऽङ्गीकरोतिश्यामलतारा एवंविधातारा कनीनिकायस्यैवंविधः आङ्पूर्वो रातिरादानेवर्तते कमलमपिचलदिन्द्रनीलगोलवदमलाश्यामलताश्यामलत्वंनांरातिअङ्गीकरोतिश्यामलतारोभ्रमरः तेनतारतारस्वरेणयुक्तं भ्रमरस्यतारोऽत्युच्चस्वरः यस्मिन्नेवंभूतमितिवा तारोत्युच्चैस्वयक्षिष्वित्यमर· पद्मेनसाम्येवक्तव्येतत्कमलंस्वरूपेणैतदेवेतिभेदाभावात्कमलेनसाम्याभावः । यद्वाकमलस्यनेत्रयोश्चयद्यपिसाम्यमस्तितथापिनेत्रकमलस्यकमलेनसदृशाभावः । कमलनेत्रत्वेसतिकमलत्वसाम्याभावादित्यर्थः अन्यस्यानयनाभ्यान्तुसाम्यमसंभावितमेव तथाचदक्षिणंनयनकमलंवामनयनकमलतुल्यं वामनयनकमलंदक्षिणनयनकमलतुल्यंनत्वन्यदस्योपमानमस्तीतिभावः । अस्मिन्विषयेरामरावणयोर्युद्धंरामरावणयोरिवेतिवत्तदेवोपमेयंतदेवोपमानंसङ्कुच्यते पद्मलंसिध्मादित्वाल्लच् ॥ २९ ॥

कर्णोत्पलेनापिमुखंसनाथं लभेतनेत्रद्युतिनिर्जितेन ॥ यद्येतदीयेनततःकृतार्था स्वचक्षुषीकिंकुरुतेकुरङ्गी ॥ ३० ॥

कर्णोत्पलेनेति । कुरङ्गीमृगी भैमीनेत्रद्युत्यानिर्जितेनतदीयेनभैमसंबन्धिनाकर्णोत्पलेनकर्णावतंसोत्पलेनापिसनाथंयुक्तम् । स्वमुखंयदिलभेतत

तस्तर्हि कृतकृत्यासतीत्वचक्षुर्योर्किंकिमर्थंकुरुतेद्यापितुभ्रतिहीनत्वान्निघ्र योजनत्वाद्धनेत्रेत्यजेदेवेतिभावः । त्रैमीनेत्रशोभाप्राप्तौकाकयेत्यपेरर्थः । सन्नेत्रदीप्त्याजितेनापिकर्णोत्पलेनतन्मुखस्यसनाथत्वमेवःस्यात्तर्हिस्वनय मेत्यजेदेवेत्यर्थः । मृगीनेत्रापेक्षयाभैमीकर्णोत्पलमधिकन्तस्मादपिभैमीने त्रेअधिकेइतिभावः । ततःकर्णोत्पलयोगलाभाद्धेतोःकृतार्थास्तीतिवा ३०

त्वचःसमुत्तार्यदलानिरीत्या मोचात्वचःपञ्चषपा
टनायाम् ॥ सारैर्गृहीतैर्विधिरुत्पलौघा दस्याम
भूदीक्षणरूपशिल्पी ॥ ३१ ॥

त्वचइति । मोचात्वचःकदलीगर्भत्वचःसंबन्धिनीर्वाह्यास्त्वचोवल्कला निरीत्याप्रकारेणक्रमेणसमुत्तार्यपृथक्कृत्य तथाकमलवृन्दसंबन्धीनिवाह्या निदलानिपत्राणिक्रमेणपृथक्कृत्य पञ्चषपाटनायांपञ्चषट्वापरिमाणंयेषां कदलीत्वक्कमलवृन्दानान्तेषांपाटनायांसत्यां वाह्याःपञ्चषाःत्वचोवा ह्यानिपञ्चषाणिदलानिचोत्पाट्यमोचात्वचः कदलीवल्कलादुत्पलौघाच्च गृहीतैःसारैःश्रेष्ठभागैःकृत्वाअस्यांभैम्यांविषयेविधिर्ब्रह्माईक्षणेनेत्रेतयोरू पंरामणीयकंतस्यशिल्पीकारकोभूत् । कदलीगर्भगतक्षौरत्वंगृहीत्वानेत्र गतक्षौरत्वंनिर्मितम् । पद्मात्कमलगर्भपत्रगतक्षौरत्वंगृहीत्वानत्रसौन्दर्यंनि र्मितमित्यर्थः । उत्पलशब्दे नमीलोत्पलंवा तथातस्सारेणनेत्रयोर्नीलिमा कृतइत्यर्थः । पञ्चषेतिसंख्ययाव्ययासन्नेतिबहुव्रीहौबहुव्रीहौःसंख्येयेड् तिडचिटिलोपः ॥ ३१ ॥

चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेणकिमेषकृष्टः
सारःसुधोद्गारमयःप्रयत्नै र्विधातुमेतन्नयनंविधातुः ॥ ३२ ॥

चकोरेति । एतन्नयनंभैमीनेत्रेविधातुंनिर्मातुं विधातुर्ब्रह्मणःप्रयत्नैःस मुद्योगैश्चकोरनेत्राणामेणीदृशांहरिणीनेत्राणांउत्पलानाञ्चसंबन्धीसुधोद्गा रमयःपीयूषनिर्भररूपःएष प्रत्यक्षदृश्यःसारः श्रेष्ठोंशःनिमेषलक्षणेनय न्त्रेणकृष्टः किमित्यूह्यनिमेषःपक्ष्मसङ्कोचोदलसंकोचश्चत्रयाणामपिनिमेष यन्त्रेणनिष्पीड्यगृहीतेनश्रेष्ठभागेनैतन्नेत्रेनिर्मिते सारस्यसुधोद्गाररूपत्वंच

पीतचन्द्रचन्द्रिकाचकोरनयनसाराकर्षणात् एवमस्यचन्द्रोत्सङ्गस्थत्वात्तद्दृशोरप्यमृतसंबन्धात्तत्साराकर्षणादुत्पलानाञ्चसोमवंश्यत्वाद्दृग्गौचन्द्रामृतसम्बन्धात्तत्साराकर्षणादिति अन्योपीक्ष्वादिसारोरसरूपःकाष्ठयन्त्रेणाकृष्यते निमेषरूपंत्रस्नणासारग्रहणार्थंयन्त्रमेवनिर्मितं एणदृगुत्पलयोः पूर्वं द्वंद्वः । तत्रैणदृशोरुत्पलापेक्षयाद्दृगुपमानेनत्तरङ्गत्वादभ्यर्हितत्वादेणदृक्पदस्यपूर्वंनिपातः _ अजाद्यदन्तस्याप्युत्पलशब्दस्यनएणीतिजातिमात्रविवक्षया ॥ ३२ ॥

ऋणीकृताकिंहरिणीभिरासी दस्याःसकाशान्नय
नद्वयश्रीः ॥ भूयोगुणेयंसकलाबलाद्वा ताभ्योन
यालभ्यतबिभ्यतीभ्यः ॥ ३३ ॥

ऋणीति हरिणीभिरस्याःसकाशान्नयनद्वयस्य श्रीःशोभाऋणीकृताबुद्ध्यागृहीतासीत्किं कुतोयद्यप्यस्मादनयाभीभ्याबिभ्यतीभ्यस्ताभ्योहरिणीभ्यः सकलासम्पूर्णाकलयासम्पूर्णाकलयाविलासेनसहितावा भूयोगुणाबहुगुणाद्वयंनयनद्वयश्रीः बलात्कारेणालभ्यतलब्धा अथवासकलाधनवृद्धिसहिताभूयोगुणात्रिगुणाचतुर्गुणावाबिभ्यतीभ्योबलात्कारेणलब्धा उत्तमर्णेनहित्रस्यद्ध्योधमर्णेभ्योवृद्धिसहितात्रिगुणाचतुर्गुणावासम्पद्बलात्कारेणलभ्यते भूयोगुणत्वंयाज्ञवल्क्योक्तंव्यवहाराध्यायेद्रष्टव्यं अशीतिभागोवृद्धिःस्यादित्यादिना अनयापिताद्दृशीलब्धा तस्मात्पूर्वंमृणास्वरूपेणागृहीतेतिसत्यम् । त्रस्यन्तीभ्योतएवचञ्चलनयनाभ्योपिहरिणीभ्यःसकाशादेतन्नेत्रेसुन्दरेअतिचञ्चलेचेतिभावः ३३ ॥

दृशौकिमस्याश्चपलस्वभावे नदूरमाक्रम्यमिथोमि
लेताम् ॥ नचेत्कृतःस्यादनयोःप्रयाणे विघ्नःश्र
वःकूपनिपातभीत्या ॥ ३४ ॥

दृशाविति । चपलस्वभावेअतिचञ्चलस्वभावे अस्यादृशौदूरमाक्रम्यदूरं गत्वाशिरः परिक्रम्यमिथोन्योन्यंकिन्नमिलेतां अपितुमिलितेभवेतामेव परन्चेत् यद्यनयोःप्रयाणेदूरगमनेविषये श्रव-कूपयोःकर्णलक्षणकूपयोः । निपातोपतनन्तद्भीत्यापरावर्त्तेततस्माद्भीत्याभयेनविघ्नःकृतोनस्यात् चय

रूपेणप्रतिबन्धकेननमिलिते नेत्रेआकर्णपूर्वेषव्यलततरेवेतिभावः । अत्र क्रियातिपत्तिर्नविवक्षणीया ॥ ३४ ॥

केदारभाजाशिशिरप्रवेशात्पुण्यायमन्येमृतभुत्पलिन्या ॥ जातोयतस्तत्कुसुमेक्षणेयं यतश्चतत्कोरकदृक्चकोरः ॥ ३५ ॥

केदारेति । केदारजाजाह्नीहिक्षेत्रभाजाआलवालभाजावा अथचकेदारःस्यदेवसेविन्योत्पलिन्याकमलिन्याशिशिरतो:प्रवेशाद् अथचशिशिरेहिमेप्रवेशाद्धिमसम्बन्धाद्धेतोः पुण्यायमृतंपुण्यंप्राप्तमृतंतज्जन्यसुकृतविशेषजन्योत्तमफलप्राप्तमित्यर्थः । इत्यहंमन्येआशंकितः । यतोयस्माद्धेतस्तस्याःकमलिन्याःकुसुमेएवईक्षणेनेत्रेयस्याएवंविधाजाता यतश्चयस्याश्चकोरस्तत्कोरकदृक्तस्याएवकोरकौकलिकेदृशौयस्यैवंविधोजातःतस्मादेतदनुमीयते नहिसुकृतातिशयेनविनाभैमीनयनत्वंचकोरनयनत्वञ्च तदुत्पलकुसुमकोरकाभ्यांलभ्यते शिशिरतो:प्रवेशेकमलिनीनश्यति भैमीनेत्रेचकमलतुल्ये कलिकापेक्षयाकुसुमस्याधिक्यंचकोरनेत्रापेक्षयाभैमीनेत्रे अतिसुन्दरेइतिसूचितम् केदारःपर्वतेशम्भोःक्षेत्रभेदालवालयोः शिशिरःस्याद्वृतोभेदेतुषारइतिविश्वः ॥ ३५ ॥

नासादसीयातिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य श्वासानिलामोदभरानुमेया रन्ध्रेद्वित्राणीकुसुमायुधस्य ॥ ३६ ॥

नासिकांवर्णयति । नासेति । अदसीयाऽमुष्याःसम्बन्धिनीनासानासिका जगत्त्रयेविजयायन्यस्तंक्षिप्तंशरत्रयंयेनतस्यकुसुमायुधस्य जगत्त्रयेशरत्रयस्यक्षिप्तत्वादवशिष्टांद्विबाणींबाणद्वयींदधत् तिलपुष्पेणारचितंतूणंतस्मात्पुष्पबाणस्येषुधिरपिपुष्पमयोयुक्तः तिलपुष्पं चतूणीराकारंकिम्भूतांद्विबाणींश्वासानिलस्यनिश्वासपवनस्यामोदभरेण परिमलबाहुल्येनानुमेयामनुमानार्हाम् बाणत्रयेणजगत्त्रयजितंमवशिष्टंबाणद्वयंभैमीनासालक्षणतिलपुष्पतूणीरन्ध्रद्वयेस्थापितमित्यर्थः ॥ ३६ ॥

बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेनसहोज्ज

हाना ॥ रागश्रियाशैशवयौवनीयां स्वमाहसंध्या मधरोष्ठलेखा ॥ ३७ ॥

श्लोकसप्तकेनाऽधरोष्ठंवर्णयति । बन्धूकेति । अनेनंप्रत्यक्षदृश्येनमुखे न्दुनासहैवोज्जिहानासत्यद्यमाना अस्याअधरोष्ठलेखालेखाकारोधरोष्ठः एतत्प्रत्यक्षदृश्यंस्वमात्मानंशैशवयौवनीयांबाल्यतारुण्ययसम्बन्धिनींसन्ध्यां ब्रूते. अहमेवसंध्येति बाल्यतारुण्ययोःसन्धौभवनात्संध्यात्वं शैशवान्ते यौवनादौवाऽधरोष्ठेभूयान्रक्तिमाभवतीतिभावः । किम्भूतंस्वरागश्रि यालोहितिमशोभयाकृत्वा बन्धूकस्यसन्ध्यान्हविकसितपुष्पस्यबन्धूभवस्स मानंभवद् अतिरिक्तमित्यर्थः । अथचरात्रिदिनसन्धौसन्ध्याभवतिसन्ध्या पिचन्द्रेणसहैवोदेतिरक्ताचभवति ॥ ३७ ॥

अस्यामुखेन्दोरधरःसुधाभूर्बिम्बस्ययुक्तःप्रतिबि म्बएषः ॥ तस्याधयाश्रीर्द्रुमभाञ्जिदेशे संभाव्यमा नास्यतुविद्रुमस्य ॥ ३८ ॥

अस्याइति अस्यामुखेन्दौवदनएवचन्द्रेविद्यमानएषोऽधरोष्ठः सुधा भुविअमृतभूमौजातस्यबिम्बीफलस्यप्रतिबिम्बःसदृशोयुक्तः ॥ बिम्बीफल स्यचैम्यधरस्यचसाम्यंनास्त्येवरक्तत्वे सत्यमृतवत्त्वाभावात् यद्दिस्यात्तस्म मृतभूमावुत्पन्नस्यैवनान्यस्य अथचनिर्मलत्वाच्चन्द्रे प्रतिबिम्बोत्यस्यपयुक्त इत्यर्थः । अतएवमुखेन्दाविति निर्देशः । अथचन्द्रंप्रतिबिम्बस्यप्रतिबिम् म्बोभवतीतियुक्तमेवेत्यर्थः । अथवेत्यपरितोषेणैतद्दूषयति तस्यश्रीःशो भाद्रुममाञ्जिद्रुमसहितेदेशेऽस्यतु एतदधरस्यतुसंभाव्यमाना विचार्यमा णाश्रीर्विद्रुमेप्रवालेसंभाव्यमानासंजाव्यस इत्यर्थः । सुधाभूमौसमुत्पन्न स्यापिबिम्बफलस्यरसवत्वेनसाम्यंस्यात्तथापितस्य वृन्ताश्रयत्वाद्रक्तशोभा याअतिरुत्तत्व दुर्भैम्यधरस्यचस्निग्धत्वात्तदधरस्यैवस्निग्धरक्तशोभाकु न्नाऽस्तीतिविचारणायांविद्रुमेविद्यते रक्तिमाकृत्वाविद्रुमस्याधरस्यचसाम्यं विद्यतेयद्यपितथापिविद्रुमस्य सुधाभूमावनुत्पन्नत्वाद्धरतुल्यरसत्वाभा वाद्विद्रुमेणापिसाम्यंनविद्यतइत्यर्थः । बिम्बीफलस्यैवंविधरक्तिमाजावा दृविद्रुमस्यामृतवत्वाजावादेतदधरस्यच एतदुभययुक्तत्वादेतदधरोन्नता स्यात्तुल्यइतिभावः । द्रुमसहितेदेशेविद्यमानस्यद्रुमरहितेदेशेविद्यमा

मस्यचविरुद्धत्वात्साम्याभावइत्यर्थः । विम्बीफलस्यैवंविधरक्तिमाभावा द्विद्रुमस्यामृतवत्त्वाभावादेतदधरस्यचविम्बीफलस्यचयद्यपिसाम्यंविद्यते तथाप्येतस्यानास्तीतिअस्याइतिपदेनसूचितम् । मुखेन्दाविति सुधासंभव सूचनंभैम्यधरोष्ठस्यैव यद्वाअथवान्यस्मादपिहेतोरित्याह यावत् तस्यबिम्बीफ लस्यशोभावृक्षसहितेप्रदेशेबहुवृक्षेवनेवर्तते । बिम्बीफललतायावृक्षाद्याश्र यत्वादस्यतुपुनःसंभाव्यमाना विचार्यमाणासाशोभाविगतवृक्षेनगरेसंभाव्य तेनगरएवभैम्याविद्यमानत्वात् द्रुमभाविसाधारणकृणकवृक्षसहितारण्येत स्यशोभास्यतुविशिष्टावादिवृक्षेनगरेसंभाव्यतइतिवा आरण्यकस्यनागरिक स्यचमहदन्तरमित्यर्थः विस्तरेणालम्प्रतिविम्बशब्दोर्थभेदादिषुद्रष्टव्यः ॥३८॥

जानेतिरागादिदमेवबिम्बं बिम्बस्यचव्यक्तमि
तोऽधरत्वम् ॥ द्वयोर्विशेषावगमाक्षमाणां नाम्नि
भ्रमोभूदनयोर्जनानाम् ॥ ३९ ॥

जानेइति रदनच्छदोपमानत्वेनप्रसिद्धंयद्विम्बंबिम्बीफलन्तदिदमेवभै म्योष्ठलक्षणमेवनान्यदितिजाने । कुतः । अतिरागादतिलौहित्यादत्य नुरागाच्च । लोकप्रसिद्धस्यविम्बीफलस्यतादृग्लौहित्याभावात् सर्वत्रोप मानस्याधिक्याच्चाधरोपमानभूतंयद्विम्बफलन्तद्भैमीरदनच्छदरूपमेवनान्य दित्यर्थः । भैमीरदनच्छदस्योपमानत्वंयुक्तमितिभावः । लौकिकस्यबि म्बस्यचइतःसत्यभूताद्भैमीरदनच्छदात्सकाशादधरत्वंव्यक्तंस्पष्टम् ॥ ता दृग्लौहित्याभावान्न्यूनत्वादुपमेयत्वमित्यर्थः । अथचेदंपुरोदृश्यमानमे वबिम्बमस्ति पुरोदृश्यमानादस्माल्लौहित्याद्धेतोर्बिम्बस्यचप्रसिद्धस्यबिम्बि फलस्याधरत्वमोष्ठत्वम् । नत्वेवंसतिलोकप्रसिद्धव्यपलापप्रसङ्गइत्यतआह द्वयोर्बिम्बाधरयोर्विशेषावगमेतारतम्यज्ञाने अक्षमाणामसमर्थानांपामरा णांजनानांद्वयोरनयोर्बिम्बाधरनाम्निभ्रमोभूत् । तारतम्यस्यास्फुरणात्पा मरैर्बिम्बत्वेनपरीक्षकाभिमतस्याधरस्यसंज्ञाकृताअधरत्वेनचपरीक्षका भिमतस्यबिम्बसंज्ञाकृता । अतःपामरप्रसिद्धव्यपलापोनतुपरीक्षकप्रसिद्ध व्यपलापइत्यर्थः । बिम्बापेक्षयाभैम्योष्ठोधिकएवेतिभावः ॥ ३९ ॥

मध्योपकण्ठावधरोष्ठभागौ भातःकिमप्युच्छ्वसि

तौ यदस्याः ॥ तत्स्वप्नसंभोगवितीर्णदन्त दंशेन किंवानमयापराद्धम् ॥ ४० ॥

मध्येति । अस्याभैम्याअधरोष्ठस्यमध्योपकण्ठौमध्यसमीपवर्तिनावध रोष्ठभागौअधरप्रदेशौकिमपिकिञ्चिदुच्छूसितौउच्छूनौयद्यस्माद्भातः शोभे ते । तस्माद्धेतोःस्वप्नेयोभैमीसंभोगस्तत्रवितीर्णोदत्तोदंशोदन्तक्षतयेनएवं विधेनमयावामयैव किंनापराद्धंकिन्तुतादृशापराधोमयैवकृतः । वाशब्दःसं भावनायांवा । स्वप्नसंभोगेवितीर्णनदन्तक्षतेनकृत्वेतिवा । अधरोष्ठस्यमध्ये समीपवर्तिनोःपार्श्वदेशयोःकिञ्चिदुच्छूनतासामुद्रिकोगुणः । दन्तक्षतेनाप्यु च्छूनताभवति । स्वप्ने प्रत्यक्षंनयेयंसञ्जुम्बतेइत्युत्कण्ठातिशयोव्यङ्ग्यः॥४०॥

विद्याविदर्भेन्द्रसुताधरोष्ठे नृत्यन्तिकत्यन्तरभेदभाजः ॥ इतीवरेखाभिरपभ्रमस्ताः संख्यातवान्कौतुकवान्विधाता ॥ ४१ ॥

विद्याइति । अन्तरभेदभाजःअवान्तरभेदसहिताः कतिविद्याःकियन्ती र्विद्याःविदर्भेन्द्रसुताधरोष्ठेभैम्यधरोष्ठे नृत्यन्तिस्फुरन्तितासद्रूपेणवर्तन्तेइ तीवेति स्वयमेवसन्दिहानइवेतिलोकसन्देहनिवृत्त्यर्थंवा कौतुकवानपभ्रमः भ्रमरहितोविधाताब्रह्माऽधरोष्ठवर्तिनीभिर्रेखाभिः कृत्वाइयन्त्योविद्यावि द्यन्तइतिताःविद्याःसंख्यातवानगणितवान् । रामणीयकहेतुभूतारेखावि द्यागणनार्थत्वेनउत्प्रेक्षिताः । अन्तरेओष्ठमध्येइतिवा ॥ ४१ ॥

संभुज्यमानाद्ययथानिशान्ते स्वप्नेनुभूतामधुराधरेयम् ॥ असीमलावण्यरदच्छदेयं कथंमयैवप्रतिपद्यतेवा ॥ ४२ ॥

संभुज्येति । निशान्तेरात्रिमध्येरात्र्यवसानसमयेवाअद्यस्वप्ने तयासंभुज्य मानाकृतोपभोगा इयंभैमीचुम्बनवशान्मधुराधराऽमृतोष्ठीसुन्दराधरावा अनुभूता इत्यमनिर्वचनीयप्रकारेणासीमलावण्योनिर्मर्यादसौन्दर्योरदन च्छदोऽधरोष्ठोयस्याःसेयंमयैवकथंवाप्रतिपद्यतेप्रतीयते । आश्चर्यमेतदित्य र्थः । स्वप्ने यादृशीसुन्दराधरानुभूतातादृश्येवजाग्रदवस्थायामपिइत्याश्चर्यम् । अत्रहेतुर्निशान्तपदम् । गोविसर्जनवेलायांदृष्टःसद्यःफलंभवेदिति ।

अथवयामयामधुररसयुक्ताधरा ऽनुभूतासा ऽनिमेषादोलयवरसभावोयस्याः एवंविधो ऽधरोष्ठोयस्याः सानयैवकथमनुभूयते इत्याश्चर्यम्महत् मधुररसलवणरसयोः परस्परंविरोधादित्यर्थः ॥ ४२ ॥

यद्विप्रसादीकुरुतेसुधांशो रेषांमहस्रांशमपिस्मितस्य ॥ तत्कौमुदीनांकुरुतेतमेव निर्मिंच्छनादेव सफलंमजन्म ॥ ४३ ॥

स्मितंवर्णयति । यदीति । एषास्मितस्यसहस्रांशंसहस्रपरिपूरकं लेशमपि सुधांशोर्यदिचेत्प्रसादीकुरुतेचन्द्रस्यप्रसन्नाभूत्वाप्रसादत्वेनस्मितलेशमपिददाति तर्हि सचन्द्रोदेवस्तमेवस्मितसहस्रांशमेव निर्मिच्छ्य कौमुदीभिरेव पूरयित्वानीराजनंकृत्वा कौमुदीनाञ्जन्मसफलंकृतकृत्यतांकुरुते । अत्युत्तमस्यतस्यनीराजनस्यानेतासांभवनयोग्यत्वात् । अन्यदप्युत्तमंवस्तूत्तमेनवस्त्रादिनानीराज्यते । कुमुद्वस्तत्स्मितसहस्रांशस्यापिसदृशयोमेतिभावः । सहस्रस्यासावंशश्चेतिव्युत्पत्तिः । सहस्रपूरणोंशइतिलक्षणयाव्याख्येयम् । अन्यथानित्यंशतादीत्यादिनाडट्स्तत्रकागमेसहस्रतमंस्यादितिस्याम् । (निर्मञ्छनात्कौशइतिपठितोपि) निःपूर्वोनिर्मञ्छतिर्नीराजनार्थः ॥ ४३ ॥

चन्द्राधिकैतन्मुखचन्द्रिकाणा न्दरायतन्तत्किरणादघनानाम् ॥ पुरःसरस्तस्तदद्वितीयं रदावलिद्वन्द्वनिभिन्दुवृन्दम् ॥ ४४ ॥

श्लोकत्रयेणदन्तपङ्क्तिद्वयंवर्णयति । चन्द्रेति । तस्यचन्द्रस्यकिरणाज्जात्यभिप्रायेणैकवचनम् । किरणेभ्यःसकाशाद्दृघनानांमुखचन्द्रस्यचन्द्राद्दुग्धत्वादतिनिबिडानाञ्चन्द्रादधिकाञ्चन्द्रोज्ज्वलमेतन्मुखमेनीमुखचन्द्रस्तस्यचन्द्रिकाणां दरायतमीषद्दीर्घं अथवचन्द्रिकाधिकैतन्मुखचन्द्रचन्द्रिकारूपाणांमेवघनानामेघानाम् तत्किरणात्तेभ्योमेघेभ्यःक्षरणाद्धेतोरीषद्रायतं पुरःसराणिअग्रेसराणिक्षरणानिनिःसृतानिपूपन्तिबिन्दवस्तान्येवद्वितीयानियस्यतदुबिन्दुवृन्द रदावलिद्वंद्वंतद्दन्तपङ्क्तिद्वितयमिवाचरति । अथनिःसृतबिन्दूनांसूक्ष्मत्वादपोदन्तत्वंपश्चाद्व्यवधानमेव निरस्ततांबिन्दूनामीषदायतत्वाद्दूषर्दन्तत्वमित्यर्थः । पर्जन्यवशात्पटलान्तात्प्रथमने

काविन्दुपङ्क्तिः पततितदनु द्वितीयातथैवलग्नैषदायतापततितद्द्विदन्तपङ्क्तिद्वयमिति । दन्तानामीषदायतत्वंघनत्वंसूक्ष्मत्वञ्चसामुद्रिकोगुणः । रदावलिद्वन्द्वेतीत्यत्रसर्वप्रातिपदिकेभ्यः क्विबाचारइतिक्विप् ४४ ॥

सेयंममैतद्विरहार्त्तिमूर्छा तमीविभातस्यविभाति सन्ध्या ॥ महेन्द्रकाष्ठागतरागकर्त्री द्विजैरमीभिः समुपास्यमाना ॥ ४५ ॥

सेयमिति । सेयञ्जैमीममएतंयासहविरहोवियोगस्तज्जन्यायाआर्त्तिः पीडातज्जन्यामूर्छासैवतमीरजनीतस्याविभातस्यप्रातःकालस्यसमयस्यसम्बन्धिनीसन्ध्याविजातिप्रकाशते । कीदृशीमहेन्द्रस्यकाष्ठामूत्कर्षंगतः प्राप्तःकाष्ठांमर्यादामगतोऽप्राप्तोवारागोनुरागस्तस्यकर्त्रीजनिका । तथाअमीभिःप्रत्यक्षदृश्यैर्द्विजैर्दन्तैःसमुपास्यमाना । विभातंयस्यास्तेत्यनेनजैमीदर्शनादूनूर्छापगमःसूचितः । प्रातःसन्ध्यापिप्राचींप्राप्तिलौहित्यजनिकाब्राह्मणैःसेव्यते । रजनीयामिनीतमीत्यमरः ॥ ४५ ॥

राजौ द्विजानामिहराजदन्ताःसंबिभ्रतिश्रोत्रियविभ्रमंयत् ॥ उद्वेगरागादिमृजावदाताश्चत्वारएतेन दवैमिमुक्ताः ॥ ४६ ॥

राजाविति । इहदृश्यमानायांद्विजानान्दन्तानाम्बराजौ पङ्क्तौएतेदृश्यमानाश्चत्वारोराजदन्तादन्तभेदाः यद्यस्माच्छ्रोत्रियाणांविभ्रमंविलासमुज्ज्वलत्वलेशन्धारयन्ति तस्मान्मुक्तानेतान्राजदन्तान्मौक्तिकानिअवैमि । किंभूताःउद्वेगरागःक्रमुकफलयोःलोहितिमासआदिर्यस्यतदादिरादर्शजयाशोधनेनकृत्वाऽवदाताउज्ज्वलाः । क्रमुकत्वचाभस्मीभूतेनयाक्रमुकेणकृतमार्जनादन्ताअत्युज्ज्वलाभवन्तिइति चतुर्णामेवमार्जनंक्रियतेतेषामेवदर्शनविषयत्वात् । ततश्चात्युज्ज्वलत्वान्मुक्तासाम्यंयुज्यते ॥ अथवराजदन्ताःस्वरूपंयेषान्तेराजदन्ताः एवंभूताःद्विजानांब्राह्मणानांपङ्क्तौश्रोत्रियविभ्रमपङ्क्तिपावनत्वम्बिभ्रति । उद्वेगस्यउद्वेजनस्यचित्तवैकल्यस्यरागस्योभिलाषस्यादिशब्दाद्दुःखादेश्चयन्मार्जनंपरित्यागस्तेन निष्कलुषाश्चभवन्ति । उत्कृष्टोवेगोयेषांरागादीनामितिवा । एवम्विधाश्च

स्तनामुक्ताभवन्तीतियुक्तमेवेत्यर्थः । घोण्टातुपूगःक्रमुकोगुवाकःखपुरोस्यतुफलमुद्वेगमित्यमरः । दन्तानांराजानोराजदन्ताः । राजदन्तादिषुपाठात्परनिपातः ॥ ४६ ॥

शिरीषकोशादपिकोमलाया वेधाविधाय क्रमशोऽङ्गमस्याः ॥ प्राप्तप्रहर्षःसुकुमारसर्गे समापयद्वाचिमृचिद्रुत्वमुद्राम् ॥ ४७ ॥

श्लोकचतुष्टयेनवाणींवर्णयति । शिरीषेति । वेधाःशिरीषस्यकोशात्कुसुमादपि कोमलायाभैम्याअस्याः अशेषसकलंअङ्गंसुकुमारतरंविधायनिर्माय सुकुमारसर्गेमृदुतरवस्तुसृष्टौप्राप्तप्रकर्षःसन् वाचिअस्याएववाण्यामृदुत्वमुद्रांसौकुमार्यमर्यादांसमापयत् । अस्यासुकुमारतराण्यंगान्यङ्गानिकृत्वासौकुमार्यमर्यादांभैमीवाण्यामेवसमाप्तिंनीतवान् । अतिमधुरस्वरेयमितिभावः । अन्योपिक्वापिशिल्पीस्वोत्कर्षसमाप्तिंनयति ॥ ४७ ॥

प्रसूनबाणाद्वयवादिनीसा काचिद् द्विजेनोपनिषत्पिकेन ॥ अस्याःकिमस्यद्विजराजतोया नाधीयतेभैक्ष्यभुजातरुभ्यः ॥ ४८ ॥

प्रसूनेति । तरुभ्यआम्रादिवृक्षेभ्योजैक्षभुजाफलपुष्पादिरूपभिक्षासमूहभोजिना पिकेनकोकिलेनद्विजेनपक्षिणा प्रसूनबाणःकामस्तस्माद्वितवादिनीसाभैमीवाग्रूपा काचिदपूर्वोपनिषद्रहस्यपाठ्यः अस्याभैम्याः आस्यद्विजराजतोमुखचन्द्रान्नाधीयतेमपठ्यतेकिमपितुपठ्यतएव कषायरसास्वादिमञ्जरीभक्षणेनपिकस्यमधुरस्वरत्वमुचितंपिकः पञ्चमस्वरंपठति । सभैमीस्वरएवेदानीमपितेनाभ्यस्यतेपरन्तुनायातीत्यर्थः । कोकिलस्वराधिकभैमीस्वराकर्णनमात्रेणमदनाद्वितमेवभवतीतिभावः । अन्येनापिभिक्षाभुजाब्राह्मणेनाद्वैतप्रतिपादिका एकमेवाद्वितीयंब्रह्मेत्यादिकोपनिषद्ब्राह्मणश्रेष्ठादधीयते । नविद्यतेद्वयंयस्यतदद्वयप्रसूनबाणलक्षणांयदद्वयमितिसमासः । द्विजराजतआख्यातोपयोगइत्यपादानत्वम् भिक्षाणांसमूहोभिक्षादिभ्योण् ॥ ४८ ॥

पद्मःकुसुमानमवेक्ष्यलक्ष्मी मेकस्यविष्णोःस्त्रय

णात्सपत्नीम् ॥ आस्येन्दुमस्यामजतेजिताब्जं स
रस्वतीतद्विजिगीषयाकिम् ॥ ४९ ॥

पत्नेति सरस्वतीअस्याभैम्यास्तस्याःसपत्न्यालक्ष्म्याविजिगीषयाउनु मे
च्वर्यासपत्नीगृहादुत्तमंगृहम्नकथंकारंस्यादितिमनीषया सौन्दर्येणाजिता
ब्जज्जितपद्मं आस्येन्दुंमुखम्चन्द्रमयतेसेवते किंवितर्कें किंकृत्वाएकस्यवि
श्वोरुभाभ्यांश्रयणादात्मनःसपत्नींलक्ष्मीं पद्मस्थक्रोड.ऋयवसद्यस्या
मंयस्याःसानवेत्यचन्द्रोदयेकमलसङ्कोचाचन्द्रोपिजिताब्जोभवति यद्वा
जितोब्जःचन्द्रोयेन चन्द्रेणकमलञ्जितंसोप्यनेनजितइतितदाश्रयणाल्लक्ष्मी
वासयाऽतितराञ्जितेत्यर्थः । वक्रोक्त्यादिनातुयमस्यामेवविद्यतेनान्यस्या
मितिभावः । अन्यापिसपत्नीगृहाद्युत्तमंविलोक्यैव्यं यास्वगृहादितस्माद
प्युत्तमङ्करोति । अब्जोजैवातृकःसोमइत्यमरः ॥ ४९ ॥

कण्ठेवसन्तीचतुरायदस्याः सरस्वतीवादयतेविप
ञ्चीम् ॥ तदेवचाग्भूयमुखेमृगाक्ष्याः श्रोतुःश्रु
तीयातिसुधारसत्वम् ॥ ५० ॥

कण्ठइति । अस्याःकण्ठेवसन्तीवीणावादनेचतुरासरस्वतीयद्विपञ्ची
म्वीणाम्वादयतेतदेव वीणावादनमेवमृगाक्ष्यामुखेवाग्भूयवाणीत्वेनपरि
णम्य श्रोतुःश्रुतीकर्णौसुधारसत्वंयाति वीणावन्मधुरस्वरेयमितिभावः ।
वाग्भूयेत्यत्रच्व्यन्तत्वाद्गतिसमासाः ॥ ५० ॥

विलोकितास्यामुखउन्नमय्य किम्वेधसेयंसुषमा
समाप्तौ ॥ धृत्युद्गतायाचिबुकेचकास्ति निम्नंमना
गङ्गुलियन्त्रणेव ॥ ५१ ॥

चिबुकंवर्णयति विलोकितेति विधिनासुषमासमाप्तौसुखनिर्माणशोभा
समाप्तौसत्या मुखमुन्नमय्यकियदूर्ध्वीकृत्य विलोकितमास्ययस्याएवंभूता
किम् । अलङ्करणसमाप्तौअलङ्कारकारिणीमुखमुन्नमय्यालङ्कारशोभाम्वि
लोकयति विधिनापितथैवकृतमितिवितर्कः अस्यामुखमुन्नमय्येतिवायो
जना कथंज्ञातमित्यतआह यद्यस्मान्मनागीषत्किञ्चिद्गभीरञ्चिबुकेऽस्य
ग्रसत्यौधृत्युद्गताअङ्गुलीधारणजन्या अङ्गुल्याकृतायायन्त्रणानियमनासैव

यकास्तिशोन्नते क्षतिमाईवाद्कुलिघारणादपिइन्चग्रसन्धौनिम्नत्वज्ञात मित्यर्थः । उतमञ्जीर्यांस्वभावादेवचिबुकंनिम्नं भवतीति ॥ ५१ ॥

प्रियामुखीभूयसुखीसुधांशु र्जयत्ययंराहुभयव्यये
न ॥ इमान्दधाराधरबिम्बलील. न्तस्यैवबालङ्क
रचक्रवालम् ॥ ५२ ॥

पुनरपिश्लोकनवकेनसाम्यवंमुखंवर्णयति । प्रियेति अयं सुधांशुश्चन्द्रः प्रियामुखं.न्र्यभैमीमुखत्वंप्राप्य मुखाकारेणपरिणम्य राहुभयस्यव्ययेनभावेनसुखीनिश्चिन्त.सन् जयतिसर्वोत्कर्षेणवर्तते मुखचन्द्रस्यराहुबाधानास्तीतिसुखित्वं यतश्चायंचन्द्रएवतस्मात्तस्यैवचन्द्रस्यबालमुदयसमयभाविकरचक्रवालङ्किरणमण्डलइमांप्रत्यक्षामधरबिम्बलीलामोष्ठबिम्बलीलामधरोष्ठविलासन्दधार चन्द्रतुल्यंमुखंतदितमात्ररक्ततुल्यचन्द्रतुल्योधरोष्ठइतिभावः अन्योपिवैरिणःसकाशाद्भीतस्तदीयपरिजनोपिभीतःसन् तदनवबोधार्थमन्यथाकारंकृत्वाधारयन्सुखीभवति बालबलीलांधारयति ५२

अस्यामुखस्यास्तुनपौर्णमास्यं पूर्णस्यजित्वामहि
माहिमांशु ॥ भूलक्ष्मखण्डन्दधदर्धमिन्दु भालस्तृ
तीयःखलुयस्यभागः ॥ ५३ ॥

अस्याइति । अस्याःपूर्णस्यसर्वावयवपरिपूर्णस्याप्यवर्तुलस्य मुखस्य महिमाश्रेष्ठत्व कीर्तिरचचन्द्रापेक्षयाधिकपरिमाणस्व नास्तु । अपितुअस्त्वित्यर्थः । किम्भूतस्यमुखस्यपूर्णिमाआस्यंप्रारम्भोयदुदयेपूर्णिमाया आस्यमिवचा तथाभूतंहिमांशुंपूर्णचन्द्रञ्जित्वास्थितस्यकुतोधिकत्वमित्यतआह खलुयस्यावयवस्यमुखस्य तृतीयोभागोंऽशोभालोललाटं अर्धखण्डेन्दुःसचकलरूपश्चन्द्रः किंभूतइन्दुस्तद्भ्रू वावेवलक्ष्मकलङ्कंदधत् धारयद्मुखस्यतृतीयोभागोभालोयस्यचन्द्रार्धं एकेनांशेनमुख चन्द्राधिकमुखीचन्द्रार्धतुल्यभाल.चेयमितिभावः । भालोर्ध्व चन्द्रतुल्यस्तदधोभागःपूर्णचन्द्रतुल्यइत्यर्थः । जित्वेत्यनन्तरंस्थितस्येत्यध्याहार्यं अन्यथाभिन्नकर्तृकत्वात्क्त्वानुपपत्तिः ॥ ५३ ॥

व्यधत्तधातामुखपद्मस्याः संप्र.जमम्भोजकुले

खिलेपि ॥ सरोजराजीमृजतोऽद्भीयं नेत्राभिधे यौवतपत्रसेत्राम् ॥ ५४ ॥

व्यधत्तेति वेधा अखिलेष्यंभोजकुलेष्वस्यामुखपद्मं सम्राजंद्वादशराजमण्डलाधीश्वमधत्ताकृत अथचतदर्पणयासम्यगतिशयेनराजतइतिसम्राजम् । अतएवनेत्राभिधेयौवतेत्रपत्रकौसरोजराजौ अन्यकमलापेक्षयाभैमीनयनीभूतेकमलश्रेष्ठेतद्रूपौसरोजराजौ अदसीयामुख्यतन्मुखकमलस्यसंबन्धिनःसेवांसृजतःकुरुतः अस्ययदिसम्राट्त्वंनस्यात्तर्हिकिमितिनेत्राभिधाभ्यांसरोजराजाभ्यांसेवाक्रियेत क्रियतेतावदतोन्यथानुपपत्तिप्रमाणगम्यमस्यसम्राट्त्वमित्यर्थः । भैमीमुखनेत्राभ्यांजिताब्जमितिभावः । अन्योपिसम्राड्राजभिःसेव्यते येनेष्टंराजसूयेनमण्डलस्येश्वरश्चयः । शास्तियश्चाज्ञयाराज्ञःससम्राडित्यमरः ॥ ५४ ॥

दिवारजन्योरविसोमभीते चन्द्राम्बुजेनिक्षिपतःस्वलक्ष्मीम् ॥ आस्येयदस्यानतदातयोःश्री रेकाश्रियेदन्तुकदानकान्तम् ॥ ५५ ॥

दिवेति । दिवारजन्यो क्रमेणदिनरात्र्योः रविसोमाभ्यांसकाशाद्भीतेभयंप्राप्तेभीतेर्भयाद्वा चन्द्राम्बुजेस्वलक्ष्मींस्वशोभां अस्याआस्येयदानिक्षिपतस्यापयतस्तदातयोश्चन्द्रपद्मयोःश्रीर्न सूर्योद्भीतेनचन्द्रेणदिवसेचन्द्राद्भीतेनकमलेनरात्रौयदास्वस्वशोभाभैमीमुखेनिक्षिप्तातदातद्द्वयमपिनिःशोभंजातं अथचनिक्षिपतोन्यासीकुरुतस्तदाचन्द्राम्बुजयोः श्रीर्नास्ति । इदंतुभैमीमुखंपुनरेकस्यचन्द्रस्याम्बुजस्यवा श्रियाशोभयाकृत्वाकदाकस्मिन्समयेदिनेरात्रौवानकान्तमपितुदिनेरात्रौचचन्द्रशोभयाकमलशोभयाचसशोभम्चन्द्रस्यशोभारात्रावेवनदिनेकमलस्यशोभादिनेएवनतुरात्रौभैमीमुखन्तुदिवारात्रौचसशोभमित्यर्थः । भैमीमुखञ्चन्द्रस्यलक्ष्मीरूपनिक्षेपंरात्रौतस्मैप्रयच्छतिदिनेजीतत्वात्तस्याःएवंकमलञ्चलक्ष्मीरूपंनिक्षेपन्दिनेप्रयच्छतिरात्रौभीतत्वात् यनादिनिक्षेपोपिधनिनायदायाच्यते तदेवदातव्योभवतिनस्थापनीयश्चभवति यावद्विद्यतेतावत्तेनैवस्वस्यालङ्कारःक्रियते । दिवाचन्द्रदीप्त्यारात्रौकमलदीप्त्याचात्मानमलङ्करोतीत्यर्थः ॥५५॥

अस्यामुखश्रीप्रतिबिम्बमेत्र जलात्तातान्मुकुरा
न्मित्रात् ॥ अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूष
णं याचितकं कदाचित् ॥ ५६ ॥

अस्या इति । खलूत्प्रेक्षते । पद्मश्चन्द्रश्चोभौ तातात्पितुर्जलान्मित्राद्दर्पणमु कुरादादर्शाच्च अभ्यर्थ्य प्रार्थ्य प्रतिबिम्बमेव याचित्वा अस्या भैम्यामुखश्री प्रतिबिम्बमेवसशोभमुखप्रतिबिम्बलक्षणमेव याचितकं याच्ञया प्राप्तं विभू षणं कदाचिद्दिने रात्रौ च धत्तो धारयतः । जलोत्पन्नत्वात्पद्मस्य पिता जलम् । वृत्तत्वोज्ज्वलत्वादिगुणयोगाद्दर्पणस्य चन्द्रसखत्वं पितुर्मित्राभ्यां याचितक न्दीयते । याचितकालङ्कारः कदाचिद्दीयते न सर्वदा । यद्वा यदा प्रतिबि म्बितं भैमीमुखं तदैव पितरं जलं याचित्वा दिने कमलं शोभते । दर्पणो यदा प्र तिबिम्बितं भैमीमुखं तदैव दर्पणमित्रं याचित्वा रात्रौ चन्द्रः शोभते नान्यथा तयोः शोभेत्यर्थः । भैमीमुखप्रतिबिम्बेनापि सदृशौ यदा पद्मचन्द्रौ न भवतः तदा भैमीमुखसदृशौ कुतस्तरां भवेतां न पितु न कुतोपीति भावः । चौ परस्पर समुच्चये । याचितकम् । याचितेन प्राप्तमित्यर्थे अपमित्ययाचिताभ्यां कक्ना विति कन् ॥ ५६ ॥

अर्कायपत्ये भुवितिष्ठमाना भृङ्गैर्मितामक्षिभिर
म्बुकेलौ ॥ भैमीमुखस्य श्रियमम्बुजन्यो याचन्ति
विस्तारितपद्महस्ताः ॥ ५७ ॥

अर्कायेति । अर्काय सूर्याय पत्ये प्रियाय तिष्ठमानाः स्वप्रकाशनेन सूर्यस्य स्वी यं ज्ञावं ज्ञापयितुकामाः अम्बुजिन्योऽम्बुकेलौ जलक्रीडासमये भृङ्गरूपैरक्षि भिर्नेत्रैः कृत्वा मिता ज्ञातां भैम्याएव मुखस्य श्रियं विस्तारिताः पद्मरूपा हस्ता याभिस्ता एवं भूताः सत्यो भैमीं याचन्ति । खलूत्प्रेक्षते । अस्मत्पतिः सूर्योऽधु नास्मान्गमिष्यतीति त्वन्मुखशोभया पि रुचिरा भवाम इति भैमीमुखशोभां भै मीं याचन्त इत्यर्थः । कमलभैमीवदनयोः सर्वथा साम्यं नास्तीति भावः । अ न्योपि स्वामिनि हस्तं प्रसार्य दृग्लक्षया याच्यते । अन्या प्यन्यदीयमलङ्कारं स्वा लङ्कारकरणार्थं हस्तौ प्रसार्य याचति । क्रीडासमये याचितमवश्यं प्रभुणा दीय ते । अर्कायेति श्लाघह्नुङ्स्थाशपांज्ञीप्स्यमान इति संप्रदानत्वम् । तिष्ठमाना प्रकाशनस्थेयाख्ययो श्चेत्यात्मनेपदम् स्वीयं भावं ज्ञापयितुमिति हेतौ वा शानच् याचिर्द्विकर्मा ५७

अस्यामुखेनैवविजित्यनित्य स्पर्द्धीमिलत्कुङ्कुमरोषभासा ॥ प्रसह्यचन्द्रःखलुनह्यमानः स्याद्वतिष्ठन्परिवेषपाशः ॥ ५८ ॥

अस्याइति । अस्यामुखेनैव नित्यस्पर्द्धीसदास्पर्धमानश्चन्द्रोविजित्यपराभूयखलुनिश्चितंप्रसह्यहठान्नह्यमानोबध्यमानएवअधुनापितिष्ठन् परिवेषएवपाशोबन्धनरज्जुर्यस्यएवम्बिधःस्याद्भवेत् । नान्यथैतद्घटतइत्यर्थः । किंभूतेनमुखेनवद्वर्तनार्थंमिलत्संलग्नकुङ्कुमस्तदेवरोषत्रा क्रोधलौहित्यंयस्मिन् मिलन्तीकुङ्कुमरूपारोषभायस्मिन्नितिवा । भैमीमुखस्पर्द्धयासोपराधश्चन्द्रोमुखेनैवजित्वापरिवेषमिषेणबद्धइत्यर्थः ॥ चन्द्रोपिभैमीमुखसमानोनभवतीतिभावः । अन्योपिस्पर्द्धमानरोषारुणःसन्हठाद्विजित्यनिबध्यातिसोपिबद्धएवतिष्ठतीतिखलूत्प्रेक्षायामानह्यमानइवेति ॥ ५८

विधोर्विधिर्बिम्बशतानिलोपं लोपङ्कुहूरात्रिषु मासिमासि ॥ अभङ्गुरश्रीकमिमंकिमस्या मुखेन्दुमास्थापयदेकशेषम् ॥ ५९ ॥

विधोरिति । विधिर्मासिमासिप्रतिमासङ्कुहूरात्रिषुनष्टेन्दुकलाऽमावास्यारात्रिषु विधोश्चन्द्रस्यबिम्बशतानिबहूनिमण्डलानिलोपंलोपङ्विलुप्यविलुप्य अभङ्गुरश्रीकंअविनश्वरशोभमिमंप्रत्यक्षदृश्यमस्यामुखेन्दुंमुखचन्द्रमेकशेषंमेकश्चासौशेषश्चतथाभूतंअस्थापयत्किंस्थापितवान्किम् । अमावास्यायांसर्वथाचन्द्रादर्शनादियमुत्प्रेक्षा । क्षयित्वाच्चन्द्रबिम्बानामस्यामेवविनश्वरशोभत्वात्तत्कार्यकारित्वाच्च अस्यामुखलक्षणमिन्दुंस्थापितवानित्यर्थः । क्षयित्वादपिचन्द्रोमुखतुल्योनभवतीतिभावः । अन्योपिकारुःस्वयमेवकृतम्वस्तुअनुत्तमंज्ञात्वाविनाश्यसुन्दरतरम्वस्तुस्थापयति । अथवसरूपाणांमध्येकानिचित्सरूपाणिविलुप्यएकशेषः क्रियतेयश्चएकःशिष्यतेसतत्कार्यकारीभवति । लोपंआभीक्ष्ण्येणमुल्चेतिणमुल् ॥ ५९ ॥

कपोलपत्रान्मकरात्सकेतु र्भूभ्याञ्जिगीषुर्धनुषाजगन्ति ॥ इहावलंब्यास्तिरतिंमनोभू रज्यद्वयस्योमधुनाधरेण ॥ ६० ॥

कपोलेति । मनोभूःकामोरतिंप्रीतिमथचरतिंस्वप्रियामवलम्ब्याङ्गीकृत्य तयासहइहभैमीमुखेऽस्ति। किंभूतः कपोललिखितात्पत्रवल्लीरूपान्मकरात्सकेतुःसचिन्हस्तथाभ्रूभ्यांस्तुवैवधनुषाजगज्जीगीषुस्तथाऽधरेणओष्ठलक्षणेनमधुनावसन्तेन कृत्वारज्यत्सानुरागोवयस्योवसन्तलक्षणमित्रंयस्य। अधरेणअधरसंबन्धिनामधुनारसेनकृत्वारज्यन्शोणोवयस्योमदनवृद्धिकरत्वादोष्ठएववयस्य भैमीमुखेमकलकामचिह्नदर्शनादत्रमदनोवसतीत्यनुमीयतइत्यर्थः । भैमीमुखावलोकनात्सबलस्यकामस्योत्पत्तिर्भवतीतिभावः । रज्यदितिकुपिरञ्जोरितिश्यन्परस्मैपदे ॥ ६० ॥

वियोगवाष्पाञ्चितनेत्रपद्मच्छद्मार्पितोत्सर्गपयः प्रसूनौ ॥ कर्णौ किमस्या रतितत्पतिभ्यां निवेद्य पूपौ विधिशिल्पमीदृक् ॥ ६१ ॥

श्लोकपञ्चकेनकर्णौवर्णयति । वियोगेति । अस्याःकर्णौरतिश्चतत्पतिः कामश्चताभ्यां निवेद्यस्यउपहारस्यसंबन्धिनौपूपौमहकौईदृक्किंविधिशिल्पंनिर्माणमितिसम्भावना । एतदर्थंक्लृप्तलक्षणाएतौनिर्मिताविल्यर्थः। किम्भूतौवियोगजनितायेवाष्पा अश्रूणितैरञ्चितस्यपूजितस्यनेत्रपद्मस्यच्छद्मनाव्याजेनार्पितेवितीर्णेउत्सर्गार्थंन्दानार्थंपयःप्रसूनेजलपुष्पेययोस्तौ । अश्रुदानजलंनेत्रेचदानपुष्पेययोः समीपेतिष्ठतः । नैवेद्यसमीपेजलपुष्पेभवतः । आकर्णनेत्रत्वादित्यर्थः । कर्णदर्शनादपिमदनोत्पत्तिरितिभावः । पूपोपूपःपिष्टकःस्यादित्यमरः । निवेद्यअर्हार्थेयत् ॥६१॥

इहाविशद्येनपथातिवक्रः शास्त्रौघनिष्यन्दसुधाप्रवाहः ॥ सोऽस्याःश्रवःपत्रयुगेप्रणाली रेखेवधावत्यभिकर्णकूपम् ॥ ६२ ॥

इहेति । अतिवक्रोवैषम्यादतिकुटिलोव्यङ्ग्यगूढार्थयुक्तोदुर्बोधोनृशंस शास्त्रौघस्यशास्त्रसमूहस्यनिष्पन्दःसारभागएवसुधाप्रवाहोऽमृतप्रवाहः येनपथाइहअस्याःकण्ठकूपेआविशत् । सपन्थाअस्याःभैम्याःश्रवःपत्रयुगेकर्णताटङ्कयुगेप्रणालिकायारेखेव अभिकर्णकूपङ्कर्णरन्ध्रंलक्षीकृत्यकर्णकूपसमुखम्धावति यादृशीप्रणालीतादृशएवप्रवाहोभवति । अत्रचता

टङ्कप्रणालिकेकुण्डलाकारत्वाद्वक्रेअतस्तत्रगच्छन्प्रवाहोपिवक्रोयुक्तः । यद्वा वक्रगामिनोहिप्रवाहस्यप्रणालीरूपोमार्गोवक्रएवभवति । कूपश्चानुधावति । अतीववक्रकर्णरेखारूपयाप्रणाल्याकृत्वावक्रःशास्त्रसुधाप्रवाहः कर्णयुगेभैम्यास्याप्रविष्टइत्यर्थः । वक्रोक्तिःसुधारूपाभवति । सकलकलाप्रवीणेयमितिभाव. ॥ निष्यन्दतइतिनिष्यन्दः । पचेपचाद्यच् । अनुविपर्यभिनिभ्य.स्यन्दतेरितिषत्वम् । अभिकर्णंकूपमितिलक्षणेनाभिप्रतीतिसमासः ॥ ६२ ॥

अस्यायदष्टादशसंविभज्य विद्याःश्रुतीदध्रतुरर्धमर्धम् ॥ कर्णान्तरुत्कीर्णगभीरलेख. किन्तस्य संख्यैवनवानवाङ्कः ॥ ६३ ॥

अस्याइति । अस्याः श्रुतीकर्णौअष्टादशविद्याःसम्विभज्यद्विधाकृत्य यदर्धमर्धंप्रत्येकन्धारयामासतुः तस्यार्धस्यकर्णान्तःकर्णमध्येउत्कीर्णोटङ्कितागभीरानिम्नारेखायस्यएवभूतोनवसंख्याद्योतकोऽङ्कोमवाऽपूर्वोक्षयंरूपासङ्ख्याकिन्न अपितुभवत्येव नवसंख्याकाश्विद्यामेकाश्रुतिर्धारयति । अपरापिनवसंख्याकामितिद्योतनार्थंब्रह्मणाएवकर्णमध्ये रेखारूपोऽष्टादशार्धगणनरूपोनवाङ्कोनिर्मितइत्यर्थः । तस्यैवार्धसंख्यानवाकिंनवाङ्कएवेत्यर्थः । इतिवानवेतिचेन्निषेधार्थः । अस्याकर्णरेखानवाङ्कतुल्यासलक्षणेतिभावः ॥ ६३ ॥

मन्येमुनाकर्णलतामयेन पाशद्वयेनच्छिदुरेतरेण ॥ एकःकिपाशम्वरुणम्विजिग्ये नङ्गीकृतायासततीरतीशः ॥ ६४ ॥

मन्यइति । रतीशःकामोऽमुनैतदीयेनकर्णलतामयेन छिदुरेतरेणदृढतरेणपाशद्वयेनपाशरूपशस्त्रद्वयेनकृत्वा एकएवएकाकीपाशोयस्यैवम्विधम्वरुणंसुखेनविजिग्येजितवान्मन्ये किंभूतोनङ्गीकृताआयासततिः श्रमसाहित्यंयेन पाशद्वयेनैकस्यपाशस्यजय.सुकरइति आयासराहित्यकर्णयुगदृष्ट्वावरुणादयःसर्वेपिकामवशगाभवन्तीतिभावः । पाशोबन्धनशस्त्रयोरित्यमरः । विजिग्येविपराभ्याञ्जेरितितङ् ॥ ६४ ॥

आत्मैवतातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोपि ॥ तच्चापयोःकर्णलतेभ्रुवोर्ज्ये वंशत्वगंशौचिपिटौकिमस्याः ॥ ६५ ॥

आत्मेति । स्मरोपितस्माच्चतुर्दोश्चत्वारोदोषाबाहवोयस्यतादृश उचितोयुक्तःयतश्चतुर्भुजस्यश्रीकण्ठस्यतातस्यपितुरात्मैवस्वरूपमेव । आत्मावैपुत्रनामासीतिश्रुतेः । पितुःसदृशपुत्रोयुक्तएव । तस्यचतुर्भुजत्वेश्रस्याभ्रुवोस्तच्चापयोर्ज्यरूपयोर्द्वयोः स्मरधनुषोश्चिपिटेविस्तृतेकर्णलतेएव वंशत्वगंशौवेणुत्वग्भागौत्वेकिम् । ज्येभ्याभ्रुवौकामधनुषोकर्णौमौर्व्यौ द्वयोर्धनुषोर्मौर्वीद्वयंयुक्तम् । निर्व्यापारस्यधनुषोऽवतारितामौर्वीकोणेतिष्ठतिकर्णलताअपिभ्रूधनुषोःकोणेविद्यतेइत्यर्थः । चिपिटावित्यपिपाठः ६५

ग्रीवाद्भुतैवावटुशोभितापि प्रसाधितामाणवकेनसेयम् ॥ आलिङ्गितामप्यवलम्बमाना सुरूपताभागखिलोर्ध्वकाया ॥ ६६ ॥

ग्रीवास्वर्णयति । ग्रीवेति । सेयङ्ग्रीवाद्भुतैवाश्चर्यभूतैवअर्णाद्भुमैभ्याः । अद्भुतत्वमेवविशेषणैराह । किंभूताअवटुर्घाटिकाघाटिकयाग्रीवापुरोभागेनालङ्कृता पिःसमुच्चये माणवकेनार्धहाराख्येनहारविशेषेणवाप्रसाधितातथाआलिङ्ग्यतामपि आलिङ्गनयोग्यतासौन्दर्यमवलम्बमानाआश्रयन्ती अतएवसुरूपतांशोभनरूपत्वंभजत्याश्रयतएवस्त्रियोऽखिलऊर्ध्वकायःशरीरोर्ध्वदेशोयस्याः कण्ठसौन्दर्यात्सकलःशरीरोर्ध्वदेशःशोभते । ईदृशीग्रीवानान्यस्याइत्यर्थः । असुरूपतांनाकृष्यातिप्रियत्वात्प्राणरूपतांनागखिलोर्ध्वकायोयथाकृत्वेतिवा । याऽवटुशोभितानसामाणवकेनबालेनप्रसाधितेतिविरोधादाश्चर्यम् । अथवालिङ्ग्यतामर्दलविशेषत्वंतद्रूपत्वमवलम्बते । तासुरूपतांनागोऽखिलाऊर्ध्वकामृदङ्गविशेषायस्यायथावा । हरीतक्याकृतिस्त्वङ्क्योयवमध्यस्तथोर्ध्वकः । आलिङ्ग्यश्चैवगोपुच्छाकारः । मृदङ्गामुरजाभेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयइत्यमरः । सरूपवेतिपाठोवा । ग्रीवयाकृत्वाऽद्भुतेतिएकपदंभैनौविशेषणानि । अवटुर्घाटाकृकाटिका । अर्धहारोमाणवकइत्यमरः । नवेम्माणकोबालेहारभेदेकुपूरुषेइत्यजपालः ॥ ६६ ॥

कवित्वगानप्रियवादसत्या न्यस्याविधाताव्यधि ताधिकण्ठे ॥ रेखात्रयन्यासमिषादमीषां वासो यसोयन्त्रिविभाजसीमाः ॥ ६७ ॥

कण्ठम्वर्णयति । कवित्वेति । विधाताअस्याअधिकण्ठेकण्ठे कवित्वगानंप्रियवाद.प्रियवचनंसत्यञ्चतानि न्यधितविरचितवान् । कुतोज्ञातमित्यतआह । सोयस्विधाताकण्ठेरेखात्रयस्यन्यासस्यमिषाच्चतुर्णाममीषांकवित्वादीनांपृथग्वासायस्थित्यर्थंसीमाश्चतस्रोविभाजविभक्तवान् रेखात्रयेणचत्वारिस्थानानिभवन्ति । कवित्वादिकलावतीत्वङ्कम्बुकण्ठीत्वञ्चअस्यामस्तीतिभावः रेखात्रयाङ्किताग्रीवाकम्बुग्रीवेतिकथ्यते ॥ ६७ ॥

बाहूप्रियाजयायतांमृणालं द्वन्द्वेजयोनामनविस्मयोस्मिन् ॥ उच्चैस्तुतच्चित्रममुष्यभग्न स्यालोक्यते निर्व्यथनंयदन्तः ॥ ६८ ॥

श्लोकद्वयेनबाहूवर्णयति बाहूइति । प्रियायाःबाहूमृणालञ्जयताम् । अनुमतमेतत् । यतोऽस्मिन्द्वन्द्वेयुगलजयोजयोनामयत्सनविस्मयः । अतिगौरत्वादतिमृदुत्वाच्चबाहुभ्यांमृणालञ्जितञ्जिनाश्चर्यमित्यर्थः । अयचद्वाभ्यामेकःसुखेनपराजीयते अथचद्वन्द्वयुद्धेजयोऽभवत्यत्रनाश्चर्यं एकस्यजयोयुद्धेभवत्येव । तत्तु तत्पुनरुच्चैरतिशयितञ्चित्रमाश्चर्यं यद्भग्नस्यजितस्यअमुष्यान्तःकरणंनिर्व्यथनंव्यथारहितमालोक्यते । पराजितस्यान्तःकरणंसव्यथम्भवति । अस्यतुनेत्याश्चर्यं द्विधाकृतमृणालमध्येच्छिद्राणि दृश्यन्तेऽनेनीभुजौहिमृणालादपिगौरतरौकोमलतरावितिभावः । द्वंद्वङ्कलहयुग्मयोः । छिद्रंनिर्व्यथनमित्यमरः । व्यथेनिर्गतंव्यथमान्निर्व्यथनमितिनिरादयइतितत्पुरुषः ॥ ६८ ॥

अजीयतावर्तशुभंयुनाभ्या न्दोर्भ्यांमृणालङ्किमुकोमलाभ्याम् ॥ निःसूत्रमास्तेघनपङ्कमृत्सुमूर्तासुनाकीर्तिषुतन्निमग्नम् ॥ ६९ ॥

अजीयतेति । आवर्तेनदक्षिणावर्तेनशुभंयुःशुभान्वितारजणीयानाभिर्यस्यास्तयाभैम्या कोमलाभ्यान्दोर्भ्यांभुजाभ्याङ्कृत्वामृणालमजीयतपराजि

तद्भिसुसम्भावनायाम् । अतएवनि सूत्रंनिश्चवस्यसम्पूर्तिरहितंनिरुपायं सदृथवतन्तुरहितन्तन्मृणालंघनपङ्कमृत्सुनिविडकर्दमसृत्तिकारूपासुमूर्ता सुशरीरधारिणीषु अकीर्तिषु अयश सुनिमग्नङ्किमुनास्तेऽपितुतास्याज्जि तत्वादेवस्विधमास्ते । अयशसःश्यामत्वान्मृद्रूपत्वम् । अतिकोमलंमृणा लन्तन्तुरहितम्भवति । अन्योपिकेनचिज्जितोनिरुपाय सन्नकीर्तिषुनिम ग्नस्तिष्ठति । कोमलमपिमृणालन्नैमीभुजसदृशंनेतिभावः । सूत्रन्तुसू चनाग्रन्थे सूत्रन्तन्तुव्यवस्थयोरितिविश्वः । गुणगुःमत्वर्थेऽहंगुणमोर्युमृहृ

रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषाद्गसौहैङ्गुल पञ्चनूणे ॥ हैमैकपुंखास्तिविशुद्धपर्वा प्रियाकरेप ञ्चशरीस्मरस्य ॥ ७० ॥

सीकरत्रेणपाणिस्वर्णयति । रज्यदिति । असौप्रत्यक्षदृश्या स्मरस्यप ञ्चशरी रज्यन्त स्वयमेवरक्ताभवन्तोनखायस्यअङ्गुलीनापञ्चकस्यमिषाद्या जात्प्रियायाभैम्याः करेअस्ति । किंभूतं रक्तस्वाङ्गैगुलहिङ्गुलेनरक्तंपञ्च न्तञ्जनितंयत्तूणिषुधिस्तद्रूपे किंभूतापञ्चशरी । हैमाःसुवर्णमयाएकैके षा पुंखामुखानियस्याःसा तथाविशुद्धानिऋजूनिपर्वाणिग्रन्थयोयस्याःसा मदनस्यपुष्पायुधत्वाद्विषुधिरपिपुष्पमयस्तत्रपुष्पसाम्याद्रक्तपद्मसेव । इषु धिश्चहिङ्गुलेनरज्यते । करस्येषुधित्वम् । पञ्चाङ्गुलीनांपञ्चबाणत्वं रिक्त नखानाञ्चसुवर्णपुंखत्वम् । उभयोरपिविशुद्धपर्वत्वं अत्युत्तमञ्चसुवर्णरक्त म्भवति । भैमीकराङ्गुलिदर्शनात्कामप्रादुर्भावोऽभवतीतिप्रतिपादितवर्णने पञ्चशरत्वम् । हैङ्गुलत्तेनरक्तमित्यण् । पञ्चशरीसमाहारेद्विगोर्ङीप् ७०

अस्याःकरस्पर्द्धनगर्द्धिऋर्द्धं धालत्वमापत्खलुप ल्लवोयः ॥ भूयोपिनामाधरसाम्यगर्द्धं कुत्रन्कथ मत्रास्तुसनप्रवालः ॥ ७१ ॥

अस्याइति । यःपल्लवोऽस्याःकरस्पर्द्धनस्पाणिस्पर्धयागर्द्धिगर्धनंअभि लाषस्तेनऋद्धिराधिक्यं यस्य । यद्वास्पर्धेगर्द्धिऋद्धिरभिलाषसमृद्धिर्यस्य भैमीपाणिभ्यान्तुल्योहमितिचित्तेएवम्विधःसन्बालत्वंनवीनत्वं आपत्ख लु । यस्मान्नवीनस्यैवतत्स्परक्तत्वात्पाणिसाम्याहंत्वाद्यथबालत्वमत्रस्व

माप । स्वापेक्षयाऽधिकेनभैमीपाणिनासहस्पर्धमानत्वात् । अथस्वयं पदोलवःपल्लवश्चरणावयवःपाणिनायदास्पर्धतेतदासमूर्खएव । पाणेरु त्कृष्टत्वात्तस्यचातिनिकृष्टत्वादित्यर्थः । सपल्लवोभूयःपुनरपिअधरसाम्यग र्वंओष्ठतुल्योहमितिगर्वंकुर्वन् प्रकृष्टोबालोऽतिनूतनःकथम्वानास्तु । अ पितुतादृशएवभवतुमूर्खतरश्चेत्यर्थः । नामेत्युपहासे । नवपल्लवादप्यति रिक्तौभैमीकरावितिभावः । अधरवर्णनमासङ्गिकम् । मूर्खेऽर्भकेपिवालः स्यादित्यमरः ॥ ७१ ॥

अस्यैवसर्गायभवत्करस्य सरोजसृष्टिर्ममहस्तले
खः ॥ इत्याहधाताहरिणेक्षणायाङ् किंहस्तलेखी
कृतयातयास्याम् ॥ ७२ ॥

अस्येति । धाताब्रह्मा अस्यांहरिणेक्षणायांभैम्यांविषये हस्तेनलेखी कृतयालिखितयाऽथच अभ्यस्तयातयासरोजसृष्ट्याकृत्वाइतिआहकिम्। पूर्वोक्तंब्रूतेकिम् । इतिकिम् । हेभैमिअस्यभवत्करस्यत्वत्पाणेरेव सर्गा यनिर्माणाय सरोजसृष्टिर्ममहस्तलेखोऽभ्यासोऽभूदिति । हस्तयोःकम लादप्यतिरमणीयत्वलक्षणोभूतरेखाजन्यकमलत्वंचसूचितम् । अन्योपि शिल्पीपूर्वंहस्तलेखङ्करोतिपश्चात्सुन्दरतरम्वस्तुनिर्माति ॥ ७२ ॥

किंनर्मदायाममसेयमस्या दृश्याभितोबाहुलतामृ
णाली ॥ कुचौकिमुत्रस्यतुरन्तरीपे स्मरोष्मशुष्य
त्तरवाल्यवारः ॥ ७३ ॥

बहुभिःसालङ्कारैःकुचौवर्णयति । किमिति । अभितःपार्श्वद्वयेदृश्याद र्शनयोग्यारमणीया ममनर्मदायादर्शनमात्रेणसुखदायाः अस्याभैम्याःसेय म्बाहुलतामृणालीकिमितिसम्भावना । नर्मदायानद्यास्तटद्वयेपिमृणाली दृश्याभवति । तथेयमपिनर्मदा । ततश्चैतदीयबाहुवल्यपिमृणालीतिस म्भाव्यते । अस्याःकुचौअन्तरीपेद्वीपेकिमुत्रस्यतुः । उन्मज्जतुः किंभू तायाःस्मरोष्मणातारुण्यतेजसाकृत्वाशुष्यतरंअतितराम्विनश्यद्वस्यबा ल्यमेववाजलंयस्याः । बाल्यनाशात्तारुण्योद्गमात्द्वीपतुल्यावत्युच्चौकुचौ अस्याइतिभावः । जलशोषान्नर्मदायांद्वीपयोरुन्मज्जनमुक्तम् । बाहुलते

लिपृथग्वा । आप.स्त्रीभूम्निवार्वारीत्यमरः । अन्तरीपंद्वयन्तरुपसर्गेभ्यो पईत् । ऋक्पूरब्धूरितिसमासान्तः ॥ ७३ ॥

तालंप्रभुस्यादनुकर्तुमेता वृत्यानत्यौपतितंन तावत् ॥ परंचनाश्रित्यतरुंमहान्तङ् कुचौकृशा ङ्ग्याःस्वयमेवतुङ्गौ ॥ ७४ ॥

तालमिति । तालंफलद्विविधमपिपतितस्वापतितञ्च । अपतितन्ता लङ्कवं एतीकृशाङ्ग्यामैस्याःकुचौअनुकर्तुंप्रभुसमर्थंस्यात् । यतोपतित मैस्याःकुचावनुकर्तुंनतावत्प्रभुसमर्थं यतत्त्वानेनपरस्परसंश्लेषोद्गमनेनङ्ग स्यौनिरन्तरत्वं नसुन्दरावित्यर्थः तस्यपतितत्वात्तयोरुन्नतत्वात्साम्यंनयु ज्यतइत्यर्थः । अन्योपिपातित्यदोषयुक्तोन्यंसुकृतिनंसमीकर्तुंनशक्तोत्यैवे त्यर्थः । द्वितीयस्यापतितस्याप्यसामर्थ्यमाह । परमतिश्रयेनमहान्तमुन्नम यचपरमत्यनुन्नंतालवृक्षमाश्रित्यतुङ्गमपिकुचौसमीकर्तुंमसमर्थंयतः कुचौ स्वतएवपरानपेक्षमेवतुङ्गौउन्नतरौ । स्वतस्तुङ्गस्यपराश्रयेणचलुङ्गस्यकुतः साम्यम् । तालफलादप्यतिवृत्तौउन्नतरौचमैमीकुचावितिभावः ॥ ७४ ॥

एतत्कुचस्पर्द्धितयाघटस्य ख्यातस्यशास्त्रेषुनिद र्शनत्वम् ॥ तस्माच्चशिल्पान्मणिकादिकारी प्रसि द्धनामाजनिकुम्भकारः ॥ ७५ ॥

एतदिति । एतस्यामैस्याःकुचस्पर्धितयाकलनस्पर्द्धितयाख्यातस्यप्रसिद्ध स्यघटस्यन्यायशास्त्रादिषुयत्कृतकन्तदनित्यं यथाघटइतियन्नित्यंतदकृत कमपिनयथाघटइत्यन्वयव्यतिरेकाभ्यांनिदर्शनत्वंदृष्टान्तत्वमजनिजातम् । प्रसिद्धस्यहिदृष्टान्तत्वम् । अन्योप्यप्रसिद्धःप्रसिद्धस्पर्द्धयाख्यातोभवति । मणिकादिकारी अलिञ्जरादिकारीयतस्माच्छिल्पाद्वैमीकुचस्पर्द्धिघटनि र्माणादेवप्रसिद्धंनामयस्यैवम्विधःसन्कुम्भक रोऽजनिजातः । मणिका दिकारित्वात्कुम्भकारत्वप्रसिद्धिर्न किन्तुभैमीस्तनस्पर्द्धयाख्यातस्यकुम्भस्य निर्माणात्कुम्भकारत्वप्रसिद्धिःनान्यत्कारणम् । वरास्त्रिवेरोधोपिसमंमहा त्मभिरितिभारविवचनात् । कुम्भपरिमाणावेतत्कुचावितिभावः । अलि ञ्जरःस्यान्मणिकइत्यमरः ॥ ७५॥

गुच्छालयस्वच्छतमोदबिन्दु वृन्दाभमुक्ताफलफे निलाङ्के ॥ माणिक्यहारस्यविदर्भसुभ्रू पयोधरैरोहतिरोहितश्रीः ॥ ७६ ॥

गुच्छेति । माणिक्यमयस्यहारस्यरोहितश्रीः लोहिताकान्तिर्विदर्भसुभ्रूपयोधरैर्भैमीकुचैरोहतिप्रादुर्भवति । किंभूतेगुच्छोहारविशेषआलयआश्रयोयेषान्तानिस्वच्छतमानिनिर्मलतमानिउदकबिन्दुवृन्दवज्जलबिन्दुसमूहवद् आभायेषान्तानिमुक्ताफलानितैः फेनिलःफेनयुक्तइवोज्ज्वलतरोऽङ्कोमध्योयस्य । मुक्ताहारमणिक्यहाराभ्यांभैमीकुचौशोभेतेइतिभावः । अथवापयोधरैर्मेघैरोहितश्रीः इन्द्रधनुःशोभाप्रादुर्भवतीतिवक्तिः । हारभेदायष्टिभेदागुच्छगुच्छार्धगोस्तनाः । इन्द्रायुधंशक्रधनुस्तदेवऋजुरोहितम् । रोहितोलोहितोरक्तइत्यमरः । फेनिलःमत्वर्थेफेनादिलश्चेति इलच् ॥ ७६ ॥

निशङ्कसङ्कोचितपङ्कजोय मस्यामुदीतोमुखमिन्दुबिम्बः॥ चित्रन्तथापिस्तनकोकयुग्मं नस्तोकमप्यवाप्तिविप्रयोगम् ॥ ७७ ॥

नि:शङ्केति । यदेतन्मुखमस्याभैम्याअयमिन्दुबिम्बएवोदितः किंभूतः निःशङ्कंयथातथाबलात्कारेणसङ्कोचितानिमिलितानि अथवजितानिकमलानियेन । मुखमिदंनकिन्तुचन्द्रोयमित्यर्थः । चन्द्रेवाह्यिकमलानिसङ्कोच्यन्त । मुखेनैकत्वात्संकुचितेकमलेएवैतेनतुकुचावित्यर्थः ॥ तथाप्युदितेपिचन्द्रेस्तनलक्षणकोकयुग्मञ्चक्रवाकयुग्मङ्कर्तृ स्तोकमपिअल्पमपिविप्रयोगम्वियोगंभाग्भवतिनप्राप्नोतिमिलितमेवयत्तिष्ठतितच्चित्रमाश्चर्यंमन्य चक्रवाकयुग्मश्चन्द्रोदयेवियोगंप्राप्नोति । कुचलक्षणेनेत्याश्चर्यम् । चक्रवाककमलकलिकाकारावतिसन्निकृष्टौचैतत्कुचाविति भावः ॥ ७७ ॥

आभ्याङ्कुचाभ्यामिभकुम्भयोःश्री रादीयतेसाच तयोर्नताभ्याम् ॥ भयेनगोपायितमौक्तिकौतौ प्रव्यक्तमुक्ताभरणाविमौयत् ॥ ७८ ॥

आभ्यामिति । आभ्यांप्रत्यक्षदृश्याभ्याङ्कुचाभ्याङ्कुम्भयोःश्रीःशोभासंप

ग्रबलाद्गृह्यतेआदीयते । इभकुम्भश्रियोत्रद्यनादित्यर्थः । ताभ्यामिभ कुम्भाभ्यामनयोः कुचयोरसौनादीयते । कुतोज्ञातमित्यतआह । यद्य स्मात्ताविभकुम्भौभयेनार्थोस्तनसकाशादेवंभीत्यागोपायितमौक्तिकौ इ मौकुचौतुप्रव्यक्तमुक्ताभरणौ । प्रकटमुक्तालङ्करणौ । मुक्ताग्रहणभयेन कुम्भाभ्यांस्वमुक्तागोपिताः । इभकुम्भाभ्यामपिअधिकश्रीभौकुचौरमणी याविति भावः । अन्योपिभीतःस्वरत्नानिगोपायतिनिर्भयस्त्वप्रकटयति ७८

कराग्रजाग्रच्छतकोटिरर्थी ययोरिमौतौतुलयेत्कु चौचेत् ॥ सर्वन्तदाश्रीफलमुन्मदिष्णु जातम्वटी मप्यधुनानलब्धुम् ॥ ७९ ॥

करेति । कराग्रे जाग्रद्दीप्यमानः शतकोटिर्वज्रोयस्यसइन्द्रोययोःकु चयोरर्थीयाचकःकुचमर्दनाभिलाषी । उन्मदिष्णु लक्ष्मयापक्वंसर्वश्रीफ लंबिल्वफलंकर्तृ चेद्यदितौइमौकुचौतुलयेत् समीकुर्यात् साम्योज्जिला षीयदिभवेत्तदातर्हितद्बिल्वफलं अधुनावटीमपिलक्ष्मयास्तनलावण्यपे शलमपिलब्धुंनजातंनोत्पन्नम् । रम्भाद्यप्सरसोविहायइन्द्रोप्येतयोरभि लाषीताभ्यामतिसुन्दराभ्यांकुचाभ्यांपक्वमपिबिल्वफलन्तुल्यन्नभवेदित्य र्थः । यथाकश्चिदर्थेयाचमानस्तेनाथ्रात्सत्कपर्दकमूल्यमपिनलभतेत था श्रीतुच्छज्ञातमित्यर्थः । अधुनाकुचाभ्यामपिद्वाभ्यांसमानाभूदितिश ब्दपदेनसूचितम् । अथचकराग्रेजाग्रत्यः शतकोटयोद्रव्यसंख्यायस्यसोपिय योरर्थीग्रहणाभिलाषीतावि मौकुचौसर्वलक्ष्मीफलन्तुलयेत् तदाउन्मदि ष्णुत्वात्वटीवराटीकामपिलब्धुंनजातंनयोग्यमित्यर्थः वट कपर्दकेन्यग्रोध इतिविश्वः । स्त्रीस्यात्काचिन्मृणाल्यादिर्विवक्षापचयेयदीत्यमरसिंहवच नादल्पोवटोवटी । उन्मदिष्णुरित्यत्रालङ्कृञीतिइष्णुच् ॥ ७९ ॥

स्तनावटेचन्दनपङ्किलेस्या जातस्ययावद्युवमा नसानाम् ॥ हारावलीरत्नमयूखधाराकारास्फुर न्तिस्खलनस्यरेखाः ॥ ८० ॥

स्तनेति । चन्दनेनपङ्किलेआर्द्रचन्दनयुक्ते अस्याःस्तनावटेगम्भीरेस्त नमध्येजातस्यनिमज्जस्ययावद्युवमानसानांसर्वतरुणान्तःकरणानांस्खल

नस्यपतनस्यहारावल्यांरत्नानितेषांमयूखधाराःकिरणपरम्पराःआकार स्व रूपंयासान्तारेखाः स्फुरन्तिप्रतिभासन्ते। किरणपरम्परेयंनभवतिकिन्तु एताःपतनरेखाएवेति। एवंभूतंस्तनमध्यंदृष्ट्वासर्वेपिमुह्यन्तीति तत्रस्त नंस्योक्तत्वात्तत्रालब्धावकाशाइतिभावः। पङ्किलेगर्तेलोकस्यपतनन्तद्रे खाश्चोत्पद्यन्ते। अवटःस्यात्खिलेगर्तेकूपेकुहकजीविनीतिविश्वः। पङ्किलः पिच्छादिः। यावन्तोयुवानस्तावतामितियावद्युवंसाकल्येव्ययीभावः॥८०॥

क्षीणेनमध्येपिसतोदरेण यत्प्राप्यतेनाक्रमणम्व लिभ्यः॥ सर्वाङ्गशुद्धौतदनङ्गराज्य विजृंभितम्भी मभुवीहचित्रम्॥ ८१॥

वलीसहितमुदरम्वर्णयति। क्षीणेनेति। मध्येपिअवलग्नेसताविद्यमा नेनक्षीणेनकृशतरेण उदरेणयद्वलिभ्यस्त्रिवलिभ्यःसकाशादाक्रमणमभि भवोनप्राप्यते तत्सर्वाङ्गशुद्धौसर्वाङ्गानांशुद्धिर्यस्याएवम्भूतायामिहअस्यां भीमभुविभैम्याञ्चित्रमाश्चर्यरूप अनङ्गराज्यस्यकामराज्यस्यविजृंभितम्विल सितम्। अद्भुतलावण्यवशात्सूक्ष्माणाम्वलीनांपतितत्वात्ताभिरतिकृश मुदरंनाक्रान्तमित्यर्थः। अन्येनापिक्षीणेनदुर्बलेनोभयोः सीमायांविद्य मानेनापिस्वाम्यमात्यादीनांसप्ताङ्गानांशुद्धौसत्यामपिबलिष्टेभ्योभयानका यांभूमौपराभवोनप्राप्यतेतत्सप्ताङ्गरक्षितस्य दुर्बलस्यविलसितमाश्चर्यरूप म्। वलीनांसर्वाङ्गशुद्धेविद्यमानत्वात्तथसर्वाङ्गराहित्यात्सीमनिवर्तमान त्वाच्चपराभवकारणेसत्यपियत्पराभवोनप्राप्तस्तदाश्चर्यमित्यर्थः। यथाभी मस्यभुविराज्येअनङ्गस्यराज्यङ्कथं अन्यभूमावन्यराज्यभावासम्भवात्। अथ चभीमस्यसह्यादेवस्यजुर्विकामराज्यमित्यप्याश्चर्यम्। परैर्ग्रहीतुमशक्यत्वा दतिविषमायांभूमौपराभवोनप्राप्यतेअत्रचित्रम् अपितुनेतिकाक्वा ८१॥

मध्यन्ननूकृत्ययदीदमीय म्वेधानदध्यात्कमनीय मंशम्॥ केनस्तनौसंप्रतियौवनेऽस्या सृजेदनन्य प्रतिमाङ्गदीप्रे:॥ ८२॥

मध्यम्वर्णयति। मध्यमिति। वेधाइदमीयंएतदीयंमध्यन्तनूकृत्यअ तिकृशंकृत्वा मध्यसम्बन्धिनङ्कमनीयमंशम्भागंयदिनदध्यात्। क्वापिन स्थापयेत्तर्हिसम्प्रतियौवनेनानन्यप्रतिमा अनन्यतुल्याअङ्गयष्टेर्दीप्तिःका

न्तियंसाःएवंजूतायाअस्याःस्तनौकेनांशेनप्रकारेणवासृजेत्एतदीयस्या
तिसुन्दरस्यमध्यांशस्यसंग्रहंकृत्वातेनैवांशेनयौवनेकुचौकृतवानित्यर्थः ।
मध्योतिकृशःस्तनौचातिसुन्दराविति भावः ॥ ८२ ॥

**गौरीवपत्यासुभगाकदाचि त्कर्तैयमप्यर्धतनूसम**
**स्याम् । इतीवमध्येनिदधेविधाता रोमावलीमे**
**चकसूत्रमस्याः ॥ ८३ ॥**

रोमावलीम्वर्णयति । गौरीति । विधाताअस्यामध्येरोमावलीलक्षणं
मेचकसूत्रंनीलंसूत्रंइतीवनिदधेकृतवान् । इतिकिम् सुभगासौभाग्यवतीय
मपिपत्याप्रियेणकृत्वाकदाचित् अर्धतनूसमस्यांशरीरार्द्धपूरणकर्ताकरिष्य
ति । केवगौरीव । पार्वतीईश्वरेणअर्धतनूसमस्यांयथाकृतवतीतथेयम
पि । इयंरोमावलीनकिन्तुअर्धशरीरघटनार्थंनीलंसूत्रंनिहितमित्यर्थः ।
कर्त्तेतिलुट् ॥ ८३ ॥

**रोमावलीरज्जुमुरोजकुंभौ गम्भीरमासाद्यच ना**
**भिकूपम् ॥ मद्दृष्टितृष्णाविरमेद्यदिस्या न्नैषा**
**स्त्रवेणीसिचयेनगुप्तिः ॥ ८४ ॥**

पुनरपिस्तनाभिरोमालीम्वर्णयति । रोमेति । मद्दृष्टितृष्णामन्दर्शन
वाञ्छा रोमावलीलक्षणांरज्जुंउरोजलक्षणौकुम्भौगभीरनाभिलक्षणंकूपमा
साद्यप्राप्यतर्हिविरमेच्छाम्येत् । यदिएषारोमावल्यादीनांसिचयेनवस्त्रेणै
षागुप्तिर्वेष्टनंनस्यात्वस्त्रखेदे । एवन्तुनजातमितिखेदः । अवेष्टितानामे
षांसुखेनद्रष्टुंशक्यत्वाद्दर्शनवाञ्छाशाम्येत् वस्त्रावृतत्वात्तुनेत्यर्थः । अथवा
ऽनावृतदर्शनाद्विरागः आवृतदर्शनात्वनुरागवशात्पुनःपुनर्द्रष्टुमेववाञ्छतइ
त्यर्थः । रोमावल्यादेर्वस्त्रेणवेष्टनादौचित्यंसूचितम् । अथचदोरककुम्भं
गभीरंकूपंचप्राप्यतृष्णापिपासातदाशाम्येत् । यद्येनेषांअसिचयेनलक्षणा
याखड्गधारीपुरुषसमूहेनरक्षणंनस्यात् । राजैकभोग्यःकूपःखड्गपाणि
भीरक्ष्यतेऽतोजलाहरणसामग्रीसद्भावेपिपिपासानशाम्यतीति । अतिग
भीरनाभिरियमितिभावः । तृष्णेस्पृहापिपासेद्वेइत्यमरः । विरमेत्व्याङ्
परिभ्योरमइतिपरस्मैपदम् ॥ ८४ ॥

उन्मूलितालानविलानाभि छिन्नांस्खलच्छृंखल रोमदामा ॥ मत्तस्यसेयंमदनद्विपस्य प्रस्वापवप्रोच्चकुचास्तुवास्तु ॥ ८४ ॥

उन्मीलितेति । सेयंभैमीमत्तस्यउद्भटस्यापचगलन्मदजलस्य मदनरूपस्य द्विपस्यवास्तुवसतिगृहमस्तु । किंभूता । उन्मूलितमुत्पाटितंयदालानंबन्धनस्तम्भःतन्तत्स्वबिन्धियद्विलक्षतैःतदाभातत्तुल्याविलानाभि यस्याःसा तथा छिन्नंत्रुटितंस्खलन्पतितंशृंखलन्ततुल्यारोमराजिर्यस्याः । तथाप्रस्वापायगजस्यशयनार्थस्वप्नत्निर्मितमरवडवत् । उच्चकुचानुन्नतकुचानिमामेवावलंब्यकामोऽतिमतोजातइतिभावः । रोमावल्यास्थिरत्वस्वलिमध्यगत्वात् मत्तस्यगजस्यवासगृहमयेतादृशभवति शृङ्खलनूत्रिबिलितिअमरः ॥ ८५ ॥

रोमावलीभ्रूकुसुमैःस्वमौर्वी चापेषुभिर्मध्यललाट मूर्ध्नि ॥ व्यस्तैरपिस्यास्त्रिभिरेतदीये र्जैत्रःत्रिवित्रं रतिजानिवीरः ॥ ८६ ॥

रोमावलिरिति । सरतिजानिःवीरःकाम.शूरश्च एतदीयैःक्रमेणरोमावलिश्चभ्रूचौचकुसुमानिचतद्रूपैःस्वमौर्वीचापेषुभिःकृत्वाजैत्रःजेतालोकत्रयमपिजयतीत्यर्थः । जनवित्रम् । किंभूतैःरोमावलिभ्रूकुसुमैःमूर्ध्नि ललाट मूर्ध्नि व्यस्तैःपरस्परासंबद्धैःस्यास्त्रिभिरपिस्थितैरपि । रोमावलीरूपाज्याग येन्भ्रूरूपन्चापंललाटेमूर्ध्निकुसुमरूपावाणाश्चविद्यन्ते एवंपृथक्स्थितैरपि लोकत्रयजातादाश्चर्यम् । अन्योहिधानुष्कोमौर्वीधनुर्वाणैःसम्मिलितैरेवजयतिनतुपृथक्स्थितैर्नैकेनअत्रतुविपरीतदर्शनादाश्चर्यम् । प्रत्येकम्भैमीरोमावलीभ्रूकुसुमचापदर्शनात्कामप्रादुर्भावोभवतीतिभावः । मूर्ध्नीतिप्राप्य कृत्वादेकवद्भाव.स्यास्त्रिभिःस्याजिस्थश्चगच्छ:।रतिजानिःजायायानिङ्पुंस्याविवाणाःकुचमवडलानिचभ्रूवौचनुर्लोलमलङ्कुरिच्छ॥रोमावलीमध्यविभूषणंज्यातथापिजैत्रारतिजानिरेतैरितिस्त्रोकान्तरमपिव्याख्यातप्रायम् ८६

स्त्रस्याःखलुग्रन्थिनिबद्धकेश मल्लीकदम्बप्रतिबिम्बवेषात् ॥ स्मरप्रशस्तीरजताक्षरेयं पृष्ठस्थली हाटकपट्टिकायाम् ॥ ८७ ॥

पृष्ठस्थलीम्वर्णयति। अस्याइति। अस्याःग्रन्थ्यानिबद्धाःकेशाकेशपाशःतत्र मल्लीकदम्बानिविकसितमल्लीपुष्पसमूहास्तेषांप्रतिबिम्बस्यवेषात्व्याजात्पृष्ठस्थलीलक्षणायांहाटकपट्टिकायांसुवर्णघटितपट्टिकायांदृश्यमानारजताक्षराकृष्यमयाक्षरास्मरप्रशस्तिःकामयशःप्रशस्तिः । उत्तमस्यप्रशस्तिःसुवर्णपट्टिकायांरजताक्षरैर्लिख्यते। भैमीपृष्ठंसुवर्णपट्टिकारूपन्तत्रकेशग्रन्थिषुनिबद्धमल्लीपुष्पाणांप्रतिबिम्बितत्वाद्रजताक्षरत्वम् । वेणीनिबद्धकेशपुष्पाणाप्रतिबिम्बसम्भवाद्ग्रन्थिनिबद्धेत्युक्तम् । सुवर्णपट्टिकातुल्यामदनजनिकाचभैमीपृष्ठस्थलीतिभावः । खलुनिश्चितम् ॥ ८७ ॥

चक्रेणविश्वंयुधिमत्स्यकेतुः पितुर्जितम्वीक्ष्यसुदर्श
नेन॥ जगज्जिगीषत्यमुनानितम्ब द्वयेनकिन्दुर्ल
भदर्शनेन ॥ ८८ ॥

श्लोकद्वयेननितम्बम्वर्णयति । मत्स्यकेतु कामःपितुःश्रीकृष्णस्यसुदर्शनेनचक्रेणयुधिविश्वञ्जितम्वीक्ष्य चक्राच्छादितत्वाद्दुर्लभदर्शनेनअमुनानितम्बद्वयेननितम्बरूपचक्रेणकृत्वाजगज्जिगीषतिकिम् । किमिवार्थः । सुलभदर्शनमेपितुश्चक्रेणजगज्जितम मयातुदुर्लभदर्शनेनसुदर्शनादधिकेनचक्रेण । पुत्रेणपित्रपेक्षयाऽधिकेनभाव्यमितिमनीषयाकामेनकृतमित्यर्थः । कामजनकोऽस्यानितम्बइतिभावः जिगीषति । सन्लिटोर्जेरितिकुत्वम् ॥ ८८

रोमावलीदण्डनितम्बचक्रे गुणञ्चलावण्यजलंच
बाला ॥ तारुण्यमूर्तेःकुचकुम्भकर्तु र्विभर्त्तिशङ्केस
हकारिचक्रम् ॥ ८९ ॥

रोमावलीति । बालाभैमीतारुण्यमूर्तेःतारुण्यस्वरूपस्यतारुण्यकुलालस्यकुचकुंभकर्तुःकुचकुंभकारस्य एतत्सहकारिचक्रंसहकारिकारणवृन्दम्बिभर्ति । अहंशङ्के । एतत्किम् । रोमावल्येवचक्रभ्रामकन्दण्डनितम्बरूपञ्चक्रञ्च गुणम्बशीलादिलक्षणमेवगुणन्दोरकञ्च । लावण्यरूपञ्जलञ्च । कुम्भकारस्यदण्डचक्रजलदोरकाणांसहकारित्वम्भवति । तारुण्येसत्येतानिप्रादुर्भूतानीतिभावः ॥ ८९ ॥

खड्गेनकेनापिविजेतुमस्या गवेष्यतेकिञ्चलपत्रप

त्रम् ॥ नचेद्विशेषादितरच्छदेभ्य स्तस्यास्तुकम्प स्तुकुतोभयेन ॥ १० ॥

वराङ्गंवर्णयति । अस्याःकेनापिअतिसौन्दर्यादनिर्वचनीयेनाथचगोप्यत्वात्प्रकटंवक्तुंअयोग्येनाङ्गेनअवयवेन चलपत्रस्याश्वत्थस्यपत्रंविशेषेणजेतुंकुवेष्यतेकिमुत्प्रेक्षा।कुतोज्ञातमित्यतआह । नचेदेवन्तर्हिइतरच्छदेभ्यः अन्यवृक्षदलेभ्यःसकाशाद्विशेषादाधिक्यात्तस्यचलदलस्यकंपःकुतःकस्मात्तु भयेनास्तुभवतु । अन्यवृक्षदलापेक्षयाश्वत्थदलेभूयान्कंपोदृश्यतेतदनेनजेतुंकुवेष्यतेआकारेणअश्वत्थदलतुल्यमस्याःवराङ्गमित्यर्थः ॥ ९० ॥

भ्रूश्चित्रलेखाचतिलोत्तमाऽस्या नासाचरम्भाचय दूरुसृष्टिः ॥ दृष्टाततःपूरयतीयमेका नेकाप्सरःप्रेक्षणकौतुकानि ॥ ११ ॥

पञ्चभिःश्लोकैर्भ्रूं वर्णयति । भ्रूरिति । अस्याःभैम्याःभ्रूश्चित्राश्चर्यरूपालेखाविन्यासोयस्याःसाअथचचित्रलेखाप्सरोविशेषःतथास्यानासातिलात्तिलकुसुमादप्युत्तमाऽतिरम्या । अथचनासैवतिलोत्तमाअप्सरोविशेषःतथाअस्याःऊरुसृष्टिश्चरम्भास्वयङ्कदली अथचऊरुसृष्टिरम्भाअप्सरोविशेषःयद्यस्मात्तत्तस्मादियमेकैवदृष्टासतीअनेकाप्सरसां प्रेक्षणजनितानिकौतुकानिपूरतिजनयति।ताभ्योप्यस्यातिसौन्दर्यन्द्रष्टुंकौतूहलञ्जनयतीत्यर्थः । एतदूरूकदलीतुल्याविति भावः । तिलादुत्तमेतिपञ्चमीतियोगविभागात्समासः ॥ ९१ ॥

रम्भापिकिञ्चिह्नयतिप्रकाण्डं नचात्मनःस्वेननचैतदूरू ॥ स्वस्यैवयेनोपरिसाददाना पत्राणिजाग्रत्यनयोर्भ्रमेण ॥ १२ ॥

रम्भेति । रम्भापिआत्मनःप्रकाण्डंस्वस्यस्तम्भं स्वेनात्मनानचनैवचिन्हयति । स्वीयत्वेननजानातिकिम् । एतदूरूचनचिन्हयतिकिम् । एतदीयत्वेननजानातिकिम् । लोकोनजानातिरम्भापिनजानातीत्यपिशब्दार्थः । स्वस्तम्भंभैम्यूरुत्वेनभैम्यूरूचस्वस्तम्भत्वेनज्ञासीदिकिमित्युत्प्रेक्षाकुतोज्ञातमित्यतआह । येनकारणेनअनयोर्भैम्यूर्वोर्भ्रमेणभैम्यूरूएताविति

मुद्राम्भसारम्भा स्वस्थानमन्यथोपरिस्थैनैवपत्रावितपत्रालम्बनानिर्दधतिस तीजागर्ति । अन्योपिवादीप्रतिवादिनिपत्रालम्बनंकुरुते । इयंस्वपरविवे काभावात्परस्मिन्कर्तव्यमालम्ब्येवकरोतीत्यर्थः । कदलीस्तम्भीपत्रिवला निभवन्ति । कदलीगर्भस्तम्भतुल्याबेतदूरुइतिभाव । चिन्हवन्तकुरोति तत्करोतीतिणिचिमतुब्लोपः ॥ ९२ ॥

विधायमूर्धानमधश्चरच्चे न्मुच्चैस्तपोभिःस्वमसा रभावम् ॥ जाड्यञ्चनाचेत्कदलीवलीयं स्तदाय दिस्यादिदमूरुचारु ॥ १३ ॥

विधायेति । कदली इदमूरुचारुस्याःऊरुवच्चारुतस्तुल्यकान्तिस्तदास्या त्तदाभवेत्यदिमूर्धानमधश्चरणौगतस्विधायकृत्वातपोभिः चान्द्रायणादि भिःकृत्वास्वंस्वीयंअसारभावंनिःसारत्वमुच्चैर्मुञ्चेत्त्यजेत् तथावलीयःसार्वे कालिकजाड्यंशीतलत्वञ्चेत्प्राप्नुयात्तदैवेतदूरुतुल्याभवेत् । कदलीभि स्सूरुतुल्यकान्तिर्यदिभवेत्तर्हितदाभवेत् । एवंयदिकदलीकुर्यात्तदेदमूरु चारुःस्यान्नान्यथेत्यर्थः । ऊर्वोरूर्ध्वदेशस्यस्थूलत्वादधोदेशस्यसूक्ष्मत्वा त्सचारुत्वात्कदल्यांचैतस्माद्विपरीत्यादिदंमूरुचारुत्वंनयुज्यते । तथैतदू र्वोः शीतकालेसोष्मत्वादुष्णकालेचशीतलत्वात्कदल्याश्चसर्वदाशीतलत्वादे तदूरुचारुत्वंनयुज्यते तस्मादपिसाकदल्याएतदूरुचारुत्वंसाध्यम् । अनुप मावेतदूरुइतिभावः । अन्योपिमूर्धानमधोविधायतपसास्वीयमसारत्वंभू यिष्ठमूर्खत्वञ्चत्यक्त्वोत्तमेनसमानोभवति सुषीमःशिशिरोजडइत्यमरः ९३

ऊरुप्रकाण्डद्वितयेनतन्व्याः करःपराजीयतवारणी यः मुक्तांह्रियाकुण्डलनच्छलेन गोपायतिस्वंमुखपु ष्करंसः ॥ १४ ॥

ऊर्विति । तन्व्याःऊरुप्रकाण्डद्वितयेनऊरुस्तम्भयुगेनवारणीयःहस्ति सम्बधीकरःशुण्डादण्डःपराजीयतपराभूतः अतःसकरीकुण्डलनच्छलेन मण्डलीकरणव्याजेनह्रियालज्जया कृत्वास्वंस्वीयंमुखमूतंपुष्करंगोपायति तत्युक्तम् ॥ ९४ ॥

अस्यांमुनीनामपिमोहमूहे भृगुर्महान्यत्कुचशैल

शैली ॥ नानारदाल्हादिमुखंश्रुतोरु व्र्यासोमहा भारतसर्गयोग्यः ॥ १५ ॥

अस्यामिति । अहमस्यांव्यासादिमुनीनामपिमोहंभ्रान्तिंजहेतर्कयामि । मुनयोप्येतामाश्रित्यतिष्ठन्तीति । अथवजितेन्द्रियाणामप्यस्याविषयेमोहंमदनविकारंतर्कयामि । तेप्यनयामोहिताइत्यर्थः ॥ यस्मान्महातितापसःभृगुःकुचशैलशीलीकुचपर्वतसेवी । मुनीनांपर्वताश्रयत्वात्स्वतबुद्ध्यास्तनावाश्रयति । अथचकामपीडितत्वाद्दृग्दुष्टावेतत्कुचौमर्दयितुमिच्छति । अथचभृगुस्तटःपर्वताश्रयेणवर्तते । कुचयोःपार्श्वभागस्तटस्त्यइत्यर्थः । शीलमेवशैलकुचयोःशैलंस्वभावंशीलयति अभ्यस्यतिपरमद्यापिकुचस्वभावोनायातीत्यर्थः । मुखंनारदंआल्हादयतीतिनारदाल्हादिनमारदाल्हादिअनारदाल्हादिएवम्विधंनभवतिकिंन्तुनारदाल्हाद्येव। गानकलाभ्यासार्थंनारदोमुखसेवांकरोतीत्यर्थः । मदनपीडितत्वादुन्मुखचुम्बनाभिलाषिणंनारदमानन्दयतीत्यर्थः । मुखंनानाविधैद्वात्रिंशत्संख्याकैरदैर्दन्तैराल्हादयत्यतिसुन्दरमित्यर्थः । महाभारतस्यसर्गेनिर्माणेयोग्यःसमर्थ व्यासः श्रितावूरूयेनैवम्विधःकदलीस्तंभच्छायाबुद्ध्याएतदूरू आश्रित्यतिष्ठति। अथचकामपीडितत्वादेतदूरूसमालिङ्ग्यवर्ततइत्यर्थः। महतीभारतीसियंस्यरतंसुरतन्तस्यसर्गोनिर्माणन्तत्रयोग्यः ततःकर्मधारयः इतिवा । एवम्विधोव्यासोविस्तारःश्रितावूरूयेन । अतिविशालावूरूइतिभावः । भृगुःशुक्रे प्रपातेचजमदग्नौपिनाकिनि । व्यासोमुनौस्याद्विस्तारेइतिविश्वः ॥ ९५ ॥

क्रमोद्गतापीवरताधिजङ्घं वृक्षाधिरूढम्विदुषी किमस्याः ॥ अपिभ्रमीभङ्गिभिरावृताङ्गं व्यासोलतावेष्टितकप्रवीणम् ॥ १६ ॥

जङ्घेवर्णयति । क्रमेति । अस्याअधिजङ्घञ्जङ्घयोर्विद्यमानाक्रमोद्गतापीवरताऽवरोहणक्रमनिर्गतापीनता वृक्षस्यअधिरूढंवृद्धिप्रकारम्विदुषीकिञ्जानातिकिम् । वृक्षोयथामूलभागेसूक्ष्मोऽग्रभागेचस्थूलस्तथैयजङ्घयोः क्रमेणोद्गतापीनताऊर्ध्वभागेवृक्षोयथाभारवान्जवतिपीनतापीत्यर्थः । अथचवृक्षाधिरूढास्यमालिङ्गनविशेषञ्जानातिकिम् । तथाच

सौभङ्गिभिन्न सणाकारवेष्टनविच्छित्तिभिः कुस्वाच्चावृतमङ्कयेनएवम्विध मस्यावासोदुकुलमपिलतयावेष्टितकेप्रवीणकुशलम् । यथालताक्षनौभङ्गि निवृत्तम्वेष्टयतितथैवदुकूलमपिअङ्कम्वेष्टयतिइतिभावः । बाहुभ्याङ्कण्ठ मालिङ्ग्यंकामिनीकान्तउत्थिते । अङ्कमारोहतेयस्यवृक्षारूढःसउच्यते । उपविष्टप्रियङ्कान्तासुप्तावेष्टयतेयदि । सञ्चतावेष्टितंज्ञेयङ्कामानुभववेदि भिः । अधिजङ्घम्विभक्त्यर्थेऽव्ययीभावः ॥ ९६ ॥

अरुन्धतीकामपुरन्ध्रिलक्ष्मी-जम्भाद्विषद्दारनवाम्बिकानाम् ॥ चतुर्दशीयन्तदिहोचितीस्यद्गुल्फद्वयाप्तायदद्वयसिद्धिः ॥ ९७ ॥

गुल्फौवर्णयति । अरुन्धतीति । अरुन्धतीवसिष्ठपत्नीकामपुरन्ध्रिःरतिः लक्ष्मीःजम्भद्विषद्दाराःइन्द्राणी नवसंख्याकाः अम्बिकाब्रह्माण्याद्यःसप्त गौरीसरस्वतीचेतिद्वे एतासान्त्रयोदशीनांपूरणीचतुर्दशीयंयद्यस्मात्तस्मा दिहास्यांअदृश्यवस्तुनःसिद्धिरदृश्यवासाउचितैवयुक्तैव । गुल्फद्वयेनआ माप्रामाअरुन्धत्यादिभ्योपीयमतिसुन्दरीपतिव्रताच । तस्मादस्यांनिम्नं न गुल्फत्वंनामसामुद्रिकंसलक्षणंयुक्तमेवेतिभावः । यस्माद्दयानद्वयसिद्धिर्ल भ्यातस्मादियमरुन्धत्यादीनाञ्चतुर्दशीसमुचितेतिवासम्बन्धः । आगमेच तुर्दश्यानद्वयस्त्वसिद्धिर्भवतिइत्युक्तमित्यर्थः । चतुर्दशानांपूरणीपूरणेड ट् । संख्यादित्वान्मसट्टित्वात्ङीप् ॥ ९७ ॥

अस्याःपदौचारुतयामहान्ता वपेक्ष्यसौक्ष्म्याल्लवभावभाजः ॥ जाताप्रवालस्यमहीरुहाणा ञ्जानीमहेपल्लवशब्दलब्धिः ॥ ९८ ॥

षड्भिःश्लोकैःपादौवर्णयति । अस्याइति । चारुतयासौन्दर्येणकस्वान्म हान्तावुत्तमौअस्याः पादौअपेक्ष्यतत्सौक्ष्म्यमल्पत्वमेतस्याःसुन्दरपदापेक्ष यास्वस्यपदल्पत्वन्ताद्दृक्सौन्दर्याभावादित्यर्थः । तस्माल्लवभावभाजःपद शोभालेशरूपत्वंभजतः महीरुहाणांप्रवालस्यबालकिसलयस्यपल्लवइति शब्दस्तस्यलब्धिर्लाभोजातइतिवयञ्जानीमहे । पदोलव-मैस्याद्यरयासम्ब न्धीलवोलेशोयस्य । पदोलवरूपोवायमितिपल्लवशब्दः । प्रवालस्यपल्लव

शब्दप्राप्तिरनेनप्रकारेणजातेत्यर्थः । प्रवालादप्यधिकंरमणीयौचरणावि तिभावः । लविधरितिक्विप्यादिस्यइतिक्विन् ॥ ९८ ॥

**जगद्वधूमूर्द्धसुरूपदर्पाद्यदेतयाधायिपदारविन्दम् ॥ तत्सान्द्रसिन्दूरपरागरागैर्द्वयंप्रवालप्रबलारुणन्तत् ॥ ९९ ॥**

जगदिति । एतयारूपदर्पात्सौन्दर्यगर्वात्जगद्वधूमूर्धसुलोकत्रयसुन्दरी शिरःसुपदारविन्दंयद्यस्मात् अधायिदत्तम् । तत्पदारविन्दद्वयन्तेषुमूर्धसु सान्द्रंयत्सिन्दूरन्तस्यपरागास्तेषांरागैर्लौहित्यैः कृत्वाप्रवालात्पल्लवात्वि द्रुमाद्वाप्रबलमधिकमरुणमारक्तञ्जातम् ध्रुवमुत्प्रेक्षे । भैमीचरणावत्यरुणा वितिभावः ॥ ९९ ॥

**कृपारुणासर्वगुणैर्जयन्त्या भैम्याःपदंश्रीःसविधेवृणीते ॥ ध्रुवंसतामच्छलयद्यतःसा भृशारुणेतत्पदभाविभाति ॥ १०० ॥**

कृपेति ॥ श्रीर्लक्ष्मीःशोभावविधेर्ब्रह्मणःसकाशात्भैम्याः पदंस्थानंस्व कृपत्वंअधिकारंवावृणीतेस्मयाचतेस्म । यतःसर्वगुणैःश्रीसम्बन्धिभिःक त्वाश्रियंजयन्त्याः । अतएवकिंभूताकृपाक्रोधेनअरुणा । तत्रब्रह्माध्रुवंनि श्चितन्तांश्रियंअच्छलयत् प्रतारितवान् । यतोयस्माद्भृशारुणाऽतिरक्ता साश्रीः एतत्पदभाक्भैमीचरणसेविनीतिभातिशोभते । यद्वाभृशारुणेति पदविशेषणात्वेनैकपदत्वम् । पदशब्दच्छलेनभैमीचरणान्दत्तवान्नस्वरूपा दि । अत्रकाजितोऽन्योपिदेवतांप्रसन्नीकृत्यतत्पदंयाचते । भैमीचरणशो भालोकोत्तरेतिभावः ॥ १०० ॥

**यानेनतन्व्याजितदन्तिनाथौ पादाब्जरागौपरिसुद्रुपार्ष्णी ॥ जानेनशुश्रूषयितुंस्वमिच्छुनतेनमूर्ध्ना कृतमस्यराज्ञः ॥ १०१ ॥**

यानेनेति । तन्व्याःपादाब्जरागौश्रेष्ठकमलतुल्यौचरणौकतरस्यराज्ञःक स्यनृपस्य प्रणयकलहेवनमस्कारार्थंनतेनमत्त्वे वभूभ्रमयोज्येनस्वमात्मा नंशुश्रूषयितुंआत्मसेवांकारयितुंइच्छूअभिलाषुकौइतिमन्यावे । किंभूतौ

आत्यन्तिकमविनाशितं अब्जमर्गकमलसृष्टिं अधुनेदानींपुनर्विधातुंकाम स्यनिर्मातुकामस्यभिक्षाहिगृहपञ्चकएवभवति । मधुकरोहिअनेकानिपु ष्पाणिमधुयाचित्व स्वोदरभरणंकरोति । तस्सम्बन्धित्वान्माधुकरी । कम लान्येवतद्वदनतुल्यानिनेतिभावः । आस्यादीनांप्रायेणकद्वंद्वे पिपञ्चस्वि त्यनेनसंख्यापरिगणनादधिकरचैतावत्वेचेत्येकवद्भावाभाव ॥ १०३ ॥

एष्यन्तियावद्गणनांदिगन्तान्नृपाःस्मरार्ताःशर णेप्रवेष्टुम् ॥ इमेपदाब्जेविधिनापिसृष्टास्तावन्त्य एवाङ्गुलयोऽत्ररेखाः ॥ १०४ ॥

अङ्गुलीर्वर्णयति । एष्यन्तीति । स्मरार्तानृपाःइमेपदाब्जेभैमीचरणक मलेकमेनतेधरणेरक्षकेप्रवेष्टुकामादस्मान्रक्षतयुवामितिवदन्तः यावद्गण नाद्यावत्संख्याकाद्दिगन्तात्सकाशादेष्यन्तिसमागमिष्यन्ति । विधिनापि तावन्त्यःतावत्संख्याकारेखाएवात्रअत्रपदद्वंद्वेसृष्टानिर्मिताः । एताअङ्गुलयो दशदिगन्तानामपिदशसंख्यात्वाद्दशभ्योपिदिग्भ्यःकामार्तान्नृपाआगमिष्य न्तीतिसूचनार्थेन्नस्रष्टादशरेखाएवनिर्मिताः । नरेखापाठेअङ्गुलयोनभव तिकिन्तुरेखाएवेत्यन्वयः । य वद्गणनाद्दित्यव्ययीभावेऽपञ्चम्याइतिवच नादग्धाग ।ः ॥ १०४ ॥

प्रियानखीभूतवतोमुदेदं व्यधाद्विधिःसाधुदशत्व मिन्दोः ॥ एतत्पदच्छद्मसरागपद्म सौभाग्यभा ग्यङ्कथमन्यथास्यात् ॥ १०५ ॥

नखान्वर्णयति । प्रियेति । विधिःमुदाखेच्छयाप्रियानखीभूतवतोन खत्वंप्राप्तवतःइन्दोरिदन्दशत्वंसाधुउचितंव्यधात्कृतवान् । अथचसाध्वी शोभनादशाऽवस्थायस्यएवम्विधंकृतवान् । कथमित्यतआह अन्यथाऽस्ये न्दोरेतस्याःपदछद्मनाचरणव्याजेनसरागपद्मसौभाग्यंरक्तोत्पलसौभाग्य न्तस्यभाग्यंलाभःकथंस्यात् । दशसंख्यात्वेनभैमीसमीचीनावस्थात्वेन चविनैवतच्चरणसेवानलभ्यते अनेनतावत्संख्यातस्मादस्यसाधुदशत्वङ्कृतमि तिज्ञायतइत्यर्थः चन्द्रपद्मयोर्विरोधाच्चन्द्रोदयेकमलस्यसङ्कोचात्समीची नावस्थत्वेनविनारक्तोत्पलसम्बन्धश्चन्द्रस्ययुज्यतेसतुजातस्यचरकत्वंलब्धन्त

स्मादेतदनुमीयतइत्यर्थः अन्योपिसाधुदशत्वेनाप्राप्यमपिप्राप्नोति । दशा पिचरणनखाश्चन्द्रतुल्याइतिभावः ॥ १०५ ॥

यशःपदाङ्गुष्ठनखौमुखंच बिभर्तिपूर्णेन्दुचतुष्टयंया ॥ कलाश्चतुःषष्टिरुपैतिवासन्तस्याङ्कथंसुभ्रुर्विनामनास्याम् ॥ १०६ ॥

अङ्गुष्ठनखौचपुनःपृथक्त्वेनवर्णयति । यशइति । याभैमीयशःकीर्तिः पदाङ्गुष्ठनखौमुखञ्चएतद्रूपंपूर्णेन्दुचतुष्टयंषोडशकलचन्द्रचतुष्टयम्बिभर्ति तस्यांअस्यांसुभ्रु विभैम्याश्चतुरधिकाषष्टिः कलाकथंनामवासंनोपैतुअपितु प्राप्नोतीतियुक्तमेतत् । षोडशकलचतुष्टयधारणात्षोडशकलाश्चतुर्गुणिता श्चतुःषष्टिर्भवतीतियुक्तमित्यर्थः । गीतवाद्यादिकलाप्रवीणेयमितिभावः । कलेतिजात्येकवचनम् । कलानाञ्चतुःषष्टीरितिवा कलाइतिपाठेकलारूपाश्चतुःषष्टिरिन्धिः ॥ १०६ ॥

सृष्टातिविश्वाविधिनैवतावत्तस्यांपिनीतापरियौवनेन ॥ वैदग्ध्यमध्याप्यमनोभुवेयमवापितावाक्पथपारमेव ॥ १०७ ॥

वर्णयितुमशक्येयमितिनिगमयति । सृष्टेति । विधिनाएवइयन्तावदादौ अतिविश्वगजितत्रैलोक्यासृष्टा । अतिसुन्दरीकृतेत्यर्थः । अनन्तरंयौवनेनत स्याप्यतिविश्वसर्जनस्यापिविधेर्वाउपरिणीताशैशवसौन्दर्यापेक्षया अधिकं सौन्दर्यंप्रापिता । तारुण्येतिसौन्दर्यंभवति । ततोप्यनन्तरंमनोभुवाकामे नवैदग्ध्यंसर्वंव्यापारचातुरीं अध्याप्यशिक्षयित्वावाक्पथस्यपारंपरतीरमे वअवापिताप्रापिता । वर्णयितुमशक्यत्वाद्वागगोचरइत्यर्थः । अथचवि द्यापारंप्रापितेत्यर्थः । मदनवशादतिचतुरेयमित्यत्यर्थः । अन्योपिप्राज्ञो ऽध्यापितःसन्वाङ्मयपारंप्राप्नोति ॥ १०७ ॥

इतिसचिकुरादारभ्यैनांनखावधिवर्णयन्हरिणरमणीनेत्रांचित्राम्बुधौतरदन्तरः ॥ हृदयभरणोद्वेलानन्दःसखीवृतभीमजा नयनविषयीभावेमावन्दधारधराधिपः ॥ १०८ ॥

इतीति । सचराधिपः नलः सखीभिः तामीभ्जातस्यानयनविषयीज्ञा वेनयनगोचरत्वं ज्ञायमजिलायन्दधार । इदानीमात्मानंसखीसहितभै म्यैदर्शयिष्यामीतितस्यबुद्धिरुत्पन्नेत्यर्थः । प्रकटीजातहृनिभावः । इन्द्र वरदानात्सखीसहितयैवभैम्याद्रष्टव्योनान्येनकेनचिदित्यभिप्रायः सूचितः किङ्कुर्वन् । इतिपूर्वोक्तप्रकारेणचिकुरादारभ्यकेशपाशमारभ्यनखावधिन खपर्यन्तन्हरिणरमणीवन्नेत्रेयस्यास्तामेनांभैमीम्वर्णयन् । तथाचित्राम्बु धीअद्भुतसौन्दर्यदर्शनादेवअभीसमुद्रतरत्पूर्यमाणंअन्तरंमानसंयस्यसः साश्चर्यः भैमीदर्शनादेवहृदयस्यभरेणपरिपूरणेनोद्वेल. वेलांमर्यादान्तीरञ्चा तिक्रान्तोऽतिवहलआनन्दोयस्यसःउद्वेलत्वेनानंदस्यबहु त्वंसूचितम् । अन्यदपिउदककुम्भीरंस्यानंपरिपूर्यबहिर्निर्गच्छति । आरभ्यार्थयोगेपी तिकेचिदितिचिकुरादितिपञ्चमी ॥ १०७ ॥

श्रीहर्षङ्कविराजराजिमुकुटालङ्कारहीरःसुतंश्रीही

रःसुषुवेजितेन्द्रियचयंमामल्लदेवीचयम् ॥ गौडो

र्वीशकुलप्रशस्तिभणितिभ्रातर्ययन्तन्महा काव्ये

चारुणिनैषधीयचरितेसर्गोगमत्सप्तमः ॥

श्रीहर्षमिति ॥ गौडोर्वीशकुलस्यगौडदेशभूपालवंशस्यप्रशस्तिवर्णना तस्याभणितिःरचनातस्याःभ्रातरिएककर्तृकत्वात्सापियेनरचितेत्यर्थः । वैरसेनिचरितेचारुणिमहाकाव्येसप्तमःसर्गोऽगमत्समाप्तिंप्राप्तः । भ्रात रीतिभाषितपुंस्कम् ॥ इतिश्रीमन्नरसिंहपण्डितात्मजनारायणकृतेनैषधी यप्रकाशेसप्तमःसर्गःसमाप्तः ॥

## अथ नैषधीयचरिते अष्टमः सर्गः

॥ प्रारभ्यते ॥

अथाद्भुतेनास्तनिमेषमुद्रं मुन्निद्रलोमानममुं युवानम् । दृशापपुस्ताः सुदृशः समस्ताः सुताश्च भीमस्य महीमघोनः ॥ १ ॥

श्रीगणेशायनमः ॥ इदानींनलोदिक्पालदूत्यं कृतवानितिवक्तुमष्टमंसर्गमारभते । अथेति । भैमीअथनलविषयभावाज्ञिलाषानन्तरंताःसमस्ताःसुदृशःसख्यःमहीमघोनोभीमस्यसुताभैमीचामुंयुवानं दृशादृष्ट्यापपुः । साभिलाषंददृशुःकीदृशं अद्भुतेनभैमीसौन्दर्यजनितेनाश्चर्येणाकस्मात्अस्तात्यक्तानिमेषमुद्रानेत्रसङ्कोचरीतिर्येन अतएवसात्विकभाववशादुन्निद्रलोमानमुद्गतरोमाञ्चं दृशेत्येकवचनेनकटाक्षावलोकनंसूचितम् । अचिन्तितसुन्दरदर्शनादाश्चर्येणास्तनिमेषमुद्रं यथातथापपुरितिवा । युवतिपदेनदर्शनयोग्यत्वंसूचितम् । भैमीमुख्याःसर्वाअपितस्यराजावाइतिभावः ॥ १ ॥

कियच्चिरंदैवतभाषितानि निह्नोतुमेनंखलुशक्नुवन्तु ॥ पलालजालैःपिहितःस्वयंहि प्रकाशमासादयतीक्षुडिम्भः ॥ २ ॥

कियदिति । दैवतासम्बन्धीनिदैवतानांवाअस्तद्रिंसिद्धिरूपाणिजारितानिवचनानिकियच्चिरंकियन्तंकालंएनंनलंनिन्होतुंगोपायितुंप्रभवंतुनामसमर्थाभिभवन्तु अपितुक्षणमात्रंगोपायितुंसमर्थानिजातानिनतुबहुकालमित्यर्थः । नामेतिशिरस्चालने । अर्थान्तरन्यासमाह । हिप्रसिद्धंयस्माद्धा पलालजालैःनीलसतृणसमूहैःपिहितःक्षोडिम्भोंकुरःस्वयमात्मनैवप्रकाशंप्राकट्यं दृश्यत्वंआच्छादयतिप्राप्नोति । वृंदारकादैवतानीत्यमरः॥२॥

अपाङ्गमप्यापदृशोर्नरस्मि नलस्यभैमीमभिलष्य यावत् ॥ स्मराशुगःसुभ्रुवितावदस्याः प्रत्यङ्गमापुङ्खशिखंममज्ज ॥ ३ ॥

अपाङ्गमिति । नलस्यदृशोर्नेत्रयोःरश्मिर्दीप्तिर्भैमीमभिलष्यापांगमपि अतिनैकट्याद्विलंबंप्राप्यमपिनेत्रप्रान्तंयावन्नप्रापतावदादावेवस्मराशुगः सुभ्रुविसुंदर्यांभैम्यांप्रत्यंगंप्रत्यवयवं पुंखस्यशिखाग्रन्तदाङ्मर्यादीकृत्याभिव्याप्यममज्जनलकर्तृकसाभिलाषदर्शनोपक्रममात्रेणप्रत्यंगंभैमी अतितरां कामाधीनाजातेतिभावः । अभिलाषप्रतिबन्धकेदृष्टयोरारात्कर्तृत्वेसमानकर्तृत्वात्क्त्वोल्यप् । आपुंखशिखं आङ्मर्यादाभिविध्योरित्यव्ययीभावः ॥ ३ ॥

सदक्रमं विक्रमशक्तिसाम्यादुपाचरद्द्वावपिपंचबाणः ॥ कथंनवैमत्यममुष्यचक्रे शरैरनर्घार्धविभागभाग्भिः ॥ ४ ॥

यदिति ॥ पञ्चबाणःकामःद्वावपिनलभैम्यौअक्रमंपरिपाटीरहितं युगपद्विक्रमरूपायाःशक्तेःसामर्थ्यस्यसाम्याद्विक्रमोमनउत्साहःशक्तिःशारीरंबलन्तयोर्वासाम्यात्तुल्यत्वात् यद्यस्मादुपाचरत् । आत्मवशीचकार । तस्मात्पञ्चबाणत्वेप्यमुष्यकामस्यार्धेन अर्धाधिकाभ्यांद्वाभ्यांविभागः संजातोयेषांभवन्तितैरनर्घार्धविभागभाग्भिः एवंभूतैरपिपञ्चवाणैर्वैमत्यंमतभेदं । पञ्चभिरपिनलस्यप्रथमंव्यधंकृत्वातावद्भिरेवानंतरंभैम्यावेधंचेद्कारिष्यत्तर्ह्युभयोस्तुल्योनुरागोऽघटिष्यत् । तत्तुतेननकृतं । तुल्यकालमेवोभयोरनुरागदर्शनात्यद्येकसमयावच्छेदेनव्यधंकुर्यात्तर्हिवा बाणानांदशत्वापत्त्यावाणत्वंभज्येत । तस्मादर्धाधिकौद्वौद्वौबाणौविरस्संभवतःतद्वदनुरागसाम्यंभाव्येतापिनत्वेवंयुज्यते । भग्नस्यवाणस्यव्यधेःसरमध्याद्द्वाभ्यांनलस्यत्रिभिर्भैम्यावेधेवैपरीत्येनवानुरागवैषम्येणभवितव्यम् । तच्चयौगपद्ये पिवाणवैषम्येचसत्यपिनजातंतत्रपराक्रमशक्तिसाम्यमेवहेतुरित्यर्थः । द्वयोरप्येककालमेवतुल्यएवानुरागोजातइतिभावः । यद्वावैमत्यंकलहःविषमसंख्यत्वाद्बाणानांविभागोनघटते । एकस्यद्वैधीकरणेतत्सर्वेषामपिग्राम्योतिसएववैमत्यमाचरतीत्यर्थः । बाणानांवैमत्यमिमाश्चविक्रमशक्तिसाम्यादेवावाचरदितिवा । यथाराजासस्वेवकानांवैमत्यभियाऽन्यप्रकारेणकार्यं

साधयतितथेत्यर्थः । तस्माद्वेवतैर्भत्यंतकृतमित्यर्थः । अथचवेः पक्षिणः क्रमः आक्रमणं प्रहणं तत्रयाशक्तिः सामर्थ्यंतेनसाम्यात्तुल्यत्वात्खलकपोत न्यायेनइतियावत् । यथाकपोतः खलेपतिताकणान्युगपद्गृह्णातित थायंबाणोपियुगपद्द्वावपितेनन्यायेनयस्मादुपाचरंस्तस्माद्स्यबाणैरपि विषमसंख्यत्वे पिविरुद्धंनाकारि । अथचकामेनायंन्यायोङ्गीकृतः । अतए वचमेतिद्विवनतियंस्यतस्यभावोवैमत्यंखलेकपोतन्यायेनचतकामबाणैरपि नकृतोऽपितुकृतएवेतिकाकाव्याख्येयम् । तैरपिपंचभिरेकदैवमिलित्वायु गपदेवतौवशीकृतौ ॥ कामस्यसूक्ष्मत्वात् । विक्रमतुल्योनलः शक्तितुल्या भैमीविक्रमशक्तितुल्यौतौसकृदेवस्वबाणकुसुमैरपूजयदित्यर्थः ॥ ४ ॥

**तस्मिन्नलोसावितिसान्वरज्य त्कणंक्षणंकेहसइ त्युदास्त ॥ पुनःस्मतस्यांचलतेस्यचेतः पुनश्चदू त्येनबलानुन्यवर्ति ॥ ५ ॥**

अनुरागसाम्यमेवाह । तस्मिन्निति । सामैमीतस्मिन्पुरुषेअसौनलइ तिहेतोरन्वरज्यत् । अनुरक्ताबभूव । अनंतरंसोतिसुन्दरोनलःअतिसु न्दरीतेइहास्मिन्क्षणः पुरेकुत्रइतिसर्वसम्प्रतिवचनमविचार्यउदास्तउदसी नासीत्तत्रानन्वरज्यत्तयानुदास्तेतिवा । अस्यचित्तंतस्यांपुनःमुहुःचल तिस्म । चंचलमभूत् । अथानन्तरमनेननलेनास्यमितिनबादूत्याद्धेतोःपुनः न्यवर्तिपरावृत्तम् । दूत्यांगीकारेणैस्यभिलाषोनयुक्तइतिपरावृत्तमित्यर्थः । उभयोरपिभूयाननुरागोभूदित्यर्थः । पुरःस्मेतिपाठेप्रथमम् ॥ ५ ॥

**तंवीक्ष्यकाचित्कुलजालज्जे कयापितद्भासिहृदो ममज्जे ॥ स्मरंतमाशंकतकापिकन्या भेजेमनो भूयभावमन्या ॥ ६ ॥**

कयेति कुलजाकाचित्बालातंवीक्ष्यललज्जेकयाचिद्बालयानलमालोक्य लज्जितमित्यर्थः । अनुरागवशात्प्रकटितलज्जानुभावयाजातम् । कया चित्सौन्दर्यातद्भासिनलकान्तौहृदाअन्तःकरणेनममज्जेनिमग्नं । सौन्दर्यद र्शनमात्रेणात्यंपरवशाभिलाषयासत्परवशयाजातम् । कापिकन्याकुमा रीतंस्मरमेवमेने । अतिसौन्दर्यान्मदनकल्पत्वादित्यर्थः । अन्यामनोभूयभा

वंकामवशत्वमेवजेजे । अश्रिश्रयत् । अननुभूतसंभोगरसापिनलेसानुरागाजातेतिभावः । तंवीक्ष्यकाचित्कुलजाललज्जाइ त्यपिपाठः ॥ ६ ॥

कस्त्वंकुतोवेतिनशक्नुवन्त्य स्तंप्रष्टुमप्यप्रतिभातिभारात् ॥ उत्तस्थुरभ्युत्थितथांकृयैव निजासनान्नैकरसाःकृशांग्यः ॥ ७ ॥

कइति । कृशांग्यः अप्रतिभायाअप्रागल्भ्यस्यातिभारादतिबाहुल्याद्धेतोः इतितेप्रष्टुंअपिजातुकदाचित्तत्रकंचित्कालंस्थिताअपिनशेकुः । इतिकिं । कस्त्वंकिंसंज्ञकःकुतोवादेशाद्आगतइति तर्हिकिंचक्रुरित्यतआह । नैकरसाःलज्जाभयानुरागादियुक्ताःसत्यः अभ्युत्थितवांछयैवतस्यामकांक्षयाएवनिजासनात्स्वीयासनादुत्तस्थुरुत्थिताः । अन्योपिअप्रतिभोऽतिज्ञारोपिकिंचिपिवक्तुंनशक्नोतिबहाबहाषेप्यूर्ध्वकर्नत्वादुत्तस्थुरित्यत्रतद्भावः ॥७॥

स्वाच्छंद्यमानंदपरंपराणां त्रैमीतमालोक्यकिमप्यवाप ॥ महारयंनिर्झरिणीववारा मासाद्यधाराधरकेलिकालं ॥ ८ ॥

स्वाच्छंद्यमिति । त्रैमीतमालोक्यकिमपिअनिर्वचनीयमानंदपरंपराणां स्वाच्छंद्यंआधिक्यं अवाप । छंदःपद्येभिलाषेचेत्यभिधानात् । स्वःआत्मीयःछंदोऽभिलाषोयस्याः स्वच्छंदोभिरवग्रहस्तस्यभावःस्वाच्छंद्यम् । काकिवनिर्झरिणीनदीधाराधरोमेघस्तस्यकेलिः कालःक्रीडासमयो वर्षासमयं आसाद्यप्राप्यवारांजलानांमहारयंवेगमाधिक्यं इवलभते । दर्शनमात्रेण लोकोत्तरमानंदंप्रापेतिभावः ॥ ८ ॥

तत्रैवमग्नायदपश्यदग्रे नास्याद्धगस्यांगमयास्यदन्यत् ॥ नादास्यदस्यैयदिबुद्धिधारां विच्छिद्यविच्छिद्यचिरान्निमेषः ॥ ९ ॥

तत्रेति । असाद्दृक्यदस्यनलस्यअंगमग्रेप्रथमंअपश्यत् । तत्रैवतस्मिन्नेवअंगेअनुरागवशान्निमग्नासतीप्रथमदृष्टमंगंविहाय अन्यदंगंलक्षितंनअंग्यास्यत् नप्राप्स्यत् । यदिचिराच्चिरकालात्संजातोनिमेषोनेत्रसंकोचःविच्छिद्यविच्छिद्यपूर्वदृष्टांगदर्शनविच्छेदंकृत्वाकृत्वा अस्यैभैम्यैबुद्धिधारांअन्या

मन्यांबुद्धिंदर्शने श्वासंततिंनादास्यत् । तेनक्वापि सरंदतम् । तद्दृष्टादेवम् स्यदंगंप्रापदित्यर्थः । अतिसुंदरांगदर्शनस्यनिमेषेणाविच्छेदेकृतेसतिअनन्तरंतस्यैवअंगस्यदर्शने श्वयापुनरपिअंगांतरदर्शनंनतुप्रथमांगदर्शनविरत्याइत्यर्थः । सर्वेपिअवयवाअतिसुंदराइतिभावः क्रियातिपत्तौलृङ् ॥ ९ ॥

दृशापिसालिङ्गतमंगमस्य जग्राहनाग्रेवगतांगहर्षैः ॥ अंगांतरेऽनंतरमीक्षितेतु निवृत्यसस्मारनपूर्वदृष्टं ॥ १० ॥

दृशेति । सादृशाआलिङ्गितंस्पृष्टमप्यस्यनलस्य प्रथमदृष्टादन्यदंगं अपिप्रथमतोऽवगतानिदृष्टानिअङ्गानितज्जनितैर्हर्षैरानंदैर्हेतुभिर्नजग्राहनदृष्टवती दृष्टमप्यंगंहर्षभराकददर्शेत्यर्थः । हर्षानुभवादनन्तरंनिमिषादिव्याद्वंगांतरेईक्षितेपुनः निवृत्यपरावृत्यपूर्वदृष्टंप्रथमदृष्टमङ्गंनसस्मार ॥ प्रथमदृष्टस्यनन्तरंदृष्टस्यांगस्यातिरमणीयत्वाद्दृष्टुर्मनाग्रप्रथमदृष्टस्मरणंथीमत्वात्सुखपरवशत्वाद्वापुनःप्रथमदृष्टमंगंनस्मृतवतीनालोकतेइतिभावः । अन्यत्रहिपूर्वंदृष्टंस्मर्यतेऽत्रतुनेत्याश्चर्यम् । पूर्वोक्तएवभावः ॥ १० ॥

हित्वैकमस्यापघनंविशन्ती तद्दृष्टिरंगांतरसूक्तिसीमां । चिरंचकारोभयलाभलोभा त्स्वभावलोलागतमागतंच ॥ ११ ॥

हित्वेति । तस्याभैम्यादृष्टिः स्वभावलोलासतीउभयोःप्रथमदृष्टानन्तरंदृष्टयोर्लाभस्तत्रलोभाल्लोलुपत्वाद्धेतोश्चिरंगतंगमनं आगतमागमनञ्चकार । द्वयोरप्यंगयोरतिसौन्दर्यादृगतागताभ्यांविवेकंकर्तुमशक्ताद्वयमपित्यक्तुंनाशकदितिभावः । किंभूतातदृष्टिः अस्यैकमपघनमंगंहित्वाअङ्गांतरस्यमुक्तिरालोकनंतस्याः सीमांमर्यादांविशन्तीअङ्गान्तरमवलोकयन्तीस्वभावलोलेगमनागमनेकरोति अन्योपिवराकोदेशान्तरंवस्तुगृहीतुंस्वदेशस्यविक्रेतुंगमनागमनेकरोति । अपघनोङ्गमितिनिपातः ॥ ११ ॥

निरीक्षितंचांगमनीक्षितंच दृशापिबन्तीवरसेनतस्य ॥ समानमानन्दमियंदधाना विवेदनेदंनविदन्नसुभ्रूः ॥ १२ ॥

निरीक्षितमिति । इयंविदर्भसुभ्रूःभैमी तस्यनलस्यप्रथमंनितरांसादर मीक्षितंविशेषप्रकारेणानवलोकितंचान्यदङ्गंद्वारसेन औत्सुक्येनद्वैधापि यन्तीसादरंविलोकयन्तीसती किञ्चिद्दृष्टाङ्गदर्शनविषयेपिसादरदृष्टाङ्गज नितानन्दसमानंतुल्यमानन्दंदधानाधारयती किंसादरदृष्टंकिंचेषद्दृष्टम् । यद्वा । किंसादरदृष्टंकिञ्चसर्वथैवादृष्टमित्युभयोर्भेदन्तारतम्यंनाविवेद । तु ल्यसौन्दर्यत्वाद्द्वयोरपिदर्शनेतुल्यानुरागोभूदितिभावः । लोकस्यदृष्टेअना दरोद्दृष्टेचोत्साहोभवतितथात्रन उभयोरपिलोकोत्तरत्वादितिभावः । अ न्यापियोगिनीदृष्टंघटादिअदृष्टंवागगोचरंश्रुतिगम्यंब्रह्मस्वरूपंदृष्टाज्ञानेन किंसारंकिमसारमितिसादरंविचारयन्तीघटादिनिरस्त्रेत्यादिप्रमाणा न्यंस्त्रानन्दस्वरूपंब्रह्मसाक्षात्कारदशायांअङ्गीकरोतीत्युक्तिः ॥ १२ ॥

सूक्ष्मेघनेनैषधकेशपाशे निपत्यनिष्पन्दतरातरा भ्याम् तस्यानुबन्धंनविमोच्यगन्तु मपारितल्लोच नखञ्जनाभ्याम् ॥ १३ ॥

सूक्ष्मइति । आयताभ्यान्तल्लोचनखञ्जनाभ्यांखञ्जनाभ्यां तस्यकेशपाश स्यसादरावलोकनलक्षणंअनुबन्धं अप्रतबिनित्तंबन्धनंविमोच्यत्यक्त्वाग न्तुंनापारिनाशकि । किंभूताभ्यांसूक्ष्मेघनेनिबिडेनैषधकेशपाशेसादरा वलोकनार्थंनिपत्यनितरांपतित्वासादरावलोकनादेवनिष्पन्दतरीभवद्भ्यां नेत्रसङ्कोचरहिताभ्याम् खञ्जनोपिपाशेपतितोबन्धनंविमोच्यपदमपिच लितुंनशक्नोति । भैमीदृष्टिःचिरकालकेशपाशमेवावलोकतेतिभावः । केशाःसूक्ष्मास्तुपाणिदशनांगुलिपर्वकेशाइत्यादिलक्षणम् । पाशःकचार्थैः पार्थैःकर्णान्तेशोभनार्थकः । कचाद्यन्तेषुनिन्द्यार्थैः पाशःपक्ष्यादिबन्धन इतिविश्वः ॥ १३ ॥

भूलोकभर्त्तुर्मुखपाणिपाद पद्मैः परीरम्भमवाप्य तस्य । दमस्वसुर्दृष्टिसरोजराजि स्थिरंनतत्याज सगंधबन्धम् ॥ १४ ॥

भूलोकेति । दमस्वसुर्भैम्याःदृष्टिसरोजराजिर्नयनकमलपङ्क्तिः तस्य भूलोकभर्त्तुर्नलस्यमुखपाणिपादलक्षणैःपद्मैः परीरम्भंसंश्लेषमवाप्यसंबध

संबंधसगोत्रसम्बंधसजातीयत्वं हृषिरंतस्याजं । मुखादीनांकमलस्यादसगोत्रत्वम् । अन्योपिचिराद्बंधुभिरालिङ्गनंप्राप्यझटितिनमुञ्चति । भैमीदृष्टिर्नलमुखाद्भिप्रतिरमणीयत्वात्चिरमालोकतेतिभावः । सबन्धःज्योतिर्जन्मपदैतिसः । सगन्धेतिपाठेसगन्धोऽन्धुरुच्यते ॥ १४ ॥

तत्कालमानंदमयीभवन्ती भवत्तरानिर्वचनीयमोहा ॥ सामुक्तसंसारदशारसाभ्यां द्विस्वादमुल्लासमभुङ्क्तमिष्टम् ॥ १५ ॥

तत्कालमिति । साभैमी । पूर्वोक्तप्रकारेणमुक्तसंसारिणोर्यद्दशेअवस्थे तयोरसाभ्यांप्रीतिभ्यांकृत्वा द्वौस्वादौरसौयत्रैवंविधंमिष्टमतिस्वादुमतिवहुलंउल्लासंहर्षंनभुक्त अनुवभूव क्रमेणाह । किंभूता । तत्कालंतस्मिन्नलदर्शनकालेनलोयंमिलितिबुद्ध्याआनन्दमयीआनन्दरूपाभवन्ती । तथापुरस्थितेऽस्मिन्नन्तःपुरेनलागमनंकुतस्त्यमितिहेतोः अतिशयेनभवन्भवतरःअतितरामनिर्वचनीयोलोकोत्तरःमोहोज्ञानाभावोयस्याः तद्दर्शनेनैवोत्पद्यमानमूर्छावा । आनन्दरूपत्वंमुक्तदशा । आनन्दंब्रह्मणोरूपमिति श्रुतेः । अनिर्वचनीयमोहत्वंसंसारिदशातुल्यकालमेव मुक्तसंसारिदशे तयाऽनुभूतेत्याश्चर्यम् । अभुङ्क्तेतिलङ् । अभुक्तेतिपाठेलुङ् ॥ १५ ॥

दूतेनलश्रीभृतिभाविभावा कलङ्किनीयंजनिमेति नूनम् ॥ नसंव्यधान्नैषधकायमायं विधिःस्वयन्दूतमिमांप्रतीन्द्रम् ॥ १६ ॥

नलत्वनिश्चयंविनातत्रानुरक्तायाःभैम्याः पातिव्रत्यभङ्गलक्षणामनौचितीमाशङ्क्यकविःपरिहरति । दूतइति । विधिरिमांभैमींप्रतिउद्दिश्य नैषधस्यकायोनलदेहएवमायायस्यएवंविधंकपटनलवेषधारिणं इन्द्रमेवस्वयंदूतंनसंव्यधान्नाकरोत् । किंतुइतिकारणात् सत्यमेवनलंदूतमकरोत्। नूनमुत्प्रेक्षे । इतिकिंनलश्रीभृतिनलकान्तिधारिणिदूते भाविभावामलबुद्धौ संभविष्यदनुरागाइयंनलव्यतिरिक्तेनुरागात्कलंकिनी अकीर्तिमती जनिमाजन्मामूत् । कपटनलरूपधारणसामर्थ्येसत्यपीन्द्रोनलरूपंधृत्वास्वीयदूत्यार्थंनगतवान् । तत्रेदमाकूतम् । भैम्याःपातिव्रत्यभङ्गोमाभूदि

तिइन्द्रायवुद्धिंनादत्तेत्यर्थः । नलनिश्चयाभावेपिसत्यएवनलेनुरागात्पातिव्रत्यक्षतिरितिभावः । अमितेतिपाठेनूनंनिश्चितंकलंकिनीजनिताभविष्यतीतिल्युटाव्याख्येयम् ॥ १६ ॥

पुण्येमनःकस्यमुनेरपिस्यात्प्रमाणमास्तेयदघेपिधावत् ॥ तच्चिंतिचित्तंपरमेश्वरस्तु भक्तस्यहृष्यत्करुणोरुणद्धि ॥ १७ ॥

नन्वतिसुंदरस्यनलस्यान्तःपुरेप्रवेशोसम्भवतीतिनिश्चयान्नलसदृशेस्मिन्मेनोमनोप्रवृत्तेः कथंपातिव्रत्यभंगप्रसक्तइत्याशङ्कांपरिहरति । पुण्यइति । आस्तांभैमीपरित्यक्तविषयस्यमुनेरपिकस्यमनः पुण्येविषयेप्रमाणंनिश्चितंस्यादपितुनकस्यापि कुतःयद्यस्मात् । अघेपिपरदारगमनादौपातकेपिविषयेधावच्छीघ्रंगच्छदास्ते । मुनेर्मनःपुण्येएवनियतंप्रवर्त्ततइतिनकिंतुपातकेपि तत्राप्ययंविशेषः । शीघ्रंनविपार्यैवप्रवर्त्तते । एतच्चधावत्पदेनसूचितं शीघ्रगतावेवधावादेशविधानात् । अत्रतुनलस्यसत्यत्वाद्भैम्याःपातिव्रत्यरक्षणायैवत्वमेवंकृतवानिति । तर्हिसर्वेपिमुनयःपापिनःस्युरित्याशङ्कांपरिहरति । परमेश्वरस्तुपुनः हृष्यत्करुणउद्यत्कृपःसन् तच्चिन्तितदघचिंतयतिकर्त्तुमिच्छतीत्येवंशीलंभक्तस्यचित्तं रुणद्धिपातकात्परावर्त्तयति । एवाञ्चपरिरघुनायकृपातेपातकेसर्वेषैवनप्रवर्त्तन्तेइतिनसर्वेषांपातकितामसक्तइत्यर्थः । तच्चिंतिपरमेश्वरचिन्तिवा ॥ १७ ॥

सालीकदृष्टेमदनोन्मदिष्णु र्यथापशालीनतयानमौनम् ॥ तथैवतथ्येपिनलेनलेभे मुग्धेषुकःसत्यमृषाविवेकः ॥ १८ ॥

सेति । स्वभावतःशालीनतयापिअतिसलज्जापिमदनोन्मदिष्णुरुन्मादवतीसतीसाभैमी अलीकदृष्टेमिथ्यादृष्टेनलेविषयेयथामौनंनापयथापूर्वंकिमप्यवादीत्तथैवतथ्ये सत्येपिनलेमौनंनलेभे । अलीकवद्दृष्टेवसत्येपिनलेऽप्यवोचदित्यर्थः । तत्कथमित्याशङ्क्याह । मुग्धेषुमूढेषु सत्यस्यमृषाऽसत्यस्यविवेकोविचारःकःअपितुन । अतोनधृष्टतयावचनंदोषायेतिभावः । शालीनतयेतिवापाठः । अपशालीनतयाअपगतशालीनतयायथामौनंनलेभेतथैवतथ्ये पीतिवाव्याख्येयम् ॥ १८ ॥

व्यर्थीभवन्भावपिधानयत्ना स्वरेणकृत्वाश्लथगद्गदेन ॥ सखीचयेसाध्वसबद्धवाचि स्वयन्तमूचे नमदाननेन्दुः ॥ १९ ॥

व्यर्थीभवदिति । अथसाभैमीस्वयमात्मनातंनलमूचे । कस्मिन्सति । सखीनाञ्चयेसमूहेसाध्वसेनअन्तःपुरेपरपुरुषप्रवेशाज्जनितसाध्वसेनकृत्वा बद्धावाक्येनकृतमौनेसति । किंभूतासा । श्लथोविरलःगद्गदस्खलितःतेनस्वरेणशब्देनकृत्वाव्यर्थीभवन्भावपिधानयत्नः सात्त्विकभावगोपनप्रयासोयस्याःतथाअतएवनमन्नम्रीभूतः आननेन्दुर्मुखचन्द्रोयस्याःसा । अथस्वरेणैवविभावयन्तीभावंनिजंसामृदुगद्गदेनेत्यपिपाठः स्पष्टार्थः ॥ १९ ॥

नत्वाशिरोरत्नरुचापिपाद्यं संपाद्यमाचारविदातिथिभ्यः ॥ वैधीविधेयामधुपर्कपृक्तिः प्रियाक्षराली रसधारयापि ॥ २० ॥

स्वयाद्यं परिहरति । नत्वेति । त्रिभिर्विशेषकं । हेपुरुषश्रेष्ठआचारविदासदनुष्ठानज्ञेनधर्मशास्त्रविदापुरुषेण नत्वाशिरोरत्नरुचाचूडामणिदीप्त्यापिअतिथिभ्यःपाद्यं पादार्थंवारिसम्पाद्यं देयम् । उदकाभावेनत्वापितावश्यंपादक्षालनसम्भावनाकर्तव्या । तस्याःरत्नरुचोजलतुल्यत्वादित्यर्थः । आदौनमस्कारःकर्तव्यइतिभावः । आचारविदाऽतिथिभ्यइतिप्रतिवाक्यं श्लोकत्रयेपिज्ञातव्यम् । वैधीविधिसम्बन्धिनीनोदनावाक्यादागतामधुपर्कजन्यातृप्तिःप्रियाक्षरालीप्रियवचनपङ्क्तिः तस्यारसधारयामाधुर्यधारयापिविधेयाकरणीया । मधुपर्कसामग्र्यभावेपिप्रियवचनमपिवक्तव्यमितिभावः । पाद्यं पूर्ववत् ॥ २० ॥

स्वात्मापिशीलेनतृणंविधेया देयाविहायासनभूर्निजापि ॥ आनन्दबाष्पैरपिकल्प्यमंभः पृच्छाविधेयामधुभिर्वचोभिः ॥ २१ ॥

स्वात्मेति । आचारविदाशीलेनविनीतत्वादिनास्वभावेनसद्वृत्तेनवाकृत्वा स्वात्मापिस्वशरीरमपितृणंविधेयम्तृणंयथानम्रीक्रियतेतथाऽतिथीनामग्रे सेवार्थंस्वात्मापिनम्रीकर्तव्यइत्यर्थः । अथचतृणाभावेस्वाऽऽत्मैव

तृणस्थानेविधेयइत्यर्थः । विष्टरादिकस्यअभावेनिजापिस्वीयापि आस नल त्वयायाभूःस्थानंसिंहासनादितदपि आदराद्झटितिविहायत्यक्तादे या भूःस्थानेआसनमेवकल्प्यमित्यर्थः । अथचजलस्थानेआनन्दबाष्पंचर णक्षालनार्थम् । यदिजलंनसम्भवतितर्हिआनन्दबाष्पैरपिहर्षाश्रुभिरपिच क्षुःकल्प्यं अतिथिदर्शनमात्रेहृष्टेनभवितव्यमित्यर्थः । तेएवकल्प्याःइत्य र्थः । मधुभिरितिप्रियैर्वचोभिःपृच्छापिकुशलप्रश्नोपिविधेयःप्रियंवक्तव्य मित्यर्थः । मधुपर्कस्थानेमधुरवचनमेवकर्त्तव्यमित्यर्थः । आचरणशालप यापिप्रियवचनादिक्रियतइतिभावः । शीलंस्वभावेसद्वृत्तइतिविश्वः । अ प्रणोद्यातिथिःसायमपिवाग्भूतृणोदकैरितिस्मृतेः ॥ पृच्छपूर्ववत् ॥२१॥

पदोपहारेनुपनम्रतापि संभाव्यतेपांत्वरयापरा धः ॥ तत्कर्त्तुमर्हांजलिसज्जनेन स्वसंभृतिःप्रांज लतापितावत् ॥ २२ ॥

पदेति । पदोपहारेचरणक्षालनविषयेत्वरयाझटितिअपामनुपनम्रता जलानामनानयनमपिअपराधःसंभाव्यतांयतोलोकेनेत्यर्थः । विलम्बादानि यनयेपिझटितिअनानयनाद्वयोपराधःसंभाव्यते ॥ तत्तस्मादाचारविदांञ्ज लिसज्जनेनकरपुटसंयोजनेनकृत्वा स्वस्यसंभृतिकृपास्वकरणीयातिथ्यसा मग्रीयावत्संपाद्यते तावदाद्यवञ्जलिसंयोजनेनस्वीयाप्रांजलताऋजुताक र्त्तुंअर्हाप्रकटीकर्त्तुमुचितेत्यर्थः। तावतापूर्वोपराधशांतिर्भवतीतिभावः। यावत्स्वसंभृतिस्वकरणीयातिथ्यसामग्रीसंपाद्यतेतावदंजलिसज्जनेनप्रांज लतापिकर्त्तुमर्हाइतिवान्वयः ॥ यद्वाऽपांत्वरयाजलानयनार्थंसत्रमेणा नुपनम्रतानमस्काराभावःअपराधःसंप्राप्यतेजलानयनात्पूर्वंकृतेननमस्का रेणसर्वोप्यातिथ्यसंभारःकृतोभवतीत्यर्थः । तथैतत्सर्वंकृतमितितात्पर्यं प्रांजलेत्यच्प्रत्यन्ववेत्यत्राजितियोगविभागात्प्रत्ययनामर्हालिवत्समासांतइ तिज्ञेयम् ॥ २२ ॥

पुरापरित्यज्यमयात्वसर्जि स्वमासनंतत्किमिति क्षणंन ॥ अनर्हमप्येतदलंक्रियेत प्रयातुमीहाय दिवान्यतोपि ॥ २३ ॥

पुरेति । अर्थात्पूर्वोक्ताचारदर्शनादाचाराच्च पुरस्त्रादावेवसमः रुनप रित्यज्यत्यस्तर्जिञ्जवतेदीयतेसः तहनर्हमपियोषिदासनत्वाद्वाजानर्हत्वा द्योव्ययमप्यासन्नसगंलगमात्रंकिमितिकुतो ह्रेलोनालङ्क्रियेत । अपितु लंक्रियतामित्यर्थः । यदिचयद्यप्यन्यतोपिप्रयातुंअन्यदेशमपिगंतुं इच्छावांछावि द्यतेयातथाप्येतदलंकरणमित्यर्थः । त्वामेवोद्दिश्यायातमितिचेन्न । ममैतादृग्भागधेयाभावादन्यत्रगमनेच्छायामपिक्षणमात्रमलंक्रियतामित्यर्थः । क्रियेत । प्रार्थनायांलिङ् ॥ २३ ॥

निवेद्यतांहंतसमापयन्तौ शिरीषकोशम्रदिमाभिमानम् ॥ पादौकियद्दूरमिमौप्रयासे निधित्सते तुच्छदयंमनस्ते ॥ २४ ॥

निवेद्यतामिति । हेपुरुषश्रेष्ठ तुच्छदयंकृपाशून्यंतेमनः कियद्दूरं किंपरिमाणंदूरगमनलक्षणेप्रयासेइमौपादौनिधित्सतेस्थापयितुमिच्छतीत्यनुकंपायां निवेद्यतामप्युच्यतां किंभूतौपादौशिरीषाणाशिरीषपुष्पाणांकोशःसमूहः तस्यम्रदिम्नामार्दवविषयेयोभिमानोनमत्तोधिककोमलवस्तुनास्तीतियोगर्वः तद्विषयेलोकस्यवागर्वसमापयंतौनाशयंतौ अन्योपिनिष्कृपःसुकुमारजनंप्रयासेप्रेरयति । अत्रागमनेपिग्लानोसीदानीनितःक्वगंतासीतिभावः । शून्यंतुवशीकंतुच्छरिक्तकेइत्यमरः ॥ २४ ॥

अनायिदेशःकतमस्त्वयाद्य वसन्तमुक्तस्यदशांवनस्य ॥ त्वदाप्तसंकेततयाकृतार्था श्राव्यापिनानेनजनेनसंज्ञा ॥ २५ ॥

अनायीति । त्वयाद्यकतमःकिंसंज्ञकोदेशः वसंतेनमुक्तस्यवनस्यदशांअवस्थांअनायिप्रापितः वसंतेनविनायथावनंनिःशोभंतथात्वयाविनासदेशोपीत्यर्थः । कस्माद्देशादागतोसीतिकथयेतिभावः । तथानेनमल्लक्षणजनेनत्वयिआप्तःविषयप्राप्तःसंकेतःसम्बन्धोययातस्याभावेनहेतुना कृतार्थाचरितार्थासंज्ञापिनामापिनश्राव्या अपितुश्रोतुमर्हास्वनामापिकथयेत्यर्थः । श्राव्याअवश्यकाभावाद्ण्यदितियत् ॥ २५ ॥

तीर्णःकिमर्णोनिधिरेषनैव सुरक्षितेप्यत्र देहप्रवेशः

फलंकिमेतस्यतुसाहसस्य नतावदद्यापिविनिश्चि
नोमि ॥ २६ ॥

तीर्णइति । हेपुरुषश्रेष्ठ सुरक्षितेहद्यांतःपुरेतवप्रवेशोभूदितियत् एष
अर्णोनिधिःसमुद्रएवकिंनतीर्णःकिंतुबाहुभ्यामर्णवतरणतुल्यइति एतस्या
न्तःपुरप्रवेशरूपस्यसाहसस्याविचार्यकारित्वस्यतुपुनःकिंफलंप्रयोजनमिति
अद्यापीदानींअपिनविनिश्चिनोमिकिमर्थमत्रागतमित्यपिकथयेत्यर्थः २६

तवप्रवेशेसुकृतानिहेतुं मन्येमदक्ष्णोरपितावदत्र
नलक्षितोरक्षिभटैर्यदाभ्यां पीतोसितन्वाजितपु
ष्पधन्वा ॥ २७ ॥

तवेति । तवात्रप्रवेशेमदक्ष्णोर्मदीयनेत्रयोःसुकृतानिपुण्यान्यपितावत्
दादौहेतुंकारणमित्यहंमन्ये कारणांतरेसंभवत्यपिमदीयनेत्रयोःपुण्यमा
दिकारणमित्यर्थः । कथमित्यतआह । यद्यस्मात्रक्षिभटैरतिसुंदरस्त्वंन
लक्षितःतथातन्वावपुषाजितःपुष्पधन्वाकामोयेनैवंभूतोयदाभ्यांनेत्राभ्यां
पीतोसित्वंस्वयावलोकितोसीत्यर्थः । रक्षार्थंनेवनियुक्तैःशूरैर्नदृष्टः आ
भ्यांचदृष्टःतस्मान्नेत्रपुण्यमेवात्रतवप्रवेशेहेतुरितिभावः ॥ २७ ॥

यथाकृतिःकाचनतेयथावा दौवारिकानूधकरणी
चक्षुषिः ॥ रुच्योरुचीभिर्जितकांचनाभि स्तथा
सिपीयूषभुजांसनाभिः ॥ २८ ॥

यथेति । यथायेनप्रकारेणतेआकृतिराकारःलोकोत्तराअतिरमणीया । य
थावातेकाचनापूर्वाशक्तिश्चदौवारिकाणामंधंकरणीअंधताकारिणी स्वीय
गौरत्वेनजिताकांचनीहरिद्रायाभिस्ताभिःकान्तिभिः त्वंरुच्योभिलाष
णीयोसितथातेनकारणेनपीयूषभुजांदेवानांसनाभिःसगोत्रोसि । देवत्वेनवि
नैतन्नघटते ऽतस्त्वं प्रायेणकश्चनदेवोसीतिमन्ये चकारोरुच्यइत्यनेनयोज्यः
रुच्यश्चासियथेतिसंबन्धइतिवा । निशाख्याकांचनीपीताहरिद्रावरवर्णिनीत्य
मरः । कांचनेतिपाठेसुवर्णो दौवारिकेत्यत्रद्वारेनियुक्तइत्यर्थेतत्रनियुक्तइ
तिठक्द्वारादीनांचेत्यैचिश्रभूतवद्भावेआद्यसुमगेतिपु निखिलात्पूर्वपद
स्यसुसिठिड्ढेतिङीप् । रुचिमर्हतिरुच्यःतदर्हतीतियत् । राजसूयेतिनि

यातोवा । जितकांचनीत्विरिति पाठे समासांतविधेरनित्यत्वात्कप्त्वृश्चेति नकप् सनाभिर्ज्ञातिर्जनपदेति समावः ॥ २८ ॥

नमन्मथस्त्वं महिनास्तिमूर्त्तिं नंचाश्विनेयःसहि नाद्वितीयः ॥ चिह्नैःकिमन्यैरथवातवेयं श्रीरेवता भ्यामधिकोविशेषः ॥ २९ ॥

नेति त्वंमन्मथोनहियस्मात्सःकामोनास्तिमूर्त्तिःशरीररहितः त्वंआश्विनेयःअश्विनीकुमारोनच । योप्ययं । हियस्मात्सअद्वितीयोनास्तिकिंतुद्वितीयसहितएव । त्वंसशरीरएकश्च अयवेतिपूर्वोपरितोवे । अन्यैश्चिन्हैःकिं अपितुनकिमपि । किंतर्हिताभ्यांकामाश्विनेयाभ्यांसकाशादधिकाइयंतव श्रीःशोभैवविशेषः । तयोरीदृक्शोभाभावादियमेवतदन्यत्वस्यज्ञापिकेत्यर्थः । नास्तिमूर्त्तिः अस्तिक्षीरादयश्चेतिबहुव्रीहौपक्षाज्ज्ञकारसमासः २९

आलोकतृप्तीकृतलोकयस्त्वा मसूतपीयूषमयूख मेनं ॥ कःस्पर्धितुंधावतिसाधुवार्धं मुदन्वतान न्वयमन्वयायः ॥ ३० ॥

आलोकेति । ननुहेलोकेनतृप्तीकृतःकृतार्थीकृतोलोकोयेनतत्संबोधनं यस्त्वामेतंत्वद्रूपंपीयूषमयूखंचद्रंअसूतसकोयमन्वयोवंशःउदन्वतासार्धं स्पर्धितुंस्पर्द्धांकर्तुं साधुयुक्तं धावतिसमुद्रसाम्यार्थंझटितित्वद्वंशपारूढोजवतीत्यर्थः । समुद्रोव्यालोकेनप्रकाशेनतृप्तीकतभुवनसुधाकरसूते । कस्मिन्वंशेसमुत्पन्नोसीत्यपिकथयेतिभावः । आलोकोदर्शनोद्योतौलोकस्तुभुवनेजनइतिचामरः ॥ ३० ॥

इतीरयंतीनलसुंदरंतं मत्वामरंरक्षिजनाक्षिबन्धा त् ॥ आतिथ्यचाटून्यपदिश्यातस्यां प्रियंप्रिय स्यास्तुनवस्तुत.सा ॥ ३१ ॥

भूयोपीति । सावासातंनलंरक्षिजनानांदौवारिकाणामक्षिबन्धान्नेत्रबंधनादद्दृष्टीकरणान्नलवत्सुंदरंनलसदृशं अमरंमत्वानिश्चित्यातिथ्यसंबंधीनिचाटूनिप्रियवचनान्यपदिश्यव्याजीकृत्य तद्व्याजेनतस्यांतस्मिन्नमरेविद्यमानांप्रियस्यनलस्यश्रियंशोभांवस्तुतःतत्त्वतःअस्तुतपुनरपिवर्णयतिस्म ॥

प्रियवचनव्याजेनत्वत्तोनलेशोभावर्णनपरैववमूवेतिभावः ॥ ३१ ॥

वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुतेवस्तुनिमौनता चेत् ॥ खलत्वमल्पीयसिजल्पितेपि तदस्तुवंदिभ्रमभूमितैव ॥ ३२ ॥

पुनरपिकिमित्यस्तुतेत्याशंक्यकविःस्तुतिप्रकारमाह । वागिति । गुणैरद्भुतेआश्चर्यभूतेवस्तुनिमौनतामूकीभावश्चेद्गुणाद्भुतंवस्तुनवर्ण्यतेचेत्तर्हि वाग्जन्मनोवैफल्यमसह्यशल्यमतिदुःखदायिदुःसहशल्यतुल्यभवतीत्यर्थः मूकस्यवक्तुकोपिविशेषइत्यर्थः । तद्वर्ण्यमेववक्तव्यमित्यतआह । अल्पीयसिजल्पितेतुभाषितेपिखलत्वंदुर्जनत्वंआयाति । लोकस्तंदुर्जनइतिवदति तत्तस्मात्वन्दिनःस्तुतिपाठकस्ययाभ्रान्तिः स्तुतिपाठकोयमितिभ्रान्तिस्तस्याभूमितैवस्थानतैवास्तुभवतु । गुणाद्भुतंवस्तुवश्यंवर्णनीयमितिकविरुपदेशवचःतस्मात्तु नयायुक्तास्तुतिरारब्धेतिभावः । तस्मान्मयिस्तुतिपाठकभ्रान्तिर्लोकस्यभवत्वितिभैमीवचोवेतिभावः ॥ ३२ ॥

कंदर्प एवं दमत्रिन्दतत्वां पुण्येनमन्येपुनरन्यजन्मा यद्दोश्चहराक्षिहुताशकुंडजुहावयन्मंदिरमिन्द्रियाणाम् ॥ ३३ ॥

कंदर्पइति ॥ कंदर्पएवमहतापुण्येनत्वामेवत्वद्रूपमेवेदंद्रूपनामंपुनरपिअन्यजन्माविन्दतलेभेइत्यहमन्येजाने । कुतोयद्यस्मात्सकंदर्पःस्वंहृदुःसहंअक्षितृतीयनेत्रंतत्सम्बन्धिहुताशकुंडंतस्मिन्नि न्द्रियाणांमंदिरंदेहशरीरंजुहाव । पूर्वमेवयाधिकसेदर्पप्राप्त्याशयाबुद्धिपूर्वकंमेनअग्निकुंडेस्वशरीरक्षिप्ततेनैवपुण्येनत्वद्रूपमाप्तम् । अन्येनापितथैवक्रियतेसएवत्वइतिभावः ॥ ३३ ॥

शोभाययोभर्जितशैवशैलं करोषिलज्जागुरुमौलिमलम् ॥ दस्तौहठश्रीहरणादुदस्तौ कंदर्पमप्युज्झितरूपदर्पम् ॥ ३४ ॥

शोभेति त्वंशोभायशोभिःकीर्तिभिःकृत्वाजितःशैवोहरसम्बन्धीशैलः कैलासोयेनएवंविधमैलपुरूरवसहठेनबलात्कारेणश्रीहरणात् लज्जयागुरुं

सोमौलिः शिरो नस्त्वएवंविधंकरोषि । तथाकांतिकीर्तिभिर्जितकैलासौ । दृष्ट्वावाश्विनेयावपिहठहरणादुत्सौगलद्वाप्यौकरोषि । तथातस्मादेवहे तोःकन्दर्पमपिलज्जितस्त्यक्तःस्वपदर्पःसौंदर्यगर्वोयेनस्तादृशंकरोषि । च तुर्ण्यामपित्वमधिकःसुंदरइतिभावः । अन्योपिबलादृग्रहीतधनः सलज्जःग लद्वाष्यःस्त्यक्तदर्पश्चभवति ॥ ३४ ॥

अवैमिहंसावलयोवलक्षास्त्वत्कांतिकीर्तिश्चपलांपुलाकाः ॥ उड्डीययुक्तंपतितास्त्रवंति वेशंतपूरंपरितःप्लवंते ॥ ३५ ॥

अवैमीति । वलक्षाःधवलाहंसावलयःहंसपङ्क्तयस्त्वत्कान्तेःत्वत्सौंद र्यस्यकीर्तेर्यशसश्चपलाश्चंचलाःप्रसरणशीलाःपुलाकास्तुच्छधान्यांशा इत्यहमवैमिजाने । बलाकाइतिपाठेताश्चतिव्याख्येयम् । पुलाकत्वंसमर्थ यते । अतएवताउड्डीयउत्पत्यस्त्रवंतीनांनदीनांवेशतानांपल्वलानांच पूरंप्रवाहंपरितःसमंततःपतिताःसत्यःयुक्तंप्लवंते तदुचितमित्यर्थः । पु लाकाअप्यतिलघुत्वादुत्पत्यनद्यादौपतिताःसंतोनीरेतावत्तरन्ति । त स्माद्धंसादीनांपुलाकत्वंघटतइत्यर्थः । शुभ्राहंसावलयोनकिंतुत्वत्कान्ति कीर्तिपुलाकाःसर्वेप्युड्डीयपतिताः सत्यःनदीस्त्यसरांसिचपूरयित्वाप्ल वंते । त्वत्तःसुन्दरतरःकोपिनदृष्टइतिभावः वलक्षोधवलोर्जुनः । स्यात्पु लाकस्तुच्छधान्ये वेशन्तःपल्वलंचाल्पसरइत्यमरः पूरम्परितः अभितःप रितइतिद्वितीया ॥ ३५ ॥

भवत्पदाङ्गुष्ठमपिश्रितांश्रीर्ध्रुवंनलब्धाकुसुमायुधेन ॥ रतीशजेतुःखलुचिन्हमस्मिन्नर्द्धेन्दुरास्तेनखवेषधारी ॥ ३६ ॥

भवदिति । कुसुमायुधेनमकरध्वजेनभवत्पदस्यभवच्चरणस्यावयवाच्च्यु तोंगुष्ठःतमपिश्रिताश्रीःशोभातस्मात्कारणाद्ध्रुवप्रायेणनलब्धा । अन्या वयवशोभाप्राप्तिःकावार्ता तस्मात्कुतःखलुयस्मादस्मिन्नंगुष्ठे नखरूपेनल क्ष्याअंधारयतीतिधारिदधत् । अर्द्धेन्दुरर्द्धचिन्हलक्षणरतीशजेतुर्महादेवस्य चिन्हमास्तेविद्यते स्वशत्रुचिन्हंनखरूपंअर्द्धेन्दुंविलोक्यतद्गताश्रियंगृहीतुं

बिभेतीत्यर्थः । अन्योपिस्वशत्रुचिन्हंदृष्ट्वातच्छ्रियंगृहीतुंनशक्नोति । कामः स्व.पदाङ्गुष्ठनखसदृशोनजयतीतिभावः । कामजयिनमीशमपिजित्वा तच्चिन्हंयेनापहृतंतस्यांगुष्ठस्यश्रियंकामःकथंलभेतेतिवाभावः । त्वदङ्गुष्ठः कामस्यजेताऽर्धचन्द्रांकितत्वाद्यथाशिवइत्यनुमानमत्रप्रमाणमित्यर्थः । त्वन्नखाअर्द्धाकाराइत्यर्थः । रतीशजेतुःशेषषष्ठीसमासः ॥ ३६ ॥

राजाद्विजानामनुमासभिन्नः पूर्णांतनूकृत्यतनूंतपोभिः ॥ कुहूषुदृश्येतरतामुपेत्य सायुज्यमाप्नोतिभवन्मुखस्य ॥ ३७ ॥

राजेति । अनुमःसंप्रतिमासंभिन्नःपुनरुत्पद्यमानत्वादन्यएवद्विजानां राजाचन्द्रःपूर्णिमायांपूर्णांतनूंशरीरं चान्द्रायणतपोभिरिवतनूकृत्यक्षयंनीत्वाकुहूषुप्रतिमासममावास्यासु सदृश्येतरतामदृश्यत्वंएत्यप्राप्यभवन्मुखस्यसायुज्यमैक्यं प्राप्नोतिगच्छतिकिं तपःसामर्थ्येनत्वन्मुखैक्यं गतइत्यर्थः । चन्द्रादप्यधिकंभवन्मुखंइतिभावः । अन्योपिब्राह्मणश्रेष्ठ:पूर्वसंस्कारवशात्तपोभिःशरीरंवशीकृत्यब्रह्मैक्यं गच्छति । दृश्येतरतामिषेणेतिक्वचित्पाठः ॥ ३७ ॥

कृत्वाविचित्रेतववीरनेत्रे किंकृष्णसारस्यदृशोमृगस्य ॥ अदूरजाग्रद्विदरप्रणाली च्छलादयच्छद्विधिरर्धचन्द्रम् ॥ ३८ ॥

कृत्वेति । विधिःतवनेत्रेदृशौबहुभिर्वर्णैःशुक्लकृष्णरक्तरूपैर्विचित्रेनानावर्णेआश्चर्यरूपेचकृत्वाकृष्णवर्णएवसारःश्रेष्ठांशोविद्यतेयस्मिन्नेतादृशस्यमृगस्यतयोर्दृशोरदूरेनिकटेजाग्रतीस्फुरन्तीविदररूपानेत्राधोगतरूपाप्रणालीरेखातामेवार्द्धचन्द्रमयच्छद्दत्तवान्किम् । त्वन्नेत्रसादृश्याभिलाषिणोःमृगदृशोरधोवर्तमानगर्तमिषेणाधिकारसूचनार्थंपरीक्षकोमृगस्यागलहस्तंदत्तवान् । विदरःस्फुटनंभिदेत्यमरः ॥ ३८ ॥

मुग्धःसमोहात्सुभगाऽत्नदेहा हृदद्भवभूरचनायचापम् ॥ भ्रूभङ्गजेयस्तत्रयन्मनोभू रनेनरूपेणयदातदाभूत् ॥ ३९ ॥

मुग्धइति । यद्यस्माद्योमनोभूःकामःभवद्भ्रुवोरचनायनिर्माणायब्रह्मणोस्वंचापन्ददत्प्रायच्छत् सदातदासर्वदाअनेनप्रत्यक्षदृश्येनरूपेणसौन्दर्येणहेतुनातवभ्रुवोर्भङ्गःकुटिलत्वंतन्मात्रेणजेयोजेतुंयोग्योजातश्र्माभूत् । तस्मात्कारणात्सकामोमोहादज्ञानान्मुग्धोमूर्खोनतुसुभगात्सुन्दराद्धेतोःमुग्ध.सुन्दरः यःस्वकीयमायुधंस्ववैरिणेप्रयच्छतिसनिरायुधत्वाद्धेलयावैरिणाजेतुंशक्यते । तस्मात्कामोमुग्धोमूर्खोनतुसुन्दरःउन्मादकत्वात्सदाकारत्वाच्चभ्रुवौकामचापरूपेइतिभावः । यदालदेतिसमुदायस्यसर्वदेत्ययमेवार्थः । मुग्धःसुन्दरमूर्खयोरितिविश्वः ॥ ३९ ॥

मृगस्यनेत्रद्वितयंतवास्ये विधौविधुत्वानुमितस्य दृश्यम् तस्यैवचंचत्कचपाशवेशः पुच्छःस्फुरच्चामरगुच्छएषः ॥ ४० ॥

मृगस्येति । तवास्येविधौमुखरूपेचन्द्रे विभतोमृगवांश्चन्द्रत्वात्संगतमिहितिविधुत्वेनहेतुनानुमितस्यानुमानगम्यमृगस्यनेत्रद्वितयंनेत्रद्वयंदृश्यंदृश्यतइत्यर्थः । तस्यैवमृगस्यचञ्चन्चिलसच्चकचपाशःकेशपाशस्तस्यैवेषआकारोव्याजोयस्यैवंविधः एषपुच्छःस्फुरच्चामरपुच्छोयस्यस्फुरच्चामरस्तवकपुच्छोमृग.नतुकेशपाशइत्यर्थः । चन्द्रतुल्यंमुखंमृगनेत्रतुल्येनेत्रेस्फुरच्चामरगुच्छपुच्छसदृशश्चकेशपाशः अलङ्कारार्थंचचामरंगुच्छपुच्छेचलभ्यते । अत्रहरिणविशेषोवाज्ञातव्यः ॥ ४० ॥

आस्तामनङ्गीकरण द्भवेन दृश्यःस्मरोनेतिपुराणवाणी । तवैवदेहश्रितयाश्रियेति नवस्तुवस्तुप्रतिभातिभाव: ॥ ४१ ॥

आस्तामिति इतिपुराणवाणीपुराणानांपुरातनानांपुराणीचजीर्णावागास्तांतिष्ठतु । इतिकिम् स्मरोमवेनशिवेनानङ्गीकरणाद्धेतो दृश्योनयनगोचरोनेतितुपुनस्तवदेहंश्रितयाश्रियाशोभयाएवकर्त्र्या अनङ्गीकरणात् कानस्याश्रयत्वेनास्वीकाराद्धेतोर्नदृश्यःनयनगोचरोऽयचतेनैवहेतुनादृश्योरनघोनाभूदइतिनवोनूतनोऽपूर्वश्चवादः वचनंवस्तुसत्यभूतवस्तुतत्त्वंवाप्रतिभातिस्फुरति । कामस्तच्छोभयाजितत्वाददृश्योजातोनतुदग्धत्वादितित

स्त्ववादः । कामादपिसुन्दरोसीतिभावः । प्रतिभायाअतिवादोऽतिशयइ तिवा । वाणोस्त्रीजीर्णवादस्तुपुमानवच । अनयोर्महदन्तरमित्यर्थः । त्व द्देहाश्रितयाशोभयाहेतुनाशोत्नादर्शनमात्रेणदृष्योजातइतिवा ॥ ४१ ॥

त्वयाजगत्युञ्छितकांतिसारे यदिंदुनाशीलिशिलो
ञ्छवृत्तिः । आरोपितोमाढवकोपिमौलौ सपत्न
राज्येपिमहेश्वरेण ॥ ४२ ॥

त्वयेति । त्वयाउञ्छितोगृहीतःकान्तिसारःशोभाश्रेष्ठभागोयस्यतस्माद्धा एवंविधेजगतित्रिभुवनमध्ये इन्दुनाशिलश्चउञ्छश्चक्षेत्रादिपतितकणादानधा न्यादानलवणौशिलोञ्छौतावेववृत्तिर्जीविकायद्यस्मादशीलि अभ्यस्तीक ता । तस्मात्कारणान्महेश्वरेणमाणवकोपिबालःकलारूपोपिचन्द्रःमौलौ शिरसिआरोपितःधृतः । यच्चनांयाजकानांब्राह्मणानांराज्येपिचक्रअभिषि क्तःद्विजराजोपिततएवकृतइत्यर्थः । त्वद्गृहीतात्कान्तिसारादवशिष्टंका तिभागंकथंचिन्मेलयित्वाचन्द्रेणस्वस्यसौंदर्यं यस्मादर्जितंतस्मात्कलामात्र स्यातिसुन्दरत्वादीश्वरेणबालोपिशिरसिभूषणत्वेनधृतोयच्चनांमध्ये श्रेष्ठ कृतोऽत्युज्ज्वलत्वाच्छिलोञ्छवृत्त्युपादानाच्चेत्यर्थः । बालोपिअन्यस्तपस्वी महताराज्ञामनस्क्रियतेद्विजराज्ये स्थाप्यतेचमहाधनिकेनमाणवकोहार विशेषोमौलावारोप्यतइत्याश्चर्यम् । सतुकण्ठेधार्यतेनतुशिरसिचन्द्रःत्व च्छोभालेशएवविद्यतेत्वादृशःसुन्दरःकोपिनास्तीतिभावः । जीवेद्वापिशि लोञ्छेनेतिस्मृत्याशिलोञ्छवृत्तिजीवनेतिप्रशस्तत्वोक्तेः ॥ ४२ ॥

आदेहदाहंकुसुमायुधस्य विधायसौन्दर्यकथादरी
द्रम् । त्वदङ्गशिल्पात्पुनरीश्वरेण चिरेणजानेजग
दन्वकंपि ॥ ४३ ॥

आदेहदाहमिति । कुसुमायुधस्यकामस्यआदेहदाहंशरीरदाहमारभ्य सकलंजगत्सौन्दर्यकथयादरिद्रंविहीनंविधायेदानींत्वदङ्गस्यशिल्पान्निर्मा णाद्धेतोरीश्वरेणपुनरपिचिरेणचिरकालाज्जगदन्वकंपि कृपयादृष्टमिति जानेऽहमुत्प्रेक्षे कामानन्तरमियन्तंकालंसौन्दर्यवार्तापिनाभूदिदानींतस्या नेतवाभिषेककरणादीश्वरेणजगतःकृपाकृतेत्यर्थः । अन्योपिराजादुःस्थ

दारिद्र्यपीडितानांदयते मदनादप्यधिकोसीतिभावः ॥ ४३ ॥

मह्नीकृतार्थायदिमानवोसि जितंदिवायद्यमरेषुकोपि । कुलंत्वयालङ्कृतमौरगंचे न्नाधोपिकस्योपरिनागलोकः ॥ ४४ ॥

मह्नीति । यदित्वंकोपिमानवःमनुष्योसि । तर्हिमह्नीकृतार्थाकृतकृत्याधन्यात्वयालंकृतत्वादित्यर्थः । अथचकुतःमर्यादोर्थोभिधेयंयस्याःसामह्यतेपूज्यतेमह्नीयतेमह्नीशब्दार्थे यदिअमरेषुदेवेषुमध्ये त्वंकोपिदेवःस्यातर्हि दिवास्वर्गेणजितंसर्वोत्कृष्टेनजातं पूर्वस्मादेवहेतोः दीव्यतिविजिगीषतिइतिद्यौरिति । पूर्वदिवोविजयेच्छयैवाभूदिदानींतज्जितमित्यर्थः । त्वयाऔरगंसर्पसम्बन्धिकुलमलंकृतंतर्ह्यधोपि अधोदेशस्थितोपित्वयाधिष्ठितोनागलोकोपातालकस्योपरिनऊर्ध्वदेशेनअपितुसर्वस्यापिपूर्वएवहेतुः । नगच्छतीत्यगाःअगा नागास्तेषांलोकः इदानीमप्रतिहतप्रसरत्वात्सर्वस्याप्युपरिगन्तुंयोग्यइत्यर्थः । पूर्वोक्तेषुमध्ये कस्त्वंकथयेतिभावः । संज्ञावनयास्याभिलषितत्वाद्देवंविहायप्रथमंमानवोक्तिः ॥ ४४ ॥

सेयंनधत्त्येनुपपत्तिमुच्चै र्नचित्तवृत्तिस्त्वयिचिन्त्यमाने ॥ ममौसभद्रंचुलुकेसमुद्र स्त्वयात्तगाम्भीर्यमहत्त्वमुद्रः ॥ ४५ ॥

सेति । सअगस्त्यः । प्रसृतौअञ्जलौसमुद्रंकथंममौइतिमहतीमनुपपत्तिंपूर्वंयाप्रापसेयंमच्चित्तवृत्तिस्त्वयिचिन्त्यमानेविचार्यमाणेसतितांमहतीमनुपपत्तिमघटनामतामिदानींनधत्ते नधारयति । कुतः यतस्त्वयाआत्तेगृहीतेगांभीर्यमहत्त्वेगम्भीरताविशालतेएवमुद्राचिन्हंयस्यससमुद्रो भद्रंसुखेनअगस्त्यस्यचुलुकेममौ । गाम्भीर्यमहत्त्वस्यत्वयागृहीतत्वात्तस्याञ्जलौविद्यमानत्वेनकाप्यनुपपत्तिः । समुद्रादप्यतिगम्भीरोतिमहांश्चत्वमितिभावः । आत्तेतिआङ्पूर्वस्यदातेरपउपसर्गात्तइतिवा ॥ ४५ ॥

संसारसिन्धावनुबिम्बमत्र जागर्त्तिजानेतववैरसेनिः ॥ बिम्बानुबिम्बौहिविहायधातु र्नजातुदृष्टातिसरूपसृष्टिः ॥ ४६ ॥

संसारेति । अत्रअस्मिन्संसाररूपेजगत्त्रयरूपेसिन्धौसमुद्रे वैरसेनिनंल स्तवअनुबिम्बंप्रतिबिम्बंजागर्सि स्फुरतिइतिजाने । नलएवत्वत्सदृशोना न्यइत्यर्थः । सिन्धुपदंप्रतिबिम्बसंभावनार्थम् । हियस्माद्धातुश्च ब्रह्मणो तिस्वरूपयोरतिसमानसौन्दर्ययोर्वस्तुनोः सृष्टिर्निर्माणंबिम्बानुबिम्बौवि म्बप्रतिबिम्बौविहायत्यक्त्वाजातुकदाचिदपिनदृष्टा । बिम्बस्यसदृशंप्रति बिम्बमेवनान्यदित्यर्थः । अतिसुरूपोनलस्तस्यानुबिम्बस्त्वमित्यर्थः । न लसदृशोसीतिभावः ॥ ४६ ॥

इयत्कृतंकेनमहोजगत्यां महीमहीयःसुकृतंजनेन पादौयमुद्दिश्यतवापिपद्या रजःसुपद्मास्त्रियमारजेते ॥ ४७ ॥

इयदिति । केनजनेनमहीजगत्यांभूलोके इयदनिर्वचनीयंमहीयोतिम हान्तंसुकृतंकृतंअहोआश्चर्यं । महीमहेन्द्रइतिपाठेमहीमहेन्द्रवनलव न्महत्तेजोयस्यइतिसंबुद्धिः । तवातिसर्वाङ्गीतिसुकुमारस्यपादौचरणौय मुद्दिश्यपद्यारजस्सुपद्मजजलजवांभूतंकमलमालासारजेते । आचरयतः । भूलोकेकःपुण्यवानेवंविधोऽयमुद्दिश्यकार्यार्थत्वमपिचरणचारीगच्छसिति कथयेतिभावः । स्वर्गेसुकृतीसञ्जाप्यतेभूलोकेतुविद्यतइत्याश्चर्यम् । सर णिःपद्धतिःपद्यामृत्यमरः । पद्यापदमस्मिन्दृश्यमितियत् ॥ ४७ ॥

ब्रवीतितेकिंकिमियंनजाने सन्देहदोलामवलम्ब्य संवित् ॥ कस्यापिधन्यस्यगृहातिथिस्त्वं मलीक संभावनयाथवालम् ॥ ४८ ॥

ब्रवीतीति । इयंमेसंवित्चेतना सन्देहलक्षणांदोलामवलम्ब्यअधिरुह्यते तुभ्यंकिंकिंब्रवीतीतिनजाने। किंनलएवत्वंसन्योवानामेवोद्दिश्यआगतोन्य श्चेत्याद्यनेकप्रकारःसंशयोऽजवति । सत्यंकिमितिननिश्चिनोमीत्यर्थः । अ थवापूर्वापरितोषे अलीकसंभावनयानामुद्दिश्यागतोसीतिनलोसीतिवम् षासंभावनयालम् सामकार्यायतस्त्वमन्यस्यकस्यापिधन्यस्यलोकोत्तरभाग धेयस्यगृहेअतिथिर्भविष्यसिप्रायेणनतुममएतादृग्भागधेयाभावादितिभा वः । कस्यासीतिपाठेगृहातिथिरसिवदेत्यर्थः ॥ ४८ ॥

प्राप्नैव तावन्मम रूपसृष्टिं निपीय दृष्टिर्जनुषः फलं मे ॥ अपि श्रुतीनामृतमाद्रियेत तयोः प्रसादीकुरुषे गिरं चेत् ॥ ४९ ॥

प्राप्तेति । मेदृष्टिस्तवरूपसृष्टिंरामणीयकातिशयंनिपीयसादरंविलोक्य तावत्प्रथमतःजनुषोजन्मनःफलंसाफल्यप्राप्तैव । परंश्रुतीअपिकर्णावपिअमृतंनाद्रियेताम् । अपितुनेअप्यमृतपानंकुरुताम् । चेद्यदित्वंयोगिरंतयोः श्रुत्योःप्रसादीकुरुषेप्रसन्नोभूत्वाकिमपिवदिष्यसितर्ह्यमृतपानजन्यसुखमनयोर्मेविष्यतीत्यर्थः । सर्वस्यापिप्रश्नोत्तरंप्रयच्छेतिभावः ॥ ४९ ॥

इत्थं मधूत्थं रसमुद्गिरन्ती तदोष्ठबन्धूकधनुर्विसृष्टा ॥ कर्णात्प्रसूनाशुगपञ्चबाणी वाणीमिषेणास्य मनो विवेश ॥ ५० ॥

इत्थमिति । प्रसूनाशुगःकामस्तस्यपंचबाणीवाणीमिषेणकर्णात्कर्णंप्रविश्यअस्यनलस्यमनोविवेशप्रविष्टा । किंभूता । इत्थंपूर्वोक्तप्रकारेणातिस्वादुत्वान्मधूत्थंमाक्षिकोद्भवमस्तोद्भवंवारसमुद्गिरन्तीप्रकटयन्तीपुष्परसमुद्गिरन्ती । तथातस्याओष्ठलक्षणंबन्धूकंतल्लक्षणंकामधनुस्तेनविसृष्टायुगपन्मुक्तानेकामबाणानांयुगपद्वतः प्रवेशोयथाकामव्यथामवतितथातद्वाणीसमाकर्णनमात्रेणतस्याअभूदितिभावः । कर्णादितिल्यप्लोपेपञ्चमी ५०

अमज्जदाकण्ठमसौ सुधासु प्रियप्रियाया वचनं निपीय ॥ द्विषन्मुखेऽपि स्वदते स्तुतिर्या तन्मिष्टतानेष्टमुखे त्वमेया ॥ ५१ ॥

अमज्जदिति । असौनलःप्रियायाःप्रियंमधुरंसानुरागंचस्वीयस्तुतिरूपंवचननिपीयसादरमाकर्ण्य आकण्ठंकण्ठावधि । आमज्जमितिपाठेमज्जापर्यन्तं सुधास्वमृतेष्वमज्जत । सर्वाङ्गीणानन्दमयोऽभूदित्यर्थः । स्वस्तुतिश्रुत्याकथमानन्दयुक्त इत्यतआह । यास्तुतिर्द्विषन्मुखेपिविद्यमानासतीस्वदतेरोचते । तस्याःस्तुतेर्विभूतामधुरताइष्टमुखेतुपुनरमेयानअपरिमितानभवति । अपितु भवत्येव । वैरिसमाश्रयेणअन्यदरुच्यमपिभवतिस्तुतिस्तुरुच्यैवभवति सार्वाप्रियाश्रयाकुच्यतराकथनभवतीत्याशयः । आमज्ज

अनवं तिटष् ॥ ५१ ॥

पौरस्त्यशैलं जनतोपनीतां गृण्हन्नथान्हः पतिर
र्घपूजाम् ॥ तथातिथेयीमथसंप्रतीच्छ न्प्रियार्पि
तामासनमाससाद ॥ ५२ ॥

पौरस्त्येति । अथअन्हःपतिःसूर्योजनतयाजनसमूहेनउपनीतामर्पिता
मर्घलक्षणांपूजांगृह्णन्नङ्गीकुर्वन्यथापुरःभवंपौरस्त्यशैलंउदयाचलंआसाद
यतितथाप्रियार्पितांजैम्याविर्तीर्णामातिथेयीं अतिथिषुसाध्वींपूजांसंप्र
तीच्छन्स्वीकुर्वंस्तथा पुरोभवंपौरस्त्यंनलः अस्याजैम्यावयस्यासनंसख्या
सनंआससादभेजे । स्वस्यदूतत्वाद्भैम्यासर्नत्यक्त्वासख्यासनंभेजेइत्यर्थः ।
पौरस्त्यंभवार्थेदक्षिणापश्चात्पुरसस्त्यक् । आतिथेयींसाध्व्यर्थेपथ्यतिथीतिढ
ञिङीप् ॥ ५२ ॥

अयोधितद्वैर्यमनोभवाभ्यां तामेवभूमीमवलम्ब्य
भैमीम् ॥ आहस्मयत्रस्मरचापमन्त श्छिन्नंभ्रु
वौतज्जयभङ्गवार्त्ता ॥ ५३ ॥

अयोधीति । तद्वैर्यमनोजवाभ्यांतस्यनलस्यधैर्यंकामाभ्यांकर्तृभ्यां तां
भैमीमेवभूमींस्थानमवलंव्याश्रित्यभैमीमेवविषयं कृत्वापरस्परमयोधियुद्ध
मकारि भैमीविषयंधैर्यंकर्तृभैमीविषयमदनजिगीषयायुद्धंचकारमदनश्चधै
र्यंजिगीषयेत्यर्थः । यत्रभैमीलक्षणायांयुद्धभूमावन्तर्मध्येच्छिन्नं भ्रुवौभ्रू रू
पंस्मरचापंकर्तृतयोर्धैर्यकामयोर्यथाक्रमंजयस्यभङ्गस्यपराजयस्यचवार्त्तांक
थांआहस्मकथयतिस्म भैमीरूपायांसङ्ग्रामभूमौपतितंभैमीभ्रूरूपकामचा
पञ्छिन्नं धैर्यस्यविजयंकामस्यपराजयंकथयतिस्मेतिभावः । यस्यधनुर्भङ्ग
स्तस्यपराजयःअन्यस्यचजयइतिलोकप्रसिद्धिः भैम्यासुरूपकमपिकामधैर्यंच
नाजीगणदितिभावः । अत्रवीरसङ्ग्रामत्वंसामुद्रिकोक्तंलक्षणम् ॥ ५३ ॥

अथस्मराज्ञामवधीर्यधैर्या दूचेसतद्रूपगुणर्वाणितो
पि ॥ त्रिवेकधाराशतधौतमन्तः सतांनकामःकलु
षीकरोति ॥ ५४ ॥

अथेति । अथतस्याभैम्यावारूपयावीणयोपवीणितोपिगीतोपिसनलो

धैर्योत्सरागामवधीर्यक्षये । वीक्ष्योपगायनेह्विकासाधीनत्वंयुक्तम् । धैर्यात्सन्नजातमित्यर्थः । धैर्याधिक्यात्कामोव्यवहितोनतुसर्वथाशान्तइति ज्ञातव्यम् । अन्यथारसभङ्गःस्यात् । अर्थान्तरन्यासमाह । काम विवेकधारयाविचारप्रवाहेणशतवारंधौतमुज्ज्वलीकृतंसतामन्तर्मानसंनकलुषीकरोतितस्मादुचितमेतदित्यर्थः । अवधीर्येतिपूर्ववत् ॥ ५४ ॥

हरित्पतीनांसदसःप्रतीहि त्वदर्थमेवातिथिमागतं माम् ॥ वहन्तमन्तर्गुरुणादरेण प्राणानिवस्वःप्रभुवाचिकानि ॥ ५५ ॥

हरिदिति । हेभैमीत्वंनाहरितांदिशांपतयस्तेषांदिक्पालानांसदसःसभातःआगतंत्वदीयमेवअतिथिंप्रतीहिजानीहि । किंभूतमांस्वःप्रभवोदिक्पालास्तेषामिंद्रादीनांवाचिकानिसंदेशवचनानिगुरुणाआदरेणप्राणानिवान्तर्हृदयेवहन्तंधारयन्तं अहंत्वदर्थंदेवैर्दूतःप्रेषितइत्यर्थः । कुतआगतकस्यातिथिरितिप्रश्नस्योत्तरंदत्तम्। गुरुणादरेणत्यनेनदूतधर्मोदर्शितः ५५

विरम्यतांजातवतीसपर्या निविश्यतामासनमुज्झितंकिम् ॥ दूत्यंहियन्नःफलितंविधेयं सैवातिथेयीपृथुरुद्भवित्री ॥ ५६ ॥

विरम्यतामिति । हेभैमित्वयाविरम्यतांनिव्यापारतयास्थीयताम् । यतःसपर्याजातवतीजातानिर्विश्यतांदूतदर्शनमात्रेणआसनंकिमितिउज्झितंपरित्यक्तम् । अतिथिदर्शनेचैतत्कर्तव्यमितिकृतमित्याशङ्क्याह । यानोस्माकंदूत्यलतासाफलिनीफलवतीविधेयाकरणीयासैवपृथुर्महतीआतिथेयीअतिथिपूजाचतदुच्चैस्तरांभवित्रीभविष्यती आसनादिपरित्यागस्तूपचारएवसनकार्यः किंतुयदर्थमागतोस्मितत्सफलयेत्यर्थः । फलितेत्यपिपाठः फलिनीफलवद्भ्यामिनच्स्वार्थे ॥ ५६ ॥

कल्याणिकल्पासितवाङ्कुकानि कच्चिन्नमांचिन्नमनाविलंते ॥ अलंविलम्बेनगिरंमदीयां माकर्णयाकर्णतटायताक्षि ॥ ५७ ॥

कल्याणीति हेकल्याणिशोभनरूपे तवाङ्गकानिकोमलान्यङ्गानिकल्पानि

समर्थोऽसि नीरोगाश्चि कच्चित्तमामतिशयेन नीरोगाश्चि किं कथयेत्यर्थः । तेषि समनाविलं कालुष्यरहितं कच्चिन्मनो विद्यते । विलम्बेनालं एतावानेव कुशलप्रश्नोऽस्तु अन्यत्प्रष्टुमयुक्तम् ॥ प्रकृतकार्यविरोधात् । प्रकृतमेवाह । हे आकर्णतटायताक्षि । आकर्णपूर्णनयने भैमी । त्वं मदीयां वक्ष्यमाणां गिरमाकर्णय । निरामयः कल्य इत्यमरः । कच्चित्समां किमेमि सिद्धव्यसेत्याम् ॥५७॥

कौमारमारभ्य गणा गुणानां हरन्ति ते भैमि दिशामधीशान् ॥ सुराधिराजं सलिलाधिपं च हुताशनं चार्यमनन्दनं च ॥ ५८ ॥

श्लोकत्रयेण चतुर्णामपि साधारण्येन दूत्यं करोति । हे भैमी । कौमारं बाल्यारभ्यभृति ते गुणानां गणाः सौन्दर्यसुशीलत्वादयः दिक्षु धृतमाधिपत्यं यैस्तान्देवेन्द्रान्हरन्ति । तानेवाह । सुराधिराजमिन्द्रं सलिलाधिपं वरुणं च हुताशनमग्निं अर्यम्णः सूर्यस्य नन्दनं पुत्रं धर्मराजं च त्वद्गुणाकर्णनामात्रादारोपितानुरक्तास्त्वयीत्यर्थः ॥ ५८ ॥

चरच्चिरं शैशवयौवनीयद्वैराज्यभाजि त्वयि खिद्यते त्र ॥ तेषां रुचश्चोरतरेण चित्तं पञ्चेषुणा लुण्ठितधैर्यवित्तम् ॥ ५९ ॥

चरदिति । शैशवं यौवनं तत्संबन्धि शैशवयौवनीयं द्वैराज्यं भजति तस्यां वयःसंधौवर्तमानायां त्वयि चिरं चरत् तव शैशवमारभ्य वर्तमानं सक्तं तेषां चित्तं खेदं दुःखमेति प्राप्नोति । किंभूतं चित्तं पञ्चेषुणा कामेन लुण्ठितं धैर्यमेव वित्तं यस्य । किंभूतेन कामेन अतिपीडितत्वाद्रुचः शरीरकान्तेः चोरतरेण विरहातुरस्य कान्तिर्हीना भवति । त्वयि आसक्तत्वाच्चौर्योपगमत्वाद्विरहपीडायाश्च असह्यत्वम् । अन्योऽपि राजद्वयमध्ये सीमायां चरति चतुरे केनचिदपहृतधनो दुःखमाप्नोति । द्वैराज्येति दृष्टचिभाव्यम् ॥ ५९ ॥

तेषामिदानीं किल केवलं सा हृदन्वदाशाविलसत्यजस्रम् ॥ आसाद्य पाश्चास्तु तनूरुदाराः पूर्वादयः पूर्ववदात्मदाराः ॥ ६० ॥

तेषामिति । किल निश्चयेन इदानीं त्वत्तारुण्यदशासमये साऽस्विद्दाशा अपरा

स्मिन्दशा तेषांवृद्धिरेवलंलिपि तंकामकंसर्वदाविलसतिस्फुरति यदारामह सी सुंदरीथतनू शरीराणिधृत्वाआत्मदारा स्वीयाःस्त्रियःपूर्वोदयः आशा दिशस्तु पुनःपूर्वं नस्फुरन्ति । प्राच्यादीनांशरीरमपिविद्यते । त्वय्येवा सक्तत्व त्सुन्दरीरपिदिशोयथापूर्वंपालितवन्तस्तथेदानींनेति । एकयात्व दाशयान्येषोप्याशाःपरित्यक्ताइतिभावः । अन्योपिनवीनायांकस्यांचि दनुरक्तःसन्जीर्णांशरीरांप्रथमांस्त्रियंत्यजति ॥ ६० ॥

अनेनसार्द्धंतवयौवनेन कोटिंपरामक्लिदुरोध्यरो
हन् ॥ प्रेमापितस्मिन्स्त्वयिवासवस्य गुणोपिचापे
सुमनःशरस्य ॥ ६१ ॥

तावान्यत सर्वेषांदूत्यंकृत्वाइदानींमुख्यत्वःस्पूर्वमिन्द्रंस्तौति । अनेने ति । हेभैमित्वयिमद्विषयंअक्लिदुरोऽतिदृढःअर्थानामिन्द्रःवासव स्यप्रेमाऽनुरागोपिअनेनप्रत्यक्षदृश्येनतवयौवनेनसाकंसह परांकोटिंपर मांकक्षांअध्यारोहत्प्राप । तथातवयौवनमु कर्षंप्राप्तंयथात्वयिमदनुरागो पीत्यर्थः । यदाप्रभृतितवयौवनप्रादुर्भाव तदाप्रभृतित्वयीन्द्रानुरागइत्य र्थः । नकेवलंइन्द्रप्रेम्णैवकिंतुसुमन शरस्यकामस्याक्लिदुरोगुणोपिमौर्व्यपि चापेधनुषिपरांद्वितीयांकोटिमटनिमारूढः । त्वद्यौवनमारभ्यइन्द्रंप्रहर्त्तुं मिच्छन्चापेगुणःसमारोपीत्यर्थः । तदाप्रभृतिअनेनइन्द्रःपीड्यतइ तिभावः ॥ ६१ ॥

प्राचीप्रयातेविरहादयंते तापाज्ज्वरूपान्त्रपयावृत्ता
कृशी ॥ परापराधैर्निदधाति भानौ रुषारुणंलोच
नवृन्दमिन्द्रः ॥ ६२ ॥

प्राचीमिति । अयमिन्द्रःपरापराधैःचन्द्रापराधैर्लोचनवृन्दंनेत्रसमूहंरु षाक्रोधनारुणंप्राचींप्रयातेउदितमात्रेभानौनिदधातिनिक्षिपति । किंभूतः तेविरहाद्धेतोःतापात्संतापजनकत्वात्रूपाच्चरक्तवर्तुलस्वरूपःसूर्येन्दोःभाना वेवशशशाङ्कीकृतचन्द्रशङ्कःसन् । रूक्षाचन्द्रकार्यकारित्वात्प्रमापका रक चन्द्रएवायमितिबुद्ध्या चन्द्रापराधस्मरणात्क्रुद्धिशिवसंतानंसूर्यंक्रोध रक्तैर्लोचनैः पश्यतीत्यर्थः । अन्यापराधेनअन्यस्मिन्रोषइत्यायर्थंच । च

ऽऽरस्त्वद्विरहात् पीडयतीतिभावः । विरहद्यदूद्वतिचपाहः । तेविरहद
घादितीन्द्रविशेषणम् ॥ ६२ ॥

त्रिनेत्रमात्रेणरुषाकृतंयत्तदेवयोद्यापिनसंवृणोति
नवेद्मिरुष्टेद्यसहस्रनेत्रे गन्तासकामःखलुकामवस्थाम् ॥ ६३ ॥

त्रिनेत्रेति । त्रिनेत्रएवत्रिनेत्रमात्रंतेननेत्रत्रयसहितेनहरेणैवरुषाक्रोधे
नकृत्वायदशरीरस्वरूपंदुःखंकृतं यःकामस्तदेवात्यल्पंदुःखमद्यापिएतावद्दि
नपर्यन्तंनसंवृणोतिनिश्चितंविस्तरति सकामःअद्यईश्वरादधिकनेत्रसहिते
सहस्रनेत्रेणइन्द्रेक्रुद्धेसतिकतमामवस्थांदशांगन्तागमिष्यतिइत्यहनवेद्म
जाने । नेत्रत्रयसहितेनहरेणात्रसत्कृतः । सहस्रनेत्रसहितेनेन्द्रेणाकी
दृशीमवस्थांनेष्यसइत्यहनजानेइत्यर्थः । कामस्त्वंअतितरांपीडयसीतिभा
वः मात्रंकात्स्न्येवधारणेइतिविश्वः । वेदविद्मोलटोवेतिणल् ॥ ६३ ॥

पिकस्यवाङ्मात्रकृतव्यलीका त्सप्रभुर्नन्दतिनन्दनेपि ॥ बालस्यचूडाशशिनोपराधा त्साराधनंशीलतिशूलिनोपि ॥ ६४ ॥

इदानींविभावानुभावव्यभिचारिभावानाह ॥ पिकस्येति । सःप्रभुःसम
र्थःइन्द्रः पिकस्यकोकिलस्यवागेववाङ्मात्रंतेनकृताद्व्यलीकादप्रिय
हेतोःनन्दनेपिवनेपिननन्दतिनआनन्दंप्राप्नोति नन्दयतीतिनन्दनस्तस्मि
न्यदनन्दनंतदाश्चर्यमित्यर्थः । अन्योपिप्रभुर्वाङ्मात्रकृताद्विप्रियाद्विधुर
ाज्ञाद्देलोनेनन्दति । तथाबालस्यएककलस्यचूडाशशिनःशिरश्चन्द्रस्यअ
पराधात्कृतात्पीडनाद्धेतोः शूलिनोऽपिसेवनीयस्यहरस्यापिआराधनंसेव
नशीलति । नकरोति । पूर्वमत्यहर्ईश्वरसेवायैगच्छति । इदानींतुत्वद्वि
रहाच्चंद्रपीडाभयाद्धरसेवापिपरित्यक्तेत्यर्थः । अन्योपितेजस्वीस्ववैरिपुर
स्कारिणःशक्तपाशेरपिसेवांनकरोति । त्वद्विरहाच्चन्द्रकलाकोकिलालापा
वतितरांतस्यअसह्यौजाताविितिभावः । शीलतिशीलसमाधावितिभ्वा
दिः दुःखदैन्यादयोव्यभिचारिभावाःस्वयमूह्याः ॥ ६४ ॥

तमोमयीकृत्यदिशःपरागैःस्मरेषवःशक्रदृशांदिश

न्ति ॥ कुहूंगिरश्चञ्चुपुटाद्द्विजस्य राकारजन्याम
पि सत्यवाचम् ॥ ६५ ॥

तमइति । स्मरेवदःपुष्परूपत्वात्परागैःकृत्वा दिशःतमोमयीकृत्य अचका
रबहुलाःकृत्वाशकस्य शाने त्रागां कुहूरितिस्वभावत एवगीर्यस्य कुहूगिरो
द्विजस्यकोकिलस्य चञ्चुपुट राकारजन्यामपिपूर्णिमारात्रावपि सत्यावा
चस्यै तादृशदिशन्तिकथयन्ति पूर्णचन्द्रंपूर्णिमायामपिनष्टचन्द्रंकुहूरमावा
स्येयमितिकथयल्पिकचञ्चूपुटमिन्द्रं प्रतिसत्यवचनंजातमित्यर्थः स्वह्विर
हादिन्द्रोपिमदनान्धोजातइतिभावः । अन्योपिवाह्मणःकमप्यन्धंप्रतिपू
र्णिमाममावास्यांवदतिसोपिमूर्खत्वात्तद्वाक्यमत्यप्रतिसत्याकथयति । पूर्णे
राकानिशाकरइत्यमरः । कुहूस्यात्कोकिलालापनष्टेन्दुकलयोरपिइतिवि
श्वः । पुटशब्दःपुल्लिंगेपि । वाचाशब्दष्टावन्तोपिवा ॥ ६५ ॥

शरैःप्रसूनैस्तुदतःस्मरस्य स्मर्तुःकिनाशनिनाक
रोति ॥ अभेद्यमस्याहृदयमनेस्या दनङ्गताचेद्गि
रिशप्रसादः ॥ ६६ ॥

शरैरिति । सइन्द्रः प्रसूनैःपुष्परूपैःशरैस्तुदतःस्मरस्यस्मर्तुं कान्तंस्मृति
विषयंकर्तुं अशनिनावज्रेणकिनकरोति । अपितुवज्रेणमारयेदेवअहृदय
दे । यदिअसक मस्यगिरीशस्यहरस्यप्रसादःअनङ्गताऽरूपमजेद्यवर्मकवच
मस्मात् । हरेणअनङ्गताऽरूपोमित्रहोपिअनुग्रहएव कृतोयतस्तस्माद्धृदयम
श्यत्वाद्वज्रेणमारयितुंनशक्यतइत्यर्थः । कामस्तस्यातथापराध्यपियथाशा
स्त्यार्हीभवतिइतिभावः । अस्यअघोगर्धेतिकर्मणिषष्ठी ॥ ६६ ॥

धृताधृतेस्तस्यभवद्वियोगा दन्यान्यशय्यारचना
यलूनैः ॥ अप्यन्यदारिद्र्यहराःप्रवालै र्भूतादरिद्रा
स्तरवःसुराणाम् ॥ ६७ ॥

धृतेति । अमराणांदेवानान्तरवोमन्दाराद्योऽन्येषांदारिद्र्यहरादारिद्र्यना
शकाअपि प्रवालैः पल्लवैः दरिद्राजाताः किंभूतैः प्रवालैःभवद्वियोगात्स्वद्विर
हाद्धेतोः धृताअधृतिरधैर्ययेनतस्येन्द्रस्यालितमस्यअन्याअन्याः प्रतिक्षणनू
तनाःशय्यास्तासांरचनायनिर्माणायलूनैरवचितैः पल्लवरहिताजाताइत्य

अदाहि यस्तेन दशार्द्धबाणः पुरा पुरारेर्नयनालयेन
स निर्दहंस्त्वां भवदक्षिवासी नवैरशुद्धैरघुनाधमर्णः ॥ ७३ ॥

अदाहीति । पुरारेर्हरस्य नयनमेवालयो यस्य वह्नेस्तेन वह्निना पुरा पूर्वमनङ्गो नाम अङ्गेषु कामो वसतीति कृत्वा यो दशार्द्धबाणः पञ्चबाणः अदाहि दग्धः स पञ्चबाणः कटाक्षविक्षेपमात्रजन्यत्वाद्भवत्या अक्षिवासी सन् त्वं वह्निमधुना इदानीं निर्दहन् अतितरां पीडयन् वैरशुद्धैर्वैरनिर्यातनसाधनर्णो न लग्नको न भवति । अन्यनयनालयस्य अग्नेर्दाहकस्य अन्यनयनालयेनैवात्मनैव दाहाद्वैरलक्षणाङ्गवाते नापकृतमित्यर्थः । पुरुषाश्रितस्य वह्नेः स्त्रीतोऽकिंचित्करत्वमङ्गनामानमङ्गेषु कामो वसतीति कृत्वा स्त्र्याश्रितस्य कामस्य महाप्रभुत्वं सूचितम् । पूर्वोक्त एव भावः ॥ ७३ ॥

सोमाय कुप्यन्निव विप्रयुक्तः स सोममाचामति हूयमानम् ॥ नामापि जागर्त्ति हि यत्र शत्रोस्तेजस्विनस्ते कतमे सहन्ते ॥ ७४ ॥

सोमायेति । विप्रयुक्त वियोगी स वह्निः सोमाय चन्द्राय कुप्यन्निव क्रुध्यन्निव हूयमानं दीयमानं सोमाख्यं लताविशेषरसं आचामति पिबति । ननु चन्द्रापराधे सोमलतां किमिति भक्षितवानित्याशङ्क्य अर्थान्तरन्यासेन अपनुदति । हि यस्मात् यत्र यस्मिन् शत्रोर्नामापि जागर्त्ति कतमे के ते तेजस्विनः तं जनं सहन्ते सोढुं शक्नुवन्ति ॥ अपि तु न कोऽपीत्यर्थः । स्ववैरिचन्द्रस्य सोमनाम्न्यां लतायां सत्त्वात् स तेजस्विना अग्निना आमानं भक्षितेति युक्तमेव चन्द्रस्तं पीडयतीति भावः । सोमाय क्रुधद्रुहेति चतुर्थी ॥ ७४ ॥

शरैरजस्रं कुसुमायुधस्य कदर्थ्यमानस्तरुणीत्वदर्थम् अभ्यर्चयद्भिर्विनिवेद्यमाना दप्येप देव कुसुमाद्बिभेति ॥ ७५ ॥

शरैरिति । हे तरुणि त्वदर्थे त्वत्कृते कुसुमायुधस्य कामस्य शरैरजस्रं निरन्तरं कदर्थ्यमानः पीड्यमानः सन् एष वह्निः अभ्यर्चयद्भिः पूजकैर्मानवैः पूजार्थमेव विनिवेद्यमानादेकस्मादपि कुसुमाद्बिभेति । मदनशरबुद्ध्या त्रस्यतीत्यर्थः । इमन्ये एवदेवइत्यपिपाठः । मदनेन वह्निः पीड्यत इति भावः ॥ ७५ ॥

त्यं वंविधोपिहृदिस्थःस्मरणगोचरोयथमध्ये विद्यमानोनिजःस्वीयः पति र्वरुणः संप्रतित्वद्विषयविरहदशायांयथायेनप्रकारेणपयोनिधीनांतापाय भवतितथातेनप्रकारेणक्षुधितोबुभुक्षितोमध्ये विद्यमानःप्रज्ज्वलितस्वार्द्धवा रिपिबतिवारिपःएवंभूतोपिअम्बामुखोत्थोवडवामुखोत्थः शिखावानग्निः पयोनिधीनांसन्तापायनाभूत् । वारिपत्वे हृदिस्थत्वे तुल्येपिकामस्याहृदुः स्थत्वाभावाद्दृथानतापकारित्वमित्यर्थः । कामज्वरपीडितजलप्रविष्ट कणसंस्पर्शात्पयोनिधयोपिसन्तप्ताः बभूवुरित्यतोहेतोर्वरुणोतितरांकामेन पीडितइतिभावः । वडवानलादपिविरहानलोधिकइतिभावः । अन्योपि साधुर्दोसाक्षामिनंपीडितंसम्यक्सन्तप्यते ।.क्षुधितोवसतिक्षुधीरिद् ॥ ८१

यत्प्रस्तुतत्वन्मृदुबाहुवल्लि स्मृतिस्त्रजंगुम्फतिदुर्वि नीता ॥ ततोविधत्तेऽधिकमेवतापं तेनाश्रिताशी स्यगुणामृणाली ॥ ८२ ॥

यदिति । शैत्यमेवगुणोयस्याःसा तेनवरुणेनशरीरोपरिस्थितानितिना मृणालीयद्यस्मात्त्वन्मृदुबाहुवल्लिस्तस्याः स्मृतिस्त्रजंस्मरणपरम्परांगुम्फति करोतिसादृश्यात् । ततस्तस्माद्वैपरीत्येनपूर्वापेक्षयापि अधिकन्तापंवि धत्तेकरोति । अतएवदुर्विनीतादुष्टा । सन्तापशान्त्यर्थंश्रितस्यशीतल स्याधिकसन्तापकारित्वमेववैपरीत्यम् । सादृश्यत्वाद्बाहुवल्ल्याःस्मारकत्वा न्मृणालीतमतितरांतापयतीतिभावः ।। अन्योपिदुर्विनीतोयदर्थंमाश्रयते तद्विरुद्धमेवकरोति ॥ ८२ ॥

न्यस्तंततस्तेनमृणालदण्डखण्डं बभासेहृदितापभाजि ॥ तच्चित्रमग्नैर्मदनस्यवाणैः कृतंशतच्छि द्रमिवव्रणेन ॥ ८३ ॥

न्यस्तमिति । सकलमृणाली यतस्तापकरीतितत: सकलमृणालीत्यागा नन्तरंतापभाजिहृदितेनन्यस्तंमृणालदण्डखण्डंसरसवर्णस्यचित्तेमग्नैर्मद नस्यवाणैःव्रणेनशतच्छिद्रंबहुरन्ध्रं कृतमिवबभासेशुशुभे । मग्नंमृणालंस्व तएवशतच्छिद्रं भवति । तस्यशतच्छिद्रत्वमन्यथोत्प्रेक्षितम् । कामवाणै स्तदीयंहृदयंजर्जरीकृतमितिभावः ॥ ८३ ॥

इतित्रिलोकीतिलकेषुतेषु मनोभुवोविक्रमकाम
चारः ॥ अमोघमत्त्रंभवतीमवाप्य मदान्धतानर्ग
लचापलस्य ॥ ८४ ॥

इतीति । त्रिलोक्यास्तिलकेष्वलङ्कारभूतेष्विन्द्रादिषुविषयेभवतींत्वामे
वअमोघंयथार्थंसफलमस्त्रमवाप्यमदान्धतयागर्वान्धत्वेनानर्गलंउच्छृङ्खलंचा
पलं यस्यमनोभुवःकामस्येतिपूर्वोक्तप्रकारेणविक्रमः कामचारः स्वेच्छाचा
रीवत्तं तेइतिशेषः । कामेनत्वन्निमित्तमिन्द्रादयोऽतितरांपीड्यन्ते । मदा
न्धतेत्यनेनकामस्यद्विरदत्वंसूचितम् । अवाप्यस्थितस्येतियोज्यम् ॥ ८४ ॥

सारोत्थधारेवसुधारसस्य स्वयंवरःश्वोभावितातवे
ति ॥ सन्तर्पयन्तीदमयन्तितेषां श्रुतिःश्रुतीर्नाक
जुषामपासीत् ॥ ८५ ॥

सारेति । हेदमयन्ति तवस्वयम्वरःश्वोभाविनिदिवसेभवितेतिश्रुतिर्वा
र्तातेषांनाकजुषांदेवानांश्रुतीकर्णौ अयासीत्प्रापत् । किंभूतासुधारस
स्यामृतरसस्यसारोत्थधारेवश्रेष्ठभागोत्थितप्रवाहइव सन्तर्पयन्तीतानेवह
र्षयन्ती । स्वयम्वरंश्रुत्वाऽतीवहृष्टाइतिभावः ॥ ८५ ॥

समंसपत्नीभवदुःखतीक्ष्णैः स्वदारनासापथिकैर्म
रुद्भिः ॥ अनङ्गशौर्यानलतापदुःस्थे रथप्रतस्थेहरि
तांमरुद्भिः ॥ ८६ ॥

सममिति । अथस्वयंवरवार्ताश्रवणानन्तरंहरितांदिशांमरुद्भिःस्वामि
भिरिन्द्रादिभिस्तेषांदाराःस्त्रियस्तेषांनासापथिकैर्नासिकामार्गस्थैर्मरुद्भिर्नि
श्वसितानिलैःसमंसहप्रतस्थेप्रस्थितम् । किम्भूतैर्नासावायुभिःसपत्नीभये
नसपत्नीहेतुकेनदुःखेनतीक्ष्णैरत्युष्णैः । किंभूतैर्देवैरनङ्गशौर्यमेवानलोऽग्नि
स्तज्जनितस्तापस्तेनदुःस्थैर्जर्जरीभूतैः । स्वहरणायप्रस्थितान्स्वःपतीन्दृष्ट्वा
दुःखान्नासावायवोऽनुक्ताइतिभावः । अन्योऽपिपान्थःपान्थैःसहप्रस्थानंक
रोति पथइवायुभिःसार्द्धमित्यनेनाशकुनत्वंसूचितम् ॥ ८६ ॥

अपास्तपाथेयसुधोपभोगै स्त्वत्तुम्विनैवस्वमनो

रथेन ॥ क्षुधंचनिर्वासयतातृषंच स्वादीयसाध्वा गमितःसुखन्तैः ॥ ८७ ॥

अपास्तेति । तैरिन्द्रादिभिरत्वत्कुम्भिनास्वत्सम्बन्धिना मनोरथेनभैर्मी प्राप्स्यामइतिस्वीयेनाभिलाषेणैवकृत्वाअध्वामार्गः सुखमनायासेनगमितोऽतिवाहितः । किम्भूतेनस्वमनोरथेन । स्वादीयसाऽतिस्वादुना अतएवक्षुधंतृषाञ्चनिर्वापयताशमयता । किंभूतैस्तैरतएवापास्तस्त्यक्तःपाथेयःमार्गशम्बलरूपःसुधोपभोगोऽमृतोपभोगोयैस्तैः त्वयिनिविष्टचित्तत्वात्क्षुधांतृषांचनाभूदतएवमार्गशम्बलरूपमपित्यक्तंततोप्यधिकालवमाप्ताइत्यर्थः । भुवंप्रत्यागमनेमनोलक्षणेनरथेनभुवमागताः सुधोपभोगैरितिपाठेउपभोगःसाफल्यमपास्तंयैः। पाथेयंसाध्वर्थेपथ्यतिथीतिढञ् ८७

प्रियामनोभूःशरदावदाहे देवीस्त्वदर्थेविनमज्जयद्भिः ॥ सुरेषुराजैःक्रियतेऽधुनातैः पादार्पणानुग्रहभूरियंभूः ॥ ८८ ॥

प्रियाइति । सुरेषुराजैःश्रेष्ठैरिन्द्रादिभिरधुनाइयंभूर्भूमिः पादानामर्पणंदेवानुग्रहःकृपातस्यभूःस्थानंक्रियते । किंभूतैःप्रियाःस्वकियःइन्द्राणीप्रमुखादेवीस्त्वदर्थेनत्वत्कारणेनमनोभूशराःकामबाणास्तएवदावः वनवन्हिस्तज्जनितदाहेसन्तापेनिमज्जयद्भिः । कामपीडिताःकुर्वद्भिरित्यर्थः इदानींभूमौवर्त्तन्तइत्यर्थः । तेषामत्रागमनाद्देवीनांविरहसन्तापः ॥८८ ॥

अलङ्कृतासन्नमहीविभागै रयञ्जनस्तैरमरैर्भवत्याम् ॥ श्रावापितोजङ्गमलेख्यलक्ष्मीं निक्षिप्यसन्देशमयाक्षराणि ॥ ८९ ॥

अलमिति । तैरमरैर्भवत्यांत्वयिविषयेऽयंमल्लक्षणोजनः सन्देशमयाक्षराणिनिक्षिप्यजङ्गमलेखलक्ष्मींचलत्पत्रिकाशोभामवापितः प्रापितः । किंभूतैरलंकृतः आसन्नोमहीविभागोयैःसमीपस्थितैस्तैस्त्वांप्रार्थयितुमहम्प्रापितइत्यर्थः । भवत्यैइतिवापाठः ॥ ८९ ॥

एकैकमेतेपरिरभ्यपीन स्तनोपपीडंत्वयिसंदिशन्ति ॥ त्वंमूर्छतांनःस्मरभल्लशल्ये मुदेविशल्यौष

धिवल्लिरेधि ॥ १० ॥

एकैकमिति । हेभैमि एते देवा एकैकं पृथक् पृथक् पीनस्तनयोरुपपीड्य संस्लिष्य सद्यस्तथा त्वत्पीनस्तनाभ्यामात्मानमुपपीड्य त्वय्यिति संदिशन्ति इति किम् । हेभैमि त्वं स्मरमन्त्रशल्यैः कामसम्बन्धिपार्थिकनाराचैः कृत्वा मूर्च्छितानो ऽस्माकं नु दे प्रीतये शल्योद्धरणाद् मूर्च्छापहाराय विशल्यानाम्नी औषधिवल्लिरेधि भव । त्वां विना अस्माकं कामन मूर्च्छा न शाम्यतीत्यस्मान्वृणीष्वेति भावः । एकैकं वीप्सायां द्विः स्तनोपपीडं सप्तम्यां चोपपीडेति णमुल् तृतीयाप्रभृतीनीति समासः ॥ १० ॥

त्वत्कान्तिमस्माभिरयं पिपासु र्मनोरथास्वासनयैकयैव ॥ निजः कटाक्षः खलु विप्रलभ्यः कियन्ति यावद्दिनवासराणि ॥ ११ ॥

त्वदिति ॥ अस्माभिस्त्वत्कान्तिं त्वत्सौन्दर्यं पिपासुः पातुमिच्छुरयं निजः स्वीयः कटाक्षः । एकानुस्यया भैमीकान्तिं त्वासनवश्यं वयं पाययिष्याम इत्यत्येवंरूपया मनोरथाश्वासनया मनोराज्यजन्यया आश्वासनया एवसांत्वनेनैवकत्वा कियन्ति वासराणि यावत् कियद्दिनपर्यन्तं विप्रलभ्यो ऽस्माभिः प्रतारणीयः खलु निश्चितं भवाकथय । पातुमिच्छन् पिपासुर्बालकादिरिदमुदकमिति मुहूर्तमात्रं प्रतारयंसहते न तु द्वित्राणि दिनानि तथा कटाक्षोपि । अस्मान्वृणीष्वेति भावः । यावदीयावच्छब्दः । वासराणि अत्यन्तसंयोगे द्वितीया ॥ ११ ॥

निजेसृजास्मासु भुजेभजन्त्या वादित्यवर्गे परिवेषवेषम् ॥ कुरुष्वाङ्गिनिर्वापय तापमङ्गै रनङ्गलीलालहरीतुषारैः ॥ १२ ॥

निजेइति । हेभैमि त्वं निजे स्वीये आदित्यवर्गे आदित्यपत्यसमूहेस्मासु परिवेषस्य वेष्टनस्य वेषमाकारं भजन्त्यौ भुजौ कुरु । अङ्कपालीं देहीतिभावः । आदित्ये च परिवेषः परिधियुक्तः तथा अनङ्गलीलैर्वलहर्यस्ताभिस्तुषारैः शीतलैरङ्गैः कृत्वा अस्माकं तप्तं कामज्वरं निर्वापय शमय प्रसीद प्रसन्ना ऽभव सकामस्त्वदङ्गसम्पर्कादस्माकं कामज्वरः शान्तिं प्राप्स्यतीतिभावः । शीतलेन तापशान्तिर्युक्ता । चार्वङ्गि निर्वापयेति वा पाठः । अनुग्रहो ऽस्मासु यदि

स्वदीयस्तद्वैहिदेहिद्रुतमङ्कपालीतिपाठःक्वचित्स्पष्टार्थः । भुजाग्रव्द्भा वन्तोपि । परिवेषोरवेःपार्श्वमण्डलेवेष्टनेतयेत्यजपालः ॥ ९२ ॥

दयस्वकिंघातयसित्वमस्मा ननङ्गचण्डालशरैरदृश्यैः ॥ त्रिन्नावरंतीक्ष्णकटाक्षबाणैः प्रेमस्तवप्रेमरसत्पवित्रैः ॥ ९३ ॥

दयस्वेति । हेप्रेमिदयस्वत्वंदयाकुरु । अदृश्यैराकस्मिकलग्नैरनङ्गएव चण्डालस्तस्यशरैः प्रयोज्यैः प्रयोजिकात्वं अस्मानिंकिमितिघातयसिमारय सिअपित्वेवंत्वयानकार्यम् अन्योपिस्ववैरिणंचण्डालेनादृश्यैर्बाणैर्मारय ति तर्हिकिंकार्यमित्यतआह । वयप्रेमरसात्प्रीतिरूपाद्रसात्पवित्रैःपूर्णैः पूतैश्च तवतीक्ष्णकटाक्षलक्षणैर्बाणैर्भिन्नाविदीर्णाः सन्तोयत्प्रेमःस्त्रियामहे प्राणांस्त्यजामस्तन्ममनागवरंश्रेष्ठंचण्डालबाणकर्तृकमरणापेक्षयातवपवि त्र कटाक्षबाणैर्मरणंश्रेष्ठमित्यर्थः । कटाक्षैरस्मानाह्लादयपूर्णैर्वेतिभावः । रसादुदकात्पवित्रत्वंयुक्तम् । प्रेमःप्रपूर्वाद्रिणोमरणावस्थिमोलङुत्तमबहुव चनम् ॥ ९३ ॥

त्वदर्थिनःसन्तुपरःसहस्राः प्राणस्तुनस्त्वच्चरणप्रसादः विशङ्कसेकैतववर्त्तितंचे दन्तःस्मरःपंचशरःप्रमाणम् ॥ ९४ ॥

त्वदर्थिनइति। परःसहस्राःबहवःत्वदर्थिनस्त्वदभिलाषुकाःसन्तुनोस्मा कंप्राणास्तुपुनस्त्वच्चरणयोःप्रसादस्त्वच्चरणौचेत्प्रसन्नौभवतस्तर्ह्येवनःप्राणा नंनान्यथेत्यर्थः । इदंकैतववर्त्तितंअलीकभाषितमितिचेद्विशङ्कसेमन्यसेत र्ह्यन्तश्शरीरान्तवर्तीपञ्चशरःकामःप्रमाणमत्रसाक्षी त्वन्निमित्तमस्माकंक्रिय तीपीडाजवतीतिकामएवत्वयापृच्छ्यतांवयमत्रमिथ्याभाषिणइत्यर्थः। का मोन्तर्वर्तित्वात्सर्ववेदिकूटसाक्ष्यं नकरोतीत्यर्थः अतोवयमेवानुग्रहस्थाना न्येइतिभावः । परःसहस्राःपरःशताइतिवत् ॥ ९४ ॥

अस्माकमध्यासितमेतदन्तःप्रियेभवत्याहृदयांत्रिराय ॥ वह्निस्त्वयालङ्क्रियतामिदानी मुरोमुरंद्विषतःप्रियेव ॥ १५ ॥

अस्माकमिति । हेजैमीभवत्याअस्माकंएतत्हृदयंअन्तरदेशेतावत्पुनश्चिरायश्चासितमधिष्ठितंचिरकालचित्तमध्येधृतासीत्यर्थः । परमिदानींतदुरस्त्वयाश्रहिर्देशेपिअलङ्क्रियतांआलिङ्ग्यतामितिभावः । कयाकस्येव । श्रियामुरद्विषतोविष्णोरिवाद्विषःश नुवैतिमुरमित्यत्रद्वितीया ९५

दयोदयश्चेतसिचेत्तवास्तु दलंकुरुष्वांविफलोविलम्बः ॥ क्ष्मामेवदेवालयतांनयामो भूमौरतिश्चेत्तवजन्मभूमौ ॥ ९६ ॥

दयेति । तवचेतसिअस्माकमुपरिदयायाउदयश्चेद्भूतत्तर्हिंत्वंश्वांस्वर्गमलङ्कुरु । विलम्बोविफलोनकर्तव्यइत्यर्थः । अथयदिस्वस्यभूमौतस्यस्थानेजन्मभूमौभूलोकेधृतिंप्रीतिंयासिप्राप्नोषितर्हिवयंभूलोकस्यस्वरादेशंस्वर्गसन्नांआचरामःकुर्मः । यत्रवयंतत्रएवस्वर्गः तत्रैवागत्यस्वर्गभोगास्तत्रैवकुर्मइतिभावः । क्ष्मामेवदेवालयतांनयामोभूमौरतिश्चेत्तवजन्मभूमाविति च पाठः ॥ ९६ ॥

धिनोतिनास्मान्जलजेनपूजा त्वयान्वहंतन्विवितन्यमानां ॥ तवप्रसादोपनतेतुमौलौ पूजास्तुनस्त्वत्पदपङ्कजाभ्याम् ॥ ९७ ॥

धिनोतीति । हेतन्वित्वयाअन्वहंप्रत्यहंजलजेनवितन्यमानाक्रियमाणापूजाअस्मान्नधिनोतिनप्रीणयति । किन्तुतवप्रसादायमौलिकलहेप्रसन्नत्वायनमस्कारकरणवशादुपनतेनम्रेअस्माकंमौलौशिरसित्वत्पदपङ्कजाभ्यांचरणाघातवशात्त्वच्चरणकमलाभ्यांतुपूजास्तु । कमलपूजापेक्षयात्वच्चरणकमलयोस्तत्कृष्टत्वात्सास्माकंसुखायालंनकमलपूजा । त्वच्चरणाघातेनवयंयथासुखिनोभवामस्तथाकुर्वितिभावः ॥ ९७ ॥

स्वर्णैर्वितीर्णैकरवामवाम नेत्रेभवत्याकिमुपासनासु ॥ अङ्गत्वदङ्गानिनिपीतपीत दर्पाणिपाणिः खलुयाचतेनः ॥ ९८ ॥

स्वर्णैरिति । हेवामनेत्रेसुन्दरनेत्रे भवत्यात्वयाउपासनासुपूजासुवितीर्णैःस्वर्णैः अर्पितैःस्वर्णपुष्पैःकिङ्करवामअपितुतानिबहून्यस्माकंविद्यन्तेतैः

किमपिप्रयोजनंनास्ति ॥ तर्हिकिम् । हेअङ्गप्रियेखलुयस्मान्नोऽस्माकंपा णिभिर्पीतःपीतादीनां सुवर्णादीनांपदार्थानांदर्पोगर्वोयैस्तानित्वदङ्गानि याचते । यैःसुवर्णादिजितंतदभिलाषिणःपुरुषस्यसुवर्णेनप्रीतिःकथंस्या दित्यर्थः ॥ ९८ ॥

वयंकलादाइववदुर्विदग्धं त्वद्गौरिमस्पर्द्धि हेमहेम
प्रसूननाराचशरासनेन सहैकवंशप्रभवभ्रुवभ्रु ९९

वयमिति । प्रसूननाराचः कामस्तस्यशरासनेनधनुषासहैकवंशेवेणौकु लेचप्रभवोययोरीदृशेभ्रुवौयस्यास्तत्संबुद्धिःप्रायेणएकवंशोत्पन्नस्तुल्योभ वति । वयंकलादाइवस्वर्णकाराइवतवगौरिम्णासहस्पर्द्धित्वद्गौरत्वस्पर्द्धा स्याभिलाषिअतएवोहमस्पर्द्धयादुर्विदग्धंदुर्विनीतंवस्तुपिङ्गलं हेमसुवर्णं दहेमअग्नौप्रक्षिपामः वस्तुत्वादन्यवर्णत्वंसुवर्णस्यसूचितम् । वयन्त्वदी यास्त्वदपराधकारिणःसुवर्णस्यवन्हिप्रक्षेपरूपंदण्डकुर्मइत्यर्थः । अस्माकं सुवर्णेनप्रयोजनंनास्तीत्यभिप्रायः । कलादोरुक्मकारके । वस्तुःस्यापि कुलेत्रिष्वित्यमरः नैयकुवक्तितिनदीसंज्ञानिषेधाद्स्वार्थेतिह्रस्वोविमानना सुभ्रुकुत इत्यादिमहाकविप्रयोगदर्शनाज्ज्ञातव्यः समाधानान्तरंचग्रंथा न्तराज्ज्ञातव्यम् ॥ ९९ ॥

सुधासरस्सुत्वदनङ्गतापः शान्तोननःकिम्पुनरम्बु
रःसु ॥ निर्वातितुत्वन्ममताक्षरेण सूनाशुगेषोर्म
धुसीकरेण ॥ १०० ॥

सुधेति । नोऽस्माकंत्वन्निमित्तःअनङ्गताप कामज्वरःसुधारसःसुअमृतस रसीषुअपिनिमज्जनेनशान्तःकिम्पुनरपासरःसुउदकसरसीषुच अथवारम्भा दिदेवाङ्गनासुनशान्तः तदपेक्षयात्वमधिकेतिभावः । तर्हिकथंशाम्यती त्याशङ्क्याह ॥ प्रसूनाशुगःकामस्तस्य षुःपुष्पंतस्यमधुसीकररूपेणतवम मतारूपेणाक्षरेणइन्द्रादयोमदीयाइतिस्वस्यस्वामित्वंइन्द्रादीनांस्वीयत्वं सूचयतातुपुनर्निर्वाति । अमृतरसस्यापेक्षयाममताक्षररूपस्यमधुसीकर स्याधिक्यादित्यर्थः । योत्रहुत्भिर्नशान्तःसएकेनशान्तइतिचित्रम् । एवंथा अस्मान्वृणीष्वेतिभावः ॥ १०० ॥

खण्डः किमुत्वद्गिरएवखण्डः किंशर्करातत्पथशर्करेव ॥ कृशाङ्गितद्भङ्गिरसोत्यकच्छ तृणंनुदिक्षु प्रथितंतादिक्षुः ॥ १०१ ॥

खण्डइति । हेकृशाङ्गित्वद्गिरस्त्वद्वाण्याः खण्डएवलेशएवखण्डः शर्करार सविशेषः किमु त्वद्वाणीशकलवाच्यत्वादेवतस्यखण्डत्वंनाममाधुर्यंचजा तमित्युत्प्रेक्षा । तस्याः वाण्याः पन्थाः गमनमार्गस्तस्मिन्शर्कराकर्पराशक पैवशर्कराख्यइक्षुविकारः किंकर्पराशेनामसाम्याच्छर्करेतिनामजातंमाधुर्यं च । पथिशर्कराशाभवन्ति । तस्यावाण्याः भङ्गिः वक्रोक्त्यादिस्वभाव जनितः शृंगारादिरसस्तस्मादुत्पन्नतच्छेषादुदकादुत्पन्नं उत्थितंयत्कच्छतृणं ज लप्रायदेशजंतृणंतदेवदिक्षुइक्षुइतिप्रथितंनु कच्छतृणस्यइक्षुरितिसंज्ञात द्रसस्वन्धात् माधुर्यञ्चजातंकिमित्यर्थः । खण्डादिभ्योपिअधिकत्वात्वा ण्यांमधुरताइतिभावः शर्कराखण्डविकृताकपलाकर्परयोरितिविश्वः १०१

ददामकिन्तेसुधयाधरेण त्वदास्यएवस्वयमास्यतेहि ॥ विधुंविजित्यस्वयमेवभावि भवन्मुखन्तन्मुखभागभोजि ॥ १०२ ॥

तदामेति । हेभैमिवयन्तेतुभ्यंकिंददामअपितुत्वद्दानयोग्यंवस्तुकिमपि नविद्यतइत्यर्थः । अमृतामरत्वयज्ञभागेषुमध्येएकंदेयमित्याशङ्कायामा ह । अधरेणसुधयाओष्ठलक्षणेनत्वदास्यएवस्वयंस्थियस्माद्दास्यतेस्थीयतेऽओ ष्ठेनत्वन्मुखेसुधीभूयएवस्थीयतेयतइतिवा । यतश्चभवन्मुखंत्वदाननंविधुं चन्द्रंविजित्यस्वयमेवतस्यचन्द्रस्यमखभागभोजि । यज्ञभागयाहिभाविभ विष्यतिनतदपिनदेयमित्यर्थः । अमृतभागभोपयोगद्वारोपकर्तुं नशक्नुम इत्यर्थः । सुधाचन्द्राभ्यांसकाशात्त्वदोष्ठमुखमधिकमितिभावः ॥ १०२ ॥

प्रियेवृणुष्वामरभावमस्मदितित्रपाकृद्वचनंनाकिनः ॥ त्वत्पादपद्मेशरणंप्रविश्य स्वयंवयंयेनजिजीविषामः ॥ १०३ ॥

अमरत्वमपिदातुमशक्यमित्याह ॥ प्रियेइति ॥ इतिनोऽस्माकंवचनं अस्माकमेवत्रपाकृल्लज्जावहंकिंमापितुलज्जावहमेव । इतिकिं हेप्रियेत्व

मस्म॑त्सकाशादमरभावमविनाशत्वंवृणुमे ति । येनकारणेनवयंत्वत्पादप द्मेद्वितीयाद्विवचनम् । शरणंप्रविश्यतत्तक्षणमेवरक्षितारंप्राप्यस्वयमात्म नैवजिजीविषामोजीवितुमिच्छामःस्वयंतीर्णोहिपरंतारयतिनत्वतीर्णः । त्वच्चरणसेवयाजीवतामस्माकंतुभ्यममरत्वंदातुकाशक्तिः अतएवपूर्वोक्तंव चनलज्जावहमेवेत्यर्थः । अतएवतवोपकर्तुंनसमर्थोस्तिस्मादस्मान्वृणीष्वे तिभावः ॥ १०३ ॥

नःस्माकमस्मान्मदनापमृत्यो स्त्राणायपीयूषरसायनानि ॥ सुधारसादप्यधिकंप्रयच्छ प्रसीदवेद र्भिनिजाधरंनः ॥ १०४ ॥

नेति ॥ यस्मात्पीयूषरूपाणिरसायनान्यौषधानिअस्मान्मदनलक्षणात्त ज्जनिताद्वाअपमृत्योःसकाशादस्माकंत्राणायनभवन्तितस्मात्प्रसीदअस्मा कमुपरिप्रसन्नाभव । त्वंसुधारसादप्यमधिकममृतरसायनेभ्योप्यतितरांस्वा दुनधिकसामर्थ्यंचनिजस्वीयंरदनच्छदमोष्ठन्तुपुनः पातुंनोस्मभ्यंप्रयच्छ देहि । अनेनमदनापमृत्युःशान्तिंप्राप्स्यतीतिभावः । सान्तःस्यमौषध मम मृत्युशान्त्यर्थंयत्रनप्रभवतितत्रतदपेक्षयाधिकमौषधंदीयतेयेनापमृ त्युःशाम्यतितद्वत्अस्माकं रसोपिनासावितिपाठेयस्माद्रसादित्यर्थः । अ र्थान्वयसदौ । अपमृत्योःभीत्रेत्यत्रापादानत्वम् ॥ १०४ ॥

मुष्टःस्वैश्चापरोधैरपिसहमकरेणात्मभूःकेतुनाभू द्धांनस्त्वत्प्रसादादथमनसिजतांमानसोनन्दनःस न् ॥ भूभ्यांतेतान्विधन्वीभवतुतवसितैर्जैत्रमल्लः स्मितैःस्ता दस्तुत्वन्नेत्रचञ्चच्चटुलशफरयगाधी नमीनध्वजाङ्कः ॥ १०५ ॥

मुष्टइति । यःआत्मभूःकामःस्वैश्चापरोपैःधनुर्बाणैःमकरेणमीनरूपे णकेतुनाध्वजेनापिसहमुष्टोदग्धोभूत् । सकामःअधानन्तरमिदानीमिति यावत् । त्वत्प्रसादात्नोऽस्माकमानसोमनःसंबन्धीनन्दनोहर्षकः अथचम नसःपुत्रःसन्मनसिजत्वंमनसिजायतेअसौमनसिजः तद्भावंधत्तांधारयतु त्वत्सङ्गमवशादानन्दकोमदनोऽस्मिन्ममसिपुनरुत्पद्यतामतएवमनसिज

त्वमपिधारयत्वित्यर्थः । हेतन्विसकामःतेजृम्भ्यांधन्वीभवतु । जृम्भ्यामि तिद्विवचनेनपूर्वापेक्षयाचापद्वयंसूचितम् । तवसितैः श्वेतैस्तीक्ष्णैश्चस्मितैः कृत्वाशेतारएवजैत्राएवंभूताःभल्लाः बाणाश्चस्यामियस्यएवंविधस्तावद्भवतु अत्रापिपूर्वापेक्षयाऽधिकंतीक्ष्णत्वजैत्रत्वमनियतसङ्ख्यत्वंचसूचितम् ॥ तवनेत्रे एवचञ्चलतरमपिअतिशयेनशोभमानंचपलतरंवायच्छफरयुगंतस्या धामोमीनध्वजलक्षणोऽङ्कश्चिन्हंयस्यैवंभूतोस्तु । पूर्वमेकएवध्वजोभूदिदा नींतुद्वौमीनध्वजावितिशफरयुगपदेनसूचितम् । त्वयास्मद्वरस्वीकृतेसतिपू र्वापेक्षयाऽधिकसामर्थ्यःसाङ्गोमदनःपुनरुत्पद्यतेतस्मादस्मान्वृणीष्वे ति भावः । अन्योपिविनष्टोदेवतादिप्रसादात्पुनरुत्पद्यतेऽधिकशक्तिश्चभव ति । मन्दनोहर्षकेसुतहतिविश्वः । धन्वीधन्वीत्यादिः ॥ १०५ ॥

स्वप्नेनप्रापितायाःप्रतिरजनि तव श्रीषु मग्नः कटा
क्षः श्रोत्रे गीतामृताब्धौ त्वगपि ननु तनूमञ्जरीसौ
कुमार्ये ॥ नासाश्वासाधिवासेऽधरमधुनि रसज्ञा ज
रित्रेषु चित्तं तन्नस्तन्वङ्गि कैश्चिन्नकरणहरिणैर्वागु
रालङ्घितासि ॥ १०६ ॥

स्वप्नेनेति । ननुयस्मात्त्वंवुद्धौवा नोस्माकंकटाक्षंप्रतिरजनिरजन्यांरज न्यांस्वप्नेनप्रापितायाविषयीकृतायास्तवश्रीषुशोभासुयस्मान्मग्नः तथाच स्माकःश्रोत्रेकर्णौगीतामृताब्धौगानरूपशोभासमुद्रेमग्नः । यस्माद्वन स्त्वगपिसुकुमारत्वात्तनूमञ्जरीशरीररूपामञ्जरीतस्याः सौकुमार्येमग्नाच स्माद्वनोनासात्वश्वासाधिवासेनिश्वासरूपेगन्धमाल्यादिपरिमलेमग्ना । यस्माद्वनोरसज्ञाजिह्वाअधररूपेअधरसम्बन्धिनिवाऽमृतेनिमग्ना । यस्मा द्वनःचित्तंतवचरित्रेषुविलासादिसर्वव्यापारेषुमग्नम् । तत्तस्मात्हेतन्वि कृशाङ्गिनोऽस्माकंकैश्चिदपिकरणहरिणैरिन्द्रियरूपैर्मृगैर्वागुरामृगसम्बन्धि नीरूपानलङ्घितासि । नातिक्रान्तासि । वागुरातुल्ययात्वयावद्धानि चक्षुरादीनिषडिंद्रियाणित्वद्रूपंस्वंस्वंविषयंप्राप्यत्वामतीत्यगन्तुमशक्नुव न्तीत्यर्थः । स्वप्नेप्यस्माभिरन्यानस्पृष्टेत्येवमनुरागिणोऽस्मान्झटितिवृ णीष्वेतिभावः । देवानामस्वप्नत्वेपिस्वानुभवसिद्धत्वेनैवदूतेनैवमुक्तंप्र तिरजनिस्वप्नेनप्रापितायाइति सधुमोचितीमाशङ्कनीया । यद्वाविरहव

शात्प्रतिकूलारजनीराश्रिर्यस्याः तादृशिभैमीस्वप्नइवस्वप्नःविपर्ययज्ञानं उन्मादांवस्थेतियावत् । तयाप्रापितायाःसर्वत्रदृश्यमानायाःतवेतिव्यास्येयम् । रजन्याःहरिद्रायाःप्रतिकूला । यद्वाप्रतिकूलारजनीयस्या·गौरत्वातिशयेनजितहरिद्रैभैमीतिवा । वागुरापिमृगैर्लङ्घितुंनशक्यते । प्रतिरजनिवीप्सायामव्ययीभावः पक्षेसमासांतविधेरनित्यत्वात्कवभावः । कैश्चित्शब्दादपिशब्दोद्रष्टव्यः । तन्वङ्गीअङ्गगात्रेतिङीष् ॥ १०६ ॥

इतिघृतसुरसार्थवाचिकस्त्र ग्निजरसनातलपत्रहारकस्य ॥ सफलयममदूततांवृणीष्व त्वमनुविमृश्यदिगीशमेकमेषु ॥ १०७ ॥

इतीति । हेभैमित्वंममदूततांसफलयकृतार्थीकुरु । एषुइन्द्रादिषुमध्ये एकंदिगीशंस्वयमवधार्यविचार्यनतुसखीभि·साहैमित्यर्थः । यस्मिन्ननुरागस्तमेवंवृणीष्व । कस्यचिदेकस्यवरणान्ममदूत्यंसफलंकुर्वित्यर्थः । किंभूतस्यममइतिपूर्वोक्तप्रकारेणघृतासुरसार्थानामिन्द्रादिदेवसङ्घानांवाचिकसन्देशवचनपरम्परायेनएवंविधं निजंस्वीयंरसनातलंजिह्वास्वरूपंतद्रूपंयत्पत्रंतस्यहारकः आनायकस्तस्य । अन्योपिलेखपत्रानायकस्यदूतस्यदूत्यंसफलीकरोति ॥ १०७ ॥

आनन्दयेन्द्रमथमन्मथमग्नमग्निं केलीभिरुद्धरतनूदरिनूतनाभिः॥आसादयोदितदयंशमनेमनोवानोवांयदिस्थमथतद्वरुणंवृणीष्व ॥ १०८ ॥

आनन्दयेति । हेतनूदरिभैमि त्वं वरणेनेंद्रमानन्दय । अथवानूतनाभिर्नवनवाभिःकेलीभिःसुरतक्रीडाभिः मन्मथमग्नंमदनजनितपीडामग्नंअग्निंकामपीडाया·सकाशादुद्धरपृथक्कुरु । प्रवाहादिमग्नंअन्यदपिनूतनकलश्यादिभिरुद्ध्रियते । वाऽथवाशमनेयमेमनउदितादयायस्यएवंविधंस्वरूपमासादयकुरु । वाऽथवायदित्वत्यंएवंनोइन्द्रादिवरणंमक्रियते ॥ अथतर्हिवरुणंवृणीथाःवृणीष्व । चतुर्णांमध्ये यस्यकस्यापिवरणान्ममदूत्यंसफलयेतिभावः ॥ १०८ ॥

श्रीहर्षमितिपूर्वार्द्धंतदेव ॥ -तस्यागादयमष्टमःक

विकुलाद्दृष्टाध्वपान्थेमहा काव्येचारुणिनैषधीय चरितेसर्गोनिसर्गोज्ज्वलः ॥ १०९ ॥ ॥ ॥ ॥

श्रीहर्षमितिपूर्वार्द्धस्यपूर्वोक्तएवार्थः । किंभूतेमहाकाव्येकविकुलेनक्मा लिदासादिमहाकविसमूहेनदृष्टोऽध्वाऽप्रमेयमार्गः तस्यपान्थेनित्यंपथि केऽपूर्वप्रमेयपरिपुष्टेकाव्ये ऽयमष्टमःसर्गोऽगात् समाप्तिंप्राप्तः इतिश्रीवेद करोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतेनैषधीयप्रकाशेऽष्टमः सर्गःसमाप्तिंप्राप्तः ॥

## ॥ नैषधीयेचरिते नवमसर्गः ॥
## प्रारभ्यते ।

श्रीगणेशायनमः ॥ इतीयमक्षिभ्रुवविभ्रमेङ्गित स्फुटामनिच्छांविवरीतुमुत्सुका ॥ तदुक्तिमात्मश्र वणेच्छयाश्रृणो द्दिगीशसन्देशगिरंनगौरवात् १॥

श्रीगणेशायनमः ॥ दूतवचनश्रवणानन्तरकिमब्रूदितिवर्णयितुनवमसर्गं मारभते । इतीति । इदंभैमीदिगीशसन्देशगिरदिक्पालानांवाचिकतस्य नलतुल्यदूतस्यउक्तिमात्मस्यकेवलोक्तेः श्रवणेच्छयाआकर्णनेच्छयाऽशृणोत् नतुगौरवात् । इन्द्रादीनामाज्ञाश्रोतव्येतिआदरान्नश्रुतवती किंभूता अक्षिभ्रुवस्यविभ्रमः परिस्पन्दविलासस्तल्लक्षणेनइङ्गितेनस्वाभिप्रायसूच केनचेष्टितेनस्फुटामनिच्छांदिक्पालानामनादरंविवरीतुंविशेषेण प्रकटी कर्तुंउत्सुकोत्कण्ठिता । अक्षिणीचभ्रुवौचद्वयचतुरेतिसाधुः ॥ १ ॥

तदर्पितामश्रुतवद्विधायतां दिगीशसन्देशमयींस रस्वतीम् ॥ इदन्तुमुर्वीतलशीतलद्युति ञ्जगाद वैदर्भनरेन्द्रनन्दिनी ॥ २ ॥

तदिति । वैदर्भनरेन्द्रनन्दिनीभैमी उर्वीतलेभूलोकेआल्हादकत्वाच्छी तलद्युतिंचन्द्रतुल्यंनलंइदंवक्ष्यमाणंजगाद । किंकृत्वातेनदूतेनअर्पितांनु

न्दिगीशसन्देशमयीन्दिक्पालवाचिकमकुलांतांसरस्वतींवाणींअनादरा दप्रत्युत्तराभावादश्रुतेनतुल्यंवर्त्तते । अनाकर्णितमिवविधायप्रत्युत्तरमद त्वास्वमनीषितमुक्तवतीत्यर्थः ॥ २ ॥

मयाङ्गपृष्टःकुलनामनीभवा नमूंविमुच्यैवकिम न्यदुक्तवान् ॥ नमह्यमत्रोत्तरधारयस्यकिं ह्रियेपि सेयंत्नत्रतोधमर्णता ॥ ३ ॥

मयेति । अङ्गदून मयात्वान्कुलनामनीपृष्टःसन्अमूंकुलनामनीविमु च्यअन्यद्देवदिगीशसन्देशाद्यप्रस्तुतमेवकिमुक्तवान् । अयुक्तमेतदित्यर्थः । अत्रकुलनामविषयेप्रश्नेनह्यमुत्तरन्धारयस्य । प्रत्युत्तरलग्नकस्यभवतोऽपि सेयंप्रस्तुताअधमर्णताह्रियेलज्जायेनकिं ॥ प्रश्नोत्तरमददत्तःपरमस्यापिह्री र्भवती । उत्तमस्पतवकथंनेतितस्मात्कुलनामनीकथयेतिभावः । ऋणा पाकरणेसत्यन्योपितदपाकरणाल्लज्जापदंप्राप्नोति । निषेधमात्रवाचि नोनकारस्यप्रथमान्तत्वमेवयुक्तमितितसपूर्वायाः प्रथमायाविभाषेतिवैक ल्पिकत्वान्मयादेशाभावःधारयतीतिधारयः । अनुपसर्गाल्लिम्पविन्देति शः । उत्तरस्यधारयइतिसमासः ॥ ३ ॥

अदृश्यमानाक्कचिदीक्षिताक्कचि न्ममानुयोगेभव तःसरस्वती ॥ क्कचित्प्रकाशाद्क्कचिदस्फुटार्णसं सरस्वतीजेतुमनासरस्वतीम् ॥ ४ ॥

अदृश्येति । भवतःसरस्वतीवाणी सरस्वतींमाम्नासरस्वतींनदींजेतुंमना स्तत्तुल्याभवतीत्यर्थः । किंभूतांसरस्वतीं । क्कचिद्देशविशेषेप्रकाशांप्रकट जलां । क्कचिद्यास्फुटमप्रकटमर्णउदकंयस्यास्तां । किंभूतातवसरस्वती । क्क चित्कुलनामविषयेममअनुयोगेप्रश्नेउत्तरादानाददृश्यमानागुप्ता । क्कचित्कु तआगतोसीतिममप्रश्नेईक्षिता । उत्तरदानात्प्रकटा । कुलनामप्रश्नस्याप्यु त्तरंप्रयच्छेतिभावः । सरस्वतीमदीमेदेगोवाग्देवतयोरपीतिविश्वः ॥ ४ ॥

गिरःश्रुताएवतवश्रवःसुधाः श्रयोभवन्नास्मिनतु नश्रुतिस्पृहा ॥ पिपासुताशान्तिमुपैतिवारिजा नजातुदुग्धान्मधुनोधिकादपि ॥ ५ ॥

गिरइति । अतिमधुरत्वाद्भवतोःकर्णयोःसुधाअमृतरूपास्तवगिरःश्रुता एवयद्यपिश्रुतास्तथापितुपुनस्तवनामविषयेश्रुतिस्पृहाश्रवणेच्छानमया नशान्ताभवदतस्तदपिकथयेतिभावः अतिमधुरवाणीसमाकर्णनेनकथंनशा न्तेत्याशङ्कायाम्हेतुमाह । वारिजातंउदकसंबन्धिनीपिपासुतापानेच्छाअधि कादुदकापेक्षया । अतिमधुराद्दुग्धान्मधुनोवाजातुकदाचिदपिशान्तिर्नोपै तिइत्याभाणकः । तथायुक्तमेतदित्यर्थः । अधिकादपिजलापेक्षयाबहुपी तादपिदुग्धान्मधुनोवेतिवा । दुग्धापेक्षयाअधिकांमधुनोपीतिवा । दुग्धा च्छ्याम्यतिनापिमधुनः । अधिकादप्यमृतादपिनशाम्यतिइतिवा । दुग्ध मधुभ्यांअधिकादमृतादपिनशाम्यति । अतिबहुकिंवक्तव्यम् ॥ ५ ॥

विभर्त्तिवंशःकतमस्तमोपहं भवादृशंनायकरत्नमी दृशम् ॥ तमन्यसामान्यधियावमानित न्त्वयाम हान्तंबहुमन्तुमुत्सहे ॥ ६ ॥

बिभर्तीति । सूर्यादिवंशमध्येकतमोवंशोभवादृशमीदृशंहस्ताद्यभिनय मात्रेणावर्णयितुंशक्यं नत्वपरयववत्समस्तगुणस्तमोपहन्तितिरस्करोति कोधरहितमज्ञानविनाशमंशोकनुदस्त्वानायकरत्नंबिभर्ति । यस्मिंस्त्वमुत्प न्नःसकतमोवंशइतिप्रश्नः । अन्यसामान्यधियाअन्यवंशतुल्यत्वबुद्ध्याअव मानितन्तिरस्कृतएवकुत्सविशिष्टेनत्वयाकृत्वा महान्तमत्युत्तमंवंशवहुतिस दांमन्तुंसंमानयितुमुत्सहेउत्साहवत्यस्मि । अनन्यतुल्यत्वेनपूजयितुमि च्छामि । तस्वंशंकथयेतिभावः । अथचत्वतेअसातमस्तोमनिराकरणसम र्थलोकोत्तरंहारमध्ययोग्यंरत्नंवंशोधारतितंवंशअन्यवेणुतुल्यत्वबुद्ध्या अव मन्तिरस्करोति । पश्चात्तद्रत्नंदृष्ट्वातस्यवेणोर्भूयोमानःक्रियतेतद्वद्वेणोरपि रत्नोत्पत्तिर्वृद्धैरुक्ता । तमोन्धकारेस्वर्भानौतमःशोकेगुणान्तरे । नायकोने तरिश्रेष्ठेहारमध्यमणावपीतिविश्वः । रत्नंस्वजातिश्रेष्ठेपिइत्यमरः । तमो पहंअपेःक्लेशतमसोरितिडच् ॥ ६ ॥

इतीरयित्वाविरतांपुनःसताङ् गिरानुजग्राहतरा न्धराधिपः ॥ विरुत्यविश्रान्तवतीन्तपात्यये घ नाघनश्रातकमण्डलीमिव ॥ ७ ॥

इतीति । सनराधिपोनलइतिपूर्वोक्तं ईरयित्वाउक्त्वाविरताविश्रान्ता तांत्रेमीगिरावाचापुनरनुजग्राहतरांअतितरामनुगृहीतवानुवाचेत्यर्थः । तांप्रतितत्स्ववधकरवचनमेवानुग्रहः । कःकामिव । तपात्ययेग्रीष्मान्तेप्रावृषिवर्षुकोघनाघनोमेघःचातकमरुस्थलीमिव । किंभूतांपिपासावशाद्विरुत्यग्रव्दित्वाविश्रान्तवतींविश्रान्तां । अब्दोघनाघनइत्यमरः । चरिचली त्यादिनाद्वित्वआगागमेकृतेहन्तेर्घत्वञ्चेतिसाधुः ॥ ७ ॥

अयेममोदासितमेवजिह्मया द्वयेपितस्मिन्ननति प्रयोजने ॥ गरौगिरःपल्लवनार्थलाघवे मितञ्च सारञ्चवचोहिवाग्मिता ॥ ८ ॥

अयेइति । अयेमेमिममजिह्मयातस्मिन्कुलनामलक्षणेद्वयेपिउदासितमे वउदासीनमेवजातं यतोऽनतिप्रयोजनेअतिशयितप्रयोजनशून्येनिरर्थकत्वान्मयाद्वयंतेनकथितमितिभावः । निष्प्रयोजनेपिपृष्टेप्रत्युत्तरंदातव्यमित्याशङ्क्याह । पल्लवनंअल्पेपिप्रश्नेयेबहुशब्दवचनार्थलाघवंअर्थसङ्क्षेपश्चद्वे अपिगिरोवाण्यागरौविषतुल्यौदोषौ । अविचार्यएवविषंयथा त्यज्यतेतथाएतेअपित्याज्ये इत्यर्थः । तस्मान्निरर्थकंनप्रष्टव्यंपृष्टमपिप्रत्युत्तराहंनभवतीतिमयोदासितमितिभावःदोषत्वमेवसमर्थयते। हियस्मान्मितमल्पञ्चतःसारंअर्थतोयद्वचः सैववाग्मिताएतद्विपरीतस्यदोषत्वं स्फुटमेवेत्यर्थः चौसामस्त्यंसूचयतः । उदासितंभावेक्तः । पल्लवशब्दोलक्षणयाविस्तारवाचीतस्मात्तत्करोतीतिण्यन्ताल्ल्युट्प्रत्ययःपाठान्तरं तियुक्तं॥ ८ ॥

वृथाकथेयंममयिवर्णपद्धतिः कयानुपूर्व्यासमकेति केतिच ॥ क्षमेसमक्षव्यवहारमावयोः पदेविधातुं खलुयुष्मदस्मदी ॥ ९ ॥

नाम्नोतिप्रयोजनत्वाभावंसमर्थयते । वृथेति हेभैमिमयिकावर्णपद्धतिर्वर्णपङ्क्तिःसमकेतिसङ्केतितात्वयेतिशेषः । कयाचानुपूर्व्यापरिपाट्यासङ्केतिताचकारःप्रश्नसमुच्चयार्थः । मकाराकारलकारविसर्जनीयात्मिकासंज्ञा सङ्केतितातत्रतद्विपरीतालङ्कारादिरूपावाइयङ्कथागोष्ठीवृथानिष्प्रयोजना। नामसंज्ञानमिधानेव्यवहारसिद्धिःकथमित्यतआह । खलुयस्मादावयो

स्तत्रममचसमक्षंप्रत्यक्षव्यवहारं विधातुङ्कर्तुंसाधयितुंयुष्मदस्मदीपदेशुवन्ते च्छमेसमर्थैपरोक्षव्यवहारएवहिसम्बोधप्रयोजनंप्रत्यक्षव्यवहारेचत्वमेवकुर्वह्मेवङ्करिष्यामीतियुष्मदस्मद्भ्यामेवकार्यसिद्धेः पूर्वोक्ताकथानिष्प्रयोजनैव । यद्वाचकारा-कुलप्रश्नोपिवृथेत्यर्थः । यथानामप्रश्नादुत्तरश्लोकेन कुलस्यदत्तोत्तरत्वाद्व्याख्यानानन्तरंतथात्वायोनेत्युपेक्ष्यम् । समकेतीति कितनिवासेरोगापनयनेचेतिअस्यकर्मणिलुङिरूपं । आवयोरितिपरत्वादस्मदःशेषः युष्मदस्मदोश्चपरत्वादादेशाभाव. ॥ ९ ॥

यदिस्वभावान्ममनोज्ज्वलङ्कुलन्ततस्तदुद्भावन
मौचितीकुतः ॥ अथावदातन्तदहोविडम्बना य
थातथाप्रेष्यतयोपसेदुषः ॥ १० ॥

नामाकथनेहेतुमुक्त्वा कुलाकथनेहेतुमाह । यदिती । ममकुलंस्वभावादुर्वदिचवज्वलनिर्मलन । ततस्तर्हिसदोषस्यतस्यकुलस्योद्भवनकथनममकुतःकथमौचिती अपितुतादृशस्यकथनमयुक्तमित्यर्थः । अथवावदातंनिर्दोषंतत्कुलन्तर्हिप्रेष्यतयापरदूतत्वेनउपसेदुषः आगतस्यममतथातादृशीकथातादृक्प्रसिद्धनिर्दोषसङ्कथासाविडम्बना । अहोआश्चर्यमहानुपहासइत्यर्थः । उपहासभियातत्कथनमप्रेष्यस्यममानुचितमित्यर्थः । अवदातदैपशोधने । उपसेदुषःभाषायांसदवसेतिक्वसुः ॥ १० ॥

इतिप्रतीत्यैवमयाऽवधीरिते तवापिनिर्बन्धरसो
नशोभते ॥ हरित्पतीनांप्रतिवाचिकंप्रति श्रमोगि
रान्तेघटतांहिसम्प्रति ॥ ११ ॥

उपसंहरति । इतीति । इतिपूर्वोक्तप्रकारेणवैयर्थ्येनानौचित्येनचहेतुनाप्रतीत्यैवविचार्यैवमयाऽवधारिते कुलनामप्रश्नरूपार्थेतवापिनिर्बन्धेआग्रहेरसःप्रीतिर्नशोभतेनयुक्तमित्यर्थः । तर्हिकिंयुक्तंकियस्मात्सम्प्रतीदानींहरित्पतीनामिन्द्रादिदेवानाम्प्रतिवाचिकंप्रत्युत्तरप्रतिउद्दिश्यतेतवगिराश्रमःप्रयासोघटतेयुक्तःनिरर्थककुलनामप्रश्नेआग्रहन्त्यक्त्वाशीघ्रन्दिक्पालानांप्रत्युत्तरन्देहीतिभावः ॥ ११ ॥

तथापिनिर्बन्धवतितेयवास्पृहा मिहानुरुन्धेमित

यानकिङ्करा ॥ हिमांशुवंशस्यकरीरमेवमां निशम्य किंनासिफलेग्रहिग्रहा ॥ १२ ॥

तथेति । अथवातथापिकुलनामाकथनेकारणेकथितेपिएतत्कथनविषयेनिर्बन्धति आग्रहशीलेभैमि अहंइहकुलनामप्रश्नेतवस्पृहांइच्छांमितया गिरास्वल्पेनवचनेनकिमनुरुन्धेनावृणोमि अपितुपूरयामि । द्वयोर्मध्ये एकेनाग्रहःपरित्याज्यस्त्वयातुनत्यज्यतेततोमयैवत्यज्यतइत्यथवेत्यनेनसूचितम् । तमेवाह त्वंहिमांशुवंशस्यचन्द्रवंशस्यकरीरंबालकमेवमांनिशम्याकर्ण्यफलङ्गृह्णातीतिफलेग्रहिःफलितः ग्रहोनिर्बन्धोयस्याःसाएवम्भूताकिंनासिनभवसिअपितुफलितनिर्बन्धाभव । निशम्यैवेतिवायोजना चन्द्रवंशेबहवोविख्यातास्तन्मध्येऽहंप्रसिद्धोनभवामीतिकरीरपदेनस्वह्नोपायति । फलेग्रहिरात्मंभरिश्चेतिसाधुः । स्यादवन्ध्यःफलेग्रहिरित्यमरः ॥ १२ ॥

महाजनाचारपरंपरेदृशी स्वनामनामाददतेनसाधवः ॥ अतोभिधातुंनतदुत्सहेपुन र्जनःकिलाचारमुचंविगायति ॥ १३ ॥

नाम्नस्त्वत्यन्तमकथनीयत्वमाह । महेति । नामप्रसिद्धौ । यत्साधवःस्वनामनाददतेनकथयन्ति । ईदृशीमहाजनानांआचारपरम्परा । यतोऽतःकारणात्तत्स्वनामअभिधातुंवक्तुंनोत्सहेनेच्छामि । कुलंकथितंनामनकथनीयमितितात्पर्यार्थः । अत्रहेतुःकिलयस्माज्जनःआचारमुचंपुरुषंपुनर्विगायतिनिन्दति । अतोनकथ्यतइत्यर्थः । आत्मनामगुरोर्नामनामातिकृपणस्यच । आयुष्कामोनगृह्णीयाज्ज्येष्ठापत्यकलत्रयोरितिसदाचारोमूलम् । आददतेआक्रोदीनास्यविहरणइतितङ् ॥ १३ ॥

अदोयमालप्यशिखीवशारदो बभूवतूष्णीमहितापकारकः ॥ अथास्यरागस्यदधापदेपदे वचांसिहंसीवचिदर्भजाददे ॥ १४ ॥

अदइति । अयंनलोऽदःपूर्वोक्तंवचनमालप्योक्त्वातूष्णींचबभूव । किंभूतःशारदोनिपुणोहिंसाप्रवादोवाऽतएवाहिताःशत्रवस्तेषामपकारकः । कइवशारदःशरत्सबन्धीशिखीवमयूरइव । यथाअहीनासर्पाणान्तापङ्करोतिएवं

भूतोमयूरःप्रावृषिरुतंश्रुत्वाशरदिमूकीभवति । अथानन्तरञ्चआस्यरागस्य मुखलौहित्यस्यपदेपदेप्रतिचरणंदधाधारयित्रीहंसीचविदर्भजावचांसिआ ददेउवाचेत्यर्थः । किंभूतेयमस्यनलस्यपदेपदेसुस्निग्धत्तरूपेवराङ्गस्यमधुर त्वादनुरागस्यदधाधारयित्रीपोषयित्री । आस्यस्यैववराङ्गस्तस्यदधावाहं सी । प्रावृषिमयूरोमधुरंरौतिशरदिहंसीमधुरस्वरा । आस्येचरणयोश्चलो हितामवति । दधेतिददातिदधात्योर्विभाषेतिशःरागस्येतिकर्मणिषष्ठी १४

सुधांशुवंशाभरणंभवानिति श्रुतेपिनापैतिविशेष संशयः ॥ कियत्सुमौनंविततांकियत्सुवाग् महत्य होवञ्चनचातुरीतव ॥ १५ ॥

सुधेति । भवान्हिमांशुवंशस्याभरणमितिश्रुतेपिनलोवान्योवाकश्चने तिविशेषसंशयोनापैतिनगच्छतितत्वाजानापिवदेत्यर्थः । कियत्सुद्वित्रेषा मादिप्रश्नेषुमौनंप्रत्युत्तरादानंकियत्सुकिमर्थंमागतोसीत्यादिषु प्रश्नेषुवा ग्विततातप्रस्तुतबहुतरबहुदेवाशंसाकथनरूपा । अहोआश्चर्यकारिणीन हतीतववञ्चनचातुरीईदृशः प्रतारकोनदृष्टाचारइतिभावः । वंशेषुमुक्ता भरणांशाभरणंभवति ॥ १५ ॥

मयापिदेयंप्रतिवाचिकंनते स्वनामसत्कर्णसुधाम कुर्वते ॥ परेणपुंसाहिममापिसङ्कथा कुलाबलाचा रसहासनासहा ॥ १६ ॥

स्वयानाम्निअकथितेसतिमयापिप्रत्युत्तरंनदातव्यमित्याह । मयेति।स्व नाममनकर्णयोः सुधारूपंअकुर्वतेस्वनामनकथयतेतेतुभ्यंमयापिप्रतिवाचि कंप्रत्युत्तरंनदेयंदातुमनुचितं । तत्रहेतुमाह । हियस्मात्परेणपुंसापुरुषे णसहममापिसङ्कथासम्यग्गोष्ठी कुलाबलाकुलस्त्रीतस्याआचारेणसहास नंएकस्मिन्नासनेउपवेशनन्तत्सासहापतिव्रताचारपरपुरुषकथयोः सहाव स्थानलक्षणोविरोधइत्यर्थः। यथात्वयासदाचारभङ्गभीत्यानामनकथ्यतेतथा मयापिस्त्रीकुलाचारभङ्गभीत्यास्वाभिप्रायोनकथ्यतइतिप्रतिबन्दीत्यर्थ· १६

हृदाभिनन्द्यप्रतिवन्द्यनुत्तरः प्रियागिरःसस्मित माहसम्मताम् ॥ वदामिवामाङ्क्षिपरेशुमाक्षिप

स्त्वमीदृशीं माक्षिकमाक्षिपद्वचः ॥ १७ ॥

हृदेति । सनलः सस्मितं यथा तथा तां भैमीमाह स्म अबोधत् । किं कृत्वा प्रियागिरो भैमीवचांसि प्रियामनोज्ञा वा गिरः साधूक्तमिति हृदा मनसाभिनन्द्य स्तुत्वा । किं नूनं कुलस्त्रीणामाचारानुचितं परपुरुषसम्भाषणमहमपि न करोमीति प्रतिबन्दी तया तस्याः सकाशाद्वाऽनुत्तरत्वमुत्तरहीनः । इदृग्वक्रोक्तिप्रतिवन्द्यादिचातुर्यं कस्यापि नास्तीत्याश्चर्यवशात्स्मितपूर्वोऽभिभाषितवान् । तदेवाह । हे वामाक्षि सुनेत्रे कटाक्षविक्षेपाद्वक्रनेत्रे वा । अहं त्वदाभिरूपदिग्धासि । माक्षिकं मधु त्वमाक्षिपसि तिरस्कुर्वद्वदति मधुरं ईदृशीं प्रतिवन्द्यादिकं वक्तृत्वलक्षणं वचनं परेष्विन्द्रादिव्यतिरिक्तेषु मादृशेषु माक्षिप । तानेव प्रत्येवं वदितुं युक्तं न तु मां प्रतीति प्रतिबन्दीनुक्ता आर्जुमार्गेण प्रत्युत्तरं देहीति भावः । सस्मितं यथा तथा माक्षिकं माक्षिपद्वचनं मास्मेति अभिप्रायः । ईदृशीं त्वमिन्द्रादिदूतत्वात्तदीय एवेति मत्त्वानुसरेदन्तेऽपि न पातित्रत्यभङ्गिरिति वा । माक्षिकमाक्षिपद्वचः परेषु माक्षिप किं तु मयि क्षिप इति मयि परत्वबुद्धिं मा कुर्विति नल एवाहमिति यथावसरं कथितमिति वा यदा निकषया क्षिप परेष्वन्येषु अयं नलादन्य इति माक्षिप इति वा । सर्वथा अहं नल एवेत्यर्थः । व्याख्यानान्तरं क्लिष्टत्वादुपेक्ष्यम् । वामाक्षि । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् षित्वान्ङीष् नदीत्वाद्ध्रस्वः नाक्षिपपूर्वं वक्रोक्ति ॥ १७ ॥

करोषि नेमं फलिनं मम श्रमं द्विजो नु गृह्णासि न कञ्चन प्रभुम् ॥ त्वमित्थमर्हासि सुरानुपासितुं रसामृतस्नानपवित्रया गिरा ॥ १८ ॥

करोषीति । त्वमिमं स्वं स्वीयं मम श्रमं फलिनं सफलं न करोषि । प्रश्नकाकुः । अपि तु कुरु इति । तथा द्विजा कञ्चन प्रभुं नानुगृह्णासि अपि तु स्वयंवरेणानुगृहाण । चतुर्ष्वन्यतमस्यापि वरणेन मम श्रमं सफलयेत्यर्थः । इत्थं प्रतिवन्दीरूपेण प्रकारेण रसो माधुर्यं तल्लक्षणममृतं येन यत्स्नानं तेन पवित्रया गिरा त्वं सुरानुपासितुं अर्हा योग्यासि । एवंविधां वाणीं तान्प्रति सन्देशयेति भावः । यया गिरा मां सन्तोषयसि तया देवानपि सन्तोषयेत्यर्थः ॥ १८ ॥

सुरेषु सन्देशमयसीदृशी बहुं रसस्रवेण स्तिमितां नभा

रतीम् ॥ मदर्पितादर्पकतापितेषु या प्रयाति दावार्दितदावसृष्टिताम् ॥ १९ ॥

सुरेष्विति । इन्द्रेमित्यं वक्तुं विपुलार्थं रसस्रवेणमाधुर्येद्रवेणास्तिमितामार्द्रीं न तिरश्चाम् अनुरागमाकुल्येन चार्द्रां वक्रोक्तिप्रतिवन्ध्यादिरूपाभारतींवाणीं देवेषु सुरेषु न सन्देशयसि अपितु तान्प्रत्येनां सन्देशकुरु । या वाणी मयिच्य र्पिता सन्देशरूपेणमया चार्पिता कथिता सती दर्पकतापितेषु कामपीडितेषु सुरेषु दावेन वनवह्निना ऽर्दितः दावो वनं तस्य वृष्टितां प्रयाति । दह्यमानस्य वनस्य वह्नौ वृष्टिर्यथा सुखाय भवति तथा कामपीडितानान्तेषान्तववाणी सुखाय भविष्यति तस्मादेवं कुर्विति भावः । प्रयातीति वर्तमानसामीप्येलट् ॥ १९॥

यथा यथेह त्वदुपेक्षयानया निमेषमप्येष जनो विलम्बते ॥ कृपाशरव्यीकरणे दिवौकसां तथा तथा त्वरतेरतेःपतिः ॥ २० ॥

तेषां कामपीडां स्वनिन्दाञ्चाह । यथेति । एषमल्लक्षणोजनोऽनया प्रत्युत्तरदानरूपया त्वदुपेक्षयात्वत्कृतयावज्ञया निमेषं निमेषपरिमितकालमपि यथा यथा यावद्यावद्दूरतवसन्निधौ विलम्बते कालक्षेपं करोति । तथा तथा तावत्तावद्रतेःपतिः कामो कृपादिवौकसां शरव्यीकरणे लक्ष्यताकरणेऽस्मिन्नयत्वरते सत्वरो भवति । तस्मात्सत्वरं प्रत्युत्तरन्देहीति भावः । इहोत्तरविषये त्वदुपेक्षयेति वा ॥ २० ॥

इयच्चिरस्यावदधन्ति मत्पथे किमिन्द्रनेत्राण्यथ निर्ननिर्ममौ ॥ धिगस्तु मां सत्वरकार्यमन्थरं स्थितःपरप्रेष्यगुणोपियत्रन ॥ २१ ॥

इयदिति । आत्मनिन्दाम् इयच्चिरस्यैतावद्बहुकालं मत्पथेऽवदधन्ति निर्निमेषं सावधानानि एवंभूतानीन्द्रनेत्राणि किं न निर्ममौ अपितु तेनैव निर्मितानि । अन्यथा तेषां विलम्बसहनदार्ढ्यं कुतः तस्माद्ब्रह्मनिर्मितानीति सत्यम् । सत्वरेत्वरया कर्तुमर्हे कार्ये मन्थरं मन्दं मां धिगस्तु अहमपि निन्द्य इति यावत् । यः सोयत्र मयि परस्य प्रेष्यो दूतस्तस्य गुणः सत्वरलक्षणः सोपि न स्थितः न विद्यते परस्य कष्टो यो दूतगुण इति वा । सत्वरकार्यकारित्वन्दासधर्मः । प्रेषितेन

द्रागेवशीघ्रमाज्ञायसंपाद्यगन्तव्यम् । कार्याभावेपिशीघ्रमागत्यनभवतीति झटितिनिवेदनीयंयस्माद्भुमांप्रतीक्षते तस्मात्झटितिप्रत्युत्तरंदत्वामां प्रेषयेतिभावः । अवद्यन्तीवानपुंसकस्येतिनुम् ॥ २१ ॥

इदंनिगद्यक्षितिभर्तरिस्थिते तयाभ्यधायिस्वगतं विदग्धया ॥ क्षुचिक्षियन्दूतयतांभुवःस्मरं मनो दधत्वानयनैपुणव्यये ॥ २२ ॥

इदमिति । क्षितिभर्तरिनलेइदंपूर्वोक्तंनिगद्योक्त्वास्थितेसतितूष्णींभावेप्राप्ते सतितयाभैम्यास्वगतमप्रकाशमभ्यधायिअवादि । किंभूतयाभुवोभूलोकस्यस्मरंकामरूपंअतिसुन्दरन्तंनलमधिक्षिकीविषयेदूतयतादूत्यकुर्वतांइन्द्रादीनामनयेनैपुण्यकौशलन्तस्यव्यये ऽभावेस्वमनोदधत्याधारयन्त्या स्त्रीषुअनभ्रःसामान्योदूतःप्रेषणीयइतिनीतिः । अययोतिसुन्दरःप्रेषितस्तितेषांनीत्यनभिज्ञता । नीतिशास्त्रंनजानन्तीतिमनसिनिश्चितवत्याऽतो विदग्धयानीतिशास्त्रादौचतुरया यद्वातेषांमनोनयकौशलाभावेदधत्या तेषांमनसिनयकौशलंनास्तीतिनिश्चितवत्येतियोज्यम् । मोज्ज्वलंरूपवत्स्वनार्येवरुपंनचातुरं । दूतस्यापिहिदूतीवाबुधःकुर्यात्कदाचनेमितिः । अधिक्षीतिसप्तम्यर्थेऽव्ययीभावः । नैपुणभावेयुवादित्वादण् ॥ २२ ॥

जलाधिपस्त्वामदिशन्मयिध्रुवं परेतराजःप्रजिघायसस्फुटम् ॥ मरुत्वतैवप्रहितोसिनिश्चितं नियोजितश्चोर्ध्वमुखेनतेजसा ॥ २३ ॥

स्वागतन्तं प्रतिकिमाहेत्याह । जलेति । जलाधिपोवरुणोमयिविषयेत्वान्ध्रुवंनिश्चितमदिशत्आदिष्टवान् । सपरेतराजःयमःस्फुटंनिश्चितंप्रजिघायप्रेषितवान् । मरुत्वतेन्द्रेणैवनिश्चितंप्रहितोसि ऊर्ध्वंमुखेनतेजसा वह्निनानियोजितश्च । चतुर्ष्वप्यन्वयेषुआपाततःकाकुवत्कथयेत्यस्ययोजना । अथवातिसुन्दर्यांमयिअतिसुन्दरन्त्वांय-समादिष्टवान्सपूर्वोक्तनीतिलङ्घनान्निश्चितंजडानांस्वामीअतिमूर्खइत्यर्थः । यश्चात्तादृश्यांमयितादृशमेवप्रेषितवान्सपरेतानामृतानांराजैवनसचेतनइत्यर्थः । येनतादृश्यांमयितादृशस्त्वंप्रेषितःसमरुत्वान्वातूलोभवति । येनतादृश्यांमयि

तादृशस्त्वं नियोजितः सऊर्ध्वंमुखः पिशाचः प्रतिभारहितश्च । पिशाचस्योर्ध्वंमुखोभवति । अप्रतिभश्चभवति । ऊर्ध्वंमुखत्वेनत्वन्मुखसौन्दर्यंत्वेन दृष्टमित्यपिसूचितम् । अवज्ञारूपत्वान्मनसैवनलंसंबोध्येयमुक्तिः ॥२३॥

अथप्रकाशंनिभृतस्मितासती सतीकुलस्याभरणं किमप्यसौ ॥ पुनस्तदाभाषणविभ्रमोन्मुखं मुखं विदर्भाधिपसंभवादधे ॥ २४ ॥

अथेति । अथासौसतीनिभृतस्मितागुप्तस्मितातथैवस्मितासती कुलस्य पतिव्रतासमूहस्यकिमपिलोकोत्तरमाभरणमेवंभूताविदर्भाधिपसंभवाभैमी स्वमुखंपुनस्तेनसहयदाभाषणन्तस्योविभ्रमोविलासस्तत्रसोत्सुकमुन्मुखं मुखमेवंभूतंदधौप्रकाशंस्फुटं सखीभिरपियथाकर्ण्यतेतथावददित्यर्थः । प्रकाशमुर्ध्वमसम्भवत्सङ्गेतिमुखविशेषणंवा । अयोग्या अपिइन्द्रादयोमांवाञ्छन्तीतिगूढस्मिता । सतीपदेनयोमनसापूर्वंवृतःसएवपतिरिति सूचितम् । तदाभाषणेत्यादिनातेनसहनलवुद्ध्याभाषणंमुख्यमुत्तरदानप्रासङ्गिकमितिसूचितम् ॥ २४ ॥

वृथापरीहासरुचिप्रगल्भता ननेतिचत्वादृशिवाग्विगर्हणा ॥ भवत्यवज्ञाचभवत्यनुत्तरा दतःप्रदित्सुःप्रतिवाचमस्मि ते ॥ २५ ॥

वृथेति । इहेवदूतइतीयप्रगल्भताधृष्टत्वम् । इतिकिं । वृथानिष्प्रयोजनःपरीहासउपहासः । इयअपरिचितेनसहोपहासङ्करोतिअत्यन्तंधृष्टेयमितिसखीजनोवदिष्यति । त्वादृशिप्रतिबन्ध्यादिरूपक्रीडावादःइतिकारणाद्वृथा । इतिकिंप्रगल्भतेतिवा । तथायत्नमयोपदिश्यतेतन्मयानक्रियतेइतिननेतित्वादृशेनिषेधवाक् त्वत्सदृशस्यविगर्हणाविशेषेणनिन्दैवभवति । भवतंप्रतिसोपपत्तिकमेववक्तव्यंनिरूपपत्तिकन्तुविगर्हणा । तर्हि तूष्णींस्थातव्यमितिचेदतआह । भवतित्वयिअनुत्तरादुत्तरादानात्तव देवानाञ्चअवज्ञाभवतिअतोऽहंप्रतिवाचन्तुभ्यंप्रदित्सुःदातुमिच्छुरस्मि । ननेतिदेवानांपृथग्निषेधसूचनार्थम् । त्वादृशिभवतीतिपदाभ्यान्तवैवमाहात्म्यादुत्तरंदीयतेनतुइन्द्रादिमाहात्म्यादितिसूचितम् । अन्यस्मिन्दूते

नेत्यर्थः । परीहासःउपसर्गस्यघञीतिदीर्घः ॥ २५ ॥

कथंनुतेषाङ्कृपयापिवागसौ गसाविमानुष्यकला ङ्कनेजने ॥ स्वभावभक्तिप्रवणंप्रतीश्वराः कथंन वाचामुदमुद्गिरन्तिवा ॥ २६ ॥

कथमिति । मानुष्यकमेवलाञ्छनंयस्यैवंविधेमञ्जक्षणेजने कृपयापिहे तुनासौअस्मान्वृ णीष्वेतितेषान्देवानांवाक्कथङ्केनवाप्रकारेणासाविप्रसूता नानव्यादेवतानर्हत्वात्तेषान्तांप्रत्येवङ्कृपयापिवक्तुमनुचितम् । कथंन इतिनिपातसमुदायःपृथग्वा । नुःशिरस्थानेप्रश्नेवा । तेषाङ्कृपयाकथ्यौ वाकथमसावीतिवा । मानुष्यकलाञ्छनेइतिस्वनिन्दयादेववरणनिषेधेता त्पर्यम् वाशब्दःपूर्वोक्तानौचितीपरिहारार्थे । अथवेतिईश्वराःप्रभवःस्व भावेनतत्त्याप्रवणंनम्रंजनमुद्दिश्यकयावाचामुदंहर्षनोद्गिरन्तिप्रकटयन्ति। अपितुययाकयापिभक्तानांप्रतिस्वहर्षप्रकटनेतेषांतात्पर्यंनतुमद्वचनइति मोदंवचनमितिभावः । तेकेवलंनमस्कारार्हाःनतुवरणार्हाइतिअपिसूचि तम् । प्रथमपक्षेअसावीतिकर्मकर्तर्यचःकर्मकर्तरीतिचिण्पक्षेभावकर्मणो रितिचिण् । मानुष्यकेतियोपधाद्वुञ् ॥ २६ ॥

अहोमहेन्द्रस्यकथंमयोचिती सुराङ्गनासाङ्गमञ्शो भिताभुवः ॥ हृदस्यहंसावलिमांसलश्रियो बला कयेवप्रबलाविडम्बना ॥ २७ ॥

अहोइति । सुराङ्गनानामुर्वशीप्रभृतीनांसङ्गेनशोभिताभृत.शोभाशी लस्यविश्वरूणस्यमहेन्द्रस्य मानुष्यामयाकृत्वाविडम्बनाकथंऔचितीअपि तुनकथञ्चित् । अहोआश्चर्येसम्बोधनंवा । अत्यन्तमनौचितीत्यर्थः उ चितैवौचिती कयाकस्येव । वलाकयाकृत्वाहंसावल्यामांसलाबहुलाश्रीः शोभायस्यहृदस्येवप्रबलाविडम्बनाजुगुप्सिताकारता हंसापेक्षयायथाबला काहीनातथारंभाद्यपेक्षयाअहमितिइन्द्रवरणनिषेधेतात्पर्यम् ॥ २७ ॥

पुरःसुरीणांभणकैवमानवी नयत्रतोस्तत्रतुसापि शोभिका ॥ अकांचनेकिंचननायिकाङ्गके किमा रकूटाभरणेननश्रियः ॥ २८ ॥

पूर्वोक्तमेवद्रढयति ॥ पुरइति सुरसुन्दरीणांदेवाङ्गनानांपुरोग्रेमानवी केवभयाकथयअपितुकापितुच्छेत्यर्थः । इवशब्दोवाक्यालङ्कारे । केनेति पाठेमानवीसुरीणांपुरः केनगुणेनशोभिकाशोभतेभवाएतादृशः कोपिगुणो मानुष्यांनविद्यतइत्यर्थः । तर्हिकुत्रशोभतइत्यतआह । यत्रतादेव्योनवि द्यन्ते तत्रतुपुनः पृथिव्यांसापिमानव्यपिशोभते । मानुष्यपेक्षयाच्चसुं न्दरीनतुदेव्यपेक्षया । तत्रदृष्टान्तः । यथाअकाञ्चनेसुवर्णालङ्काररहिते अकिञ्चनस्यदरिद्रस्यनायिकास्त्रीतस्याअङ्केऽल्पेऽवयवेएकस्मिन्नप्यवय वे आरकूटस्यकृतेन अलङ्कारेणश्रियःशोभाः किंनभवन्ति अपितुभवन्त्येव तथादेवीरहितायांभुविअन्यरमण्यपेक्षयापिमनापिशोभायुक्तेवेत्यर्थः । पूर्वोक्तमेवतात्पर्यम् । रीतिःस्त्रियामारकूटमित्यमरः । लोकेपित्तलमिति वदन्ति । सुरीणांपुंयोगेतिङीष् । मानवीजातत्वात् । शोभिकाकर्तरि शुभेर्ण्वुल् । किञ्चनकिमपिधनादिर्यस्यनास्तिसोकिञ्चनः । मयूरव्यंसकादि त्वात्समासः।अङ्कइत्यल्पेकन्अल्पत्वंसङ्ख्याकृतं । यद्वास्वार्थिकःकन् २८

यथातथानाम गिरः किरन्तु ते श्रुतिः पुनर्मेत्रधिरेतदक्षरे ॥ पृषत्किशोरी कुरुतामसङ्गताङ्कथं मनोज्ञुष्टिमपिद्विपाधिपे ॥ २९ ॥

यथेति । तेदेवायथातथायेनतेनप्रकारेणाभिलाषेणवाकपयावरणविष येगिरोवाणीः किरन्तुविक्षिपन्तु नामसुखेनब्रुवन्तु तथापिमेश्रुतीकर्णौपु नस्तासांगिरामक्षरेएकस्मिन्नपिवर्णेविषयेबधिरेएकमप्यक्षरंनाकर्णयतः किं मुबहूनिकिन्तराञ्चार्थमित्यर्थः । श्रुतमप्यनुष्ठेयत्वादश्रुतमेवेत्यर्थः । दृ ष्टान्तमप्याह । हरिणस्यपृषतःकिशोरीबालापिहरिणी द्विपाधिपेए रावतेहस्तिश्रेष्ठेवाविषयेअसङ्गतां अयोग्यांमनोवृत्तिमपिइच्छामात्रमपि कुरुतांइच्छामपिनधारयतिनानुतिष्ठतीतिकिंवाच्यमित्यर्थः । पशुरपिवा लापिसतीयामृगीयोग्यायोग्यविभागंजानातिततोप्यहंकिमलं । तान्न वृणइतिभावः ॥ २९ ॥

अदोनिगद्यैवनतास्ययातयो श्रुतोलगित्वाभिहितालिरालपत् ॥ प्रविश्यपन्मेहृदयंह्रियाहतद्विनिर्यदाकर्णयतन्मुखाच्चना ॥ ३० ॥

अदइति । आलि काचित्सखीआलपदवोचत् । किंभूताम्अदोनिगद्य एवमुक्त्वैवनतालज्जावशात्नम्रमुख्याऽनयाश्रुतीलगित्वाऽभिहिता एववदेतिउक्ता । हेदूतत्वयंस्त्रियामेहृदयंप्रविश्ययदाहनब्रवीतित्वन्तत्नु खाध्वनानिर्यच्छन्निर्गच्छन्दाकर्णय । इयंलज्जयाकिमपिस्वयंवक्तुंनशक्नोति । मन्मनसिरहस्यंनिवेश्ययदाहतन्मयानूच्यतेनतुस्वस्फूर्त्याकिमप्युच्यतेतदाकर्णयेत्यर्थः ॥ ३० ॥

विभेमिचिन्तामपिकर्तुमीदृशी चिरायचित्तार्पितनैषधेश्वरा ॥ मृणालतन्तुच्छिदुरासती स्थितिर्लवादपित्रुट्यतिचापलात्किल ॥ ३१ ॥

बिभेमीति । यतोऽहञ्चिरायबहुकालंचित्तेऽर्पितोधृतोनिषधेश्वरःयमालज्जयाएवम्भूताईदृशीत्वन्द्रादीनयोनवृणोमीति चिन्तामपिविचारमपिकर्तुं बिभेमि भयप्राप्नोमिनिश्चयंकर्तुंकिमुत । मनोव्यापारेपिभयंकिंपुनःकायव्यापारेष्वपिशब्दार्थः । विचारोहिमानसोव्यापारोमनसश्चनलेनाधिष्ठितत्वादन्यविषयविचारस्यावकाशोपिनास्तीदृशीविचारेक्रियमाणेतस्यैमलः समाकर्णयेत्सर्वेश्वरः प्रभुस्तस्मादेवविचारयितुमपिबिभेमीत्यर्थः । मनसामलस्ववृतत्वान्नान्यवरणकथामपिकरोमीतिभावः । मनसैववृतोनतुसाक्षात्तस्मादन्यवरणविषयविचारेपिक्रियमाणेकिमितिभयमित्याशङ्क्याह । किसयस्मान्मृणालतन्तुवच्छिदुराक्षयस्वभावभिदुरासतीस्थितिः पतिव्रतामर्यादालवादपिअल्पादपिचापलात्त्रुट्यति । बिसतन्तुर्यथाहस्तस्पर्शमात्राच्छिद्यतेतथासाह्वीत्वादपिमनसायद्वरणत्स्यएवस्थायस्त्वादन्यविषयकथयापिसतीस्थितिर्भज्यतेतस्माद्भयंयुक्तमेवेतिभावः ॥ ३१ ॥

ममाशयःस्वप्नदशाश्रयापिवा नलभ्रिलङ्घ्येतरमस्पृशद्यदि ॥ कुतःपुनस्तत्रसमस्तसाक्षिणो निजैवबुद्धिर्विबुधैर्नपृच्छ्यते ॥ ३२ ॥

ममेति । वाशब्दोयदीत्यस्यानन्तरंसम्भावनार्थोद्रष्टव्यः । ममाशयोऽभिप्रायःस्वप्नदशायाःस्वप्नावस्थायाआश्रयापिवशेनेत्यर्थः । स्वप्नेवाज्ञातत्कृतोमोहस्तेनापिइतिवा नलम्विलङ्घ्यइतरंयदिवा अस्पृशत् । तर्हिविबुधैरिन्द्रादिभिःपण्डितैश्चतत्रवास्मिन्विषयेसमस्तसाक्षिणीसमस्तलोकवृत्त

साक्षात्कारिणीनिजाएवबुद्धिःकुतःपुनर्नपृच्छ्यते । स्वप्नदशायामपिनला दन्यंनचिन्तयामीतिसर्वज्ञत्वाद्देवा अपिजानन्तीतिभावः ॥ ३२ ॥

**अपिस्वमस्वप्नमसूषुपन्नमी परस्यदारानवेत्तु मेवमाम् ॥ स्वयन्दुरध्वार्णवनाविकाःकथं स्पृश न्तिविज्ञायहृदापितादृशीम् ॥ ३३ ॥**

निजैवबुद्धिःपृच्छ्यतामितिपूर्वमुक्तमिदानींस्वयमेवाह । अपीति अमीदेवाःपरस्यनलस्यदारान् स्त्रियमनवैतुमेवाज्ञातुमेवअस्वप्नमपिनिद्रारहितमपिस्वमात्मानमसूषुपन्निद्रापयन्तिस्म । देवास्त्वस्वप्नाः । अपिः सम्भावनायाम् । एतदर्थमेवास्वप्नंस्वमसूषुपन्नित्यहंसम्भावयामीत्यर्थः । अस्मिन्नर्थेगूढोपहासमन्यथानुपपत्तिंप्रमाणयति । स्वयमात्मनैवदुष्टोऽध्वादुरध्वःपरदाराभिलाषरूपःअमार्गःसएवार्णवस्तमुत्तारयितुंनाविकाः कर्णधारादुराचारप्रवृत्तजननिवारकाएव । एतादृशींपरस्त्रियंविज्ञायविशेषेण ज्ञात्वाहृदापिकथंस्पृशन्तुमनसापिपरस्त्रियंकथमिच्छन्तुअपि सदाचाराणाञ्ज्ञात्वैतत्कर्तुमनुचितमित्यर्थः । स्वप्नवशाद्देवाइत्थंतैर्मनसिबुद्धिपूर्वंकृतेतितेषांनदोषः । अन्यथायेऽन्याननुपदिशन्तितेस्वयंकथंपरदारान्वाञ्छन्तीतिभावः । एवंविधाअपिपरदारानभिलष्यन्तीत्युपहासः । समुद्रकर्णधारत्वेनतेस्पर्शनयोग्या अपिनजयन्तीतिसूचितम् । व्यध्वोदुरध्वोविपथइत्यमरः । असूषुपत्स्वपेर्ण्यन्तात्स्वापेश्चङीतिसम्प्रसारणम् । दुरध्व उपसर्गाद्ध्वनइत्यच् । नाविकाःतरतीत्यर्थेनौद्व्यचष्ठन्निति ठन् ॥ ३३ ॥

**अनुग्रहःकेवलएषमादृशे मनुष्यजन्मन्यपियन्म नोजने ॥ सचेद्विधेयस्तदमीतमेवमे प्रसद्यभिक्षां वितरीतुमीशताम् ॥ ३४ ॥**

अनुग्रहइति । मादृशेमनुष्यजन्मन्यपिमत्सदृशजनेयत्तेषांमनोऽनुरक्तमि त्यर्थोदेवकेवलन्तेषामनुग्रहः कृपातिशयत्वतोऽनुरक्तामसायोग्यत्वात्सो नुग्रहश्चेद्यदिविधेयःकर्तव्यस्तर्हिअमीदेवाःप्रसद्यप्रसन्नीभूयमेमह्यन्तमे वनलमेवभिक्षांवितरीतुन्दातुमीशतांसमर्थाभवन्तु अहन्तानेवनलंयाचे । तैःप्रसन्नीभूयनलएवदातव्योनत्वन्योऽभिलाषः । मनुष्याज्जन्मयस्येतिबहुव्रीहिः । अन्वादेशाभावात्तुत्यामादेशः । वितरीतुंवृतोवेतिइटोदीर्घः ॥३४॥

अपिद्रढीयः शृणु मे प्रतिश्रुतं सपीडयेत्पाणिमिमं नचेन्नृपः ॥ हुताशनोद्बन्धनवारिकारितां निजायुषस्तत्करवै स्ववैरिताम् ॥ ३५ ॥

नलावरणे स्वप्रतिज्ञामाह । अपीति अपिरन्यच्चेत्यर्थे । त्वं द्रढीयो दृढतरं ज्ञानाप्यनिराकार्यं मम प्रतिश्रुतं प्रतिज्ञातमपि शृणु । तदेवाह सनलो नृपः इमं पाणिं स्त्रेनापीडयेत् मदीयपाणिग्रहणं न कुर्यात् तर्हि हुताशनेन उद्बन्धनेन वारिणा च प्रयोज्यं न कारितां विधायितां निजायुषः स्वजीवितस्य स्वेना त्मना स्ववैरितां शत्रुतां करवै मनादृष्टवशादैवानुरोधाद्वा चेन्मां नलो नाङ्गीकुर्यात् तर्हि वह्न्यादिष्वन्यतमोपायेन स्वजीवितं त्यक्ष्यामि अन्यं न वृणोमि इति । पूर्वनिपातानित्यत्वं पूर्वोक्तं ज्ञातव्यम् । वारितामिति पाठे निषिद्धम् । अग्न्यादिभिर्मरणं निषिद्धं ॥ ३५ ॥

निषिद्धमप्याचरणीयमापदि क्रियासती नावति यत्र सर्वथा ॥ घनाम्बुना राजपथेतिपिच्छिले क्वचिद्बुधैरप्यपथेन गम्यते ॥ ३६

आत्मघातोनुचितइत्यतआह । निषिद्धमिति । यत्र यस्यामापदि सती श्रुत्याद्यविरोधिनी क्रिया सर्वथा केनापि प्रकारेणात्मानं नावति न रक्षति । तस्यामापदि स्त्यां निषिद्धमपि कर्माचरणीयमेवेति भावः । तदेवार्थान्तरन्यासेनाह । हि यस्मात् किं घनाम्बुना सान्द्रजलेन मेघजलेन वा राजपथे राजमार्गे पिच्छिले पङ्किले सति बुधैरपि पण्डितैरपि क्वचित् किञ्चिद्दुःखकृपथेन कापथेन गम्यते ऋजुमार्गस्य पङ्किलत्वाद्गत्यन्तराभावादमार्गगामित्वेपि न दोष इत्यर्थः । पिच्छलेलिपिच्छादित्वादिलच् । अपथेन पथोविज्ञायेति समासान्तः ॥ ३६ ॥

स्त्रियामया वाग्निमुतेषु शक्यते न जातु सम्यग्वितरीतुमुत्तरम् ॥ तदत्र मद्वापि न सूत्रपद्धतौ प्रबन्धतो स्तु प्रतिबन्धतानते ॥ ३७ ॥

स्रोक्तं निगमयन्तीदूतं प्रार्थयति । स्त्रिया मया वाग्मिषु पण्डितेषु देवेषु सम्यक् सन्तोषकारि उत्तरं जातु कदाचिदपि वितरीतुं दातुं न शक्यते यस्मादस्मा

स्यांममभाषितमेवसूत्रन्तस्यपद्धतीरचनातस्यांविषयेतेतव प्रबन्धताप्रबन्धकारीत्वं भाष्यकारित्वंवार्त्तिककारित्वंवास्तु । प्रतिबन्धृतातुदूषकत्वन्तु मास्तु । सूत्रप्रायंमद्वचनंस्वकल्पितैर्विवरणपदैः स्वोपस्कारङ्कृत्वादेया त्वयाबोधनीयाः । नतुमद्वचनेदूषणङ्कर्तव्यम् । यथाभाष्यकर्तासूत्रंसमर्थयतेनतुदूषयते । उभयत्रापितृअन्ताद्वन्येस्तल् । उपसर्गवशादर्थभेदः ३७

निरस्यदूतःस्मतथाविसर्जितःप्रियोक्तिरप्याहकटुक्षमक्षरम् ॥ कुतूहलेनेवमुहुःकुहूरवं विडम्बयाडिम्भेनपिकःप्रकोपितः ॥ ३८ ॥

निरस्येति । तथापूर्वोक्तप्रकारेणनिरस्यनिराकृत्यप्रियोक्तिरपिमधुरवचनोपिविसर्जितःप्रेषितः कटुध्वंसन्तापकरमक्षरंवक्ष्यमाणप्रकारेणाहस्मवदतिस्मकइव । डिम्भेनबालकेनमुहुर्मुहुःपुनःपुनःकुतूहलेनकौतुकेनकुहूरितिस्वंशब्दं विडम्ब्यअनुकृत्यप्रकर्षेणकोपितोमधुरवचनोपिकइव । तथातेनप्रकारेणप्रस्थापितोयथाप्रियवचनोपिपरुषवचनंब्रूतेस्मअथवायथाप्रस्थापितइत्यर्थः । इतिवायोजना । तथेतिवापाठः बालेनविडम्बितःपिकःकुपितःसन्परुषंरटतीतिभावः । सर्जसर्जनइत्यतःक्त.सचउपसर्गवशात्प्रेषणार्थः ॥ ३८ ॥

अहोमनस्त्वामनुतेपितन्वते त्वमप्यमीभ्योविमुखीतिकौतुकम् ॥ क्वानिधिर्निर्धनमेतिकिञ्चतंसत्राक्षपाठङ्घटयन्निरस्यति ॥ ३९ ॥

अहोइति । देवैमिअत्युत्तमास्तेपिदेवाअपि त्वामनुमनस्तन्वतेमानुषीत्वाअभिलषन्तिअहोआश्चर्यंमानुषीध्यतिहीनात्वमप्युत्तमेभ्योऽमीभ्योदेवेभ्योविमुखीपराङ्मुखीतिच आश्चर्यंअहोकौतुकमहदाश्चर्यमितिचोत्रयत्रयोजनीयम् । उत्तमोहीनामजिलषतीतिहीनातत्रनानुरज्यतेइतियुक्तंउत्तमेकामयमानेपिहीनातंनकामयतेतिकुत्रचिन्नदृष्टं । इतिमहदाश्चर्यम् । उत्तमायद्दिसर्वेपिस्पृहयन्तीतिभावः । एतदेवपरुषवचनम् । दृष्टान्तमाहनिधिर्महापद्मादिर्निर्धनंदरिद्रं क्वाकुतोपिदेवादायाति । किञ्चान्यच्चसदरिद्रः प्रतिषेधकत्वाद्वाग्रूपकपाटङ्घटयन्मत्समीपेत्वयानायन्तव्यमितिनिषेधवचनंब्रुवंस्तंनिधिंनिराकरोति । तादृगेतदित्यर्थः । निधिर्निर्धनमे

लिसवयाक्षपाटक्कृदयनसंनिरस्यतीतिक्षयाकुत्रवाटृष्टमित्यर्थोदपितुकुत्रचि क्षेतिवा । सवाक्कवाटमितिपाठः । निर्धनस्यनिधिनिराकरणंययानुचि तंतथादिगीशानान्त्वय्यनुरागोनुचितः कृतेप्यनुरागेत्वन्तत्रनातुरज्यसेइति महदनुचितमितिभावः ॥ ३९ ॥

सहाखिलस्त्रीषु वहेवहेलया महेन्द्ररागादगुरुमाद रन्त्वयि ॥ त्वमीदृशिस्त्रे यसिसंमुखेपित म्यराङ्मु खीचन्द्रमुखान्यत्रीवृतः ॥ ४० ॥

सहेति । हेचन्द्रमुखि महेन्द्रस्त्वय्यनुरागाद्धेतोरखिलस्त्रीषुइन्द्राणी प्रभृतिषुअवहेलयात्ववज्ञयासहत्वयियज्ञुरुमादरंतानंवहेधारयेइन्द्रस्त्व य्यनुरागत्वादन्यासुवाननुरागास्त्वदन्याकापिधन्यानास्तीतित्वामेवाहंमन्ये इतिभावः । ईदृशिइन्द्रस्वाराज्यप्राप्तिलक्षणेसंमुखेपित्वामनुस्वयमागच्छ त्यपिश्रेयसिकल्याणे विषयेपराङ्मुखीतदनङ्गीकुर्वाणात्वन्तानमादरंन्यवी वृतः ॥ व्याश्रयइत्यर्थः । त्वत्सदृशीकापिदुर्मतिर्नास्तीत्यर्थः । न्यवीवृ तःण्यन्तालुङिचङ् ॥ ४० ॥

दिवौकसङ्कामयतेनमानवी नवीनमश्रावितवान नादिदम् ॥ कथंनवादुर्ग्रहदोषएषते हितेनसम्यग्गु रुणापिशम्यते ॥ ४१ ॥

दिवौकसमिति मानवीदिवौकसमपिनकामयतेइतिइदंनवीनंअपूर्वं त्वाननान्मुखादश्राविश्रुतम् । उत्तमस्यवस्तुनोनभिलाषाच्चित्रमित्यर्थः एषमेदुर्ग्रहदोषोदुष्टग्रहलक्षणोदोषः सम्यगतिसराहितेनाप्तेनगुरुणापित्रा पिकथंवानशम्यतेनापनीयतेअग्रितुंअपनेतुमर्हः । अपत्यहितमिच्छता पित्राहिअपत्यग्रहोदुष्टःकेनाप्युपायेननिराकर्तव्यःसचतुनेतिइदन्त्वापिचि त्रमित्यर्थः । अथदुष्टग्रहाःशनैश्चरादयस्तज्जनितोदोषःपीडासम्यक्हिते नकेन्द्रस्थानस्थितत्वादनुकूलेतरेणगुरुणाबृहस्पतिनानीयतेचित्रम् । किं कुर्वन्तिग्रहाःसर्वेयदिकेन्द्रोबृहस्पतिरितिज्योर्विदः । सर्वथाआग्रहंपरित्य ज्यइन्द्रादिवन्यतमंवृणुत्रेतिभावः । अथचत्वद्गुरुणासंबन्धीदेवानामाग्रहोम न्त्रिणाबृहस्पतिनाकथंनशाम्यतेइतिचित्रम् । दिवौकसमितिपृषोदरादिः अद्भ्रवेपेणवृद्धिर्वा । नवीनंनवस्यनूत्नप्नपतनयनाद्येतिसःनूयादेशश्च ४१

कदाचिन्नारतम्यज्ञानंभविष्यतीत्यपिसंभाव्यमेपितवनतु कदाचित्तस्मात्मा दपित्वमूर्खतरेत्यर्थः । वस्तुशब्दयोर्यावदन्तरन्तावदिन्द्रनलयोरितिज्ञ·नी हीतिभावः । अयमेवात्राभिप्रायोज्ञातव्यः । ननु करभादुरु·करभोरुरि तिअस्मिन्नर्थेह्रस्वस्यगुणइतिगुणप्राप्तेः करभोरोइतिस्यात् । इतिशब्दस्या न्ययापत्तेश्च । तस्मात्पूर्वार्धार्थपरामर्शीइतिशब्दोहित्वर्थोज्ञातव्यः । स ञ्ज्ञापूर्वकोविधिरनित्यइतिह्रस्वसञ्ज्ञामाश्रित्यप्राप्तिकगुणाभावसमाधान कृत्वाकरभोरुइतिसम्बुद्ध्याह्वानपूर्वंकृथयासीतिवा । मनुष्यजातेर्विवक्षा विवक्षेइतिवामनाचार्यवचनात्करभादुरुः करभोरुरितिमनुष्यजातिविव क्षायामूङ्उतःस्यनदीत्वादम्बार्थेतिह्रस्वे ह्रस्वविधिसामर्थ्याद्गुणाभावेपसाधू क्तस्यकरभोरुपदस्यपूर्वंव्याख्यानेयोजनाकार्येतिवा । कंसुखंरातिददा तिइतिकरा करामायपयोस्तौकरभौद्वौनमान्येणयूनोमदनाद्वैतानन्दोदधी निमज्जयस्तावूरुयस्याइतिव्युत्पत्यावयेतावन्तंकालं प्रयुज्यमानकरभोरु इतिप्रातिपदिकन्त्वानिदानीकरभादुरुकम्वदेदितिवा नलाभिलाषुके तिलषपतेत्युकञिगम्यादीनामुपसङ्ख्यानमितिसमासः । विदुषीतिङीपः पचाद्यजन्तेऽनुपसर्गेपरेचरूपेतिह्रस्वः । पचादिषुपञ्चमेनिपाठसामर्थ्यादेव चवृद्धिगुणौनभवतः । करभादुरुरितियोगविभागात्समासः । वदेइतिज्ञा समोपेतिज्ञानेतङ् ॥ ४३ ॥

विहायहा सर्वसुपर्वनायक न्त्वयाधृतःकिंनरसाधि मभ्रमः॥ मुखंविमुच्यश्वसितस्यधारया वृथैवनासा पथधावनश्रमः ॥ ४४ ॥

विहायेति । हेभैमित्वयासर्वेसुपर्वाणोदेवास्तेषांनायकंस्वामिनमिन्द्रं विहायनरेमनुष्येसाधिमभ्रम·साधुत्वविषयःसाधुत्वलक्षणोभ्रम· अथच नलसाधिमभ्रमःकिम्भूतःहाकष्टमनुचितमेतत् । चकमर्थंलोकोत्त्याश्वा श्वसितस्यश्वासानिलस्यधारयापरंपरयामुखंविमुच्यमुखमार्गंविहायसुखरूपा मायासगमनोपायभूतं मुखमप्यपायनासापथेननासिकामार्गेणयद्वावनंशी घ्रगमनन्तज्जनितःश्रमःक्लेशोवृथैवयथाभूतस्तथात्वयेत्यर्थः । अथचेन्द्रवि हायतदपेक्षयाहीनस्यकिंनरस्यदेवयोनिविशेषस्येन्द्रापेक्षयासाधिमभ्रमो वृथा । अपचरलयोरभेदादवकारिस्ततोनरोमनुष्योनलखलस्मिन्निति । तथा

धृतइत्यपिपाठः । तस्मादेनंजनंपरित्यज्यमहेन्द्रोवरणीयइतिभावः । साधुशब्दःपृथ्वादिः ॥ ४४ ॥

तपोनलेजुह्वतिसूरयस्तनूर्दिवेफलायान्यजनुर्भविष्णवे ॥ करेपुनःकर्षतिसैवविह्वला बलादिवत्वामलसेनबालिशे ॥ ४५ ॥

तपोनलेइति । सूरयोबुधा अन्यद्यज्जनुर्जन्मतत्रभविष्णवेभाविनेदिवे स्वर्गलक्षणायफलाय तपोनलेचान्द्रायणादितपोरूपेअग्नौतनूःशरीराणिजुह्वतिप्रक्षिपन्ति । यदर्थंशरीरपीडामपिकृत्वातपोर्जयन्ति । सैवेन्द्रादिरूपस्वर्गःपुनस्त्वदनुरागवशाद्विह्वलासतीअस्मिन्नेवजन्मनित्वां बलादिव बलात्कारेणकरेधृत्वाआकर्षति । हेबालिशेऽज्ञेत्वंपुनर्नलमानाभिमुखीभवसिचित्रमित्यर्थः । कर्षतीवेतिवा । जन्मान्तरभाविफलार्थंबुधाःशरीरमपित्यजन्तिनचफलंप्रत्युतस्वः प्राप्त्यर्थंस्वयमेवसाभिलाषसदस्मिन्नेवजन्मन्येतच्छरीरसहितामेवत्वांस्वसमीपंनेतुमिच्छतित्वन्तुतत्संमुखीनभवसीति मूर्खतराबालिशइत्यनेनसूचितम् । अयहन्त्यपत्काइन्द्रादिमन्यतरंवृणीष्वेतिभावः । अज्ञेबालिशोइत्यमरः । जुह्वतिअदभ्यस्तादितिझेरत् । हुश्नुवोरितियणादेशः । भुवइष्णुच्छन्दसिविधानमितिवृत्तिकाराद्विवचनाद्भाषायांभवविष्णवइतिचिन्त्यम् । यद्वाभूष्णुर्भविष्णुर्जनिता । जगत्प्रभोरप्यसहिष्णुवैष्णवमित्यादिप्रामाणिकप्रायोगदर्शनाच्चेति । भुवश्चेतिकाराद्भुवश्छन्दसिचेतिचकारसंबध्यचकारमाहभाषायामपिक्वचिद्भवतीति व्याख्यानात्समर्थनीयकृत्यन्तरस्वागवेषणीयम् ॥ ४५ ॥

यदिस्वमुद्बन्धुमनाविनानलं भवेर्भवन्तीहरिरन्तरिक्षगाम् ॥ दिविस्थितानांप्रथितःपतिस्ततो हरिष्यतिन्यायमपेक्षतेहिकः ॥ ४६ ॥

हुताशनेवन्धनेत्यादियदुक्तंतत्श्लोकत्रयेणदूषयति । यदीति । त्वंनलंविनायदिस्वमात्मानंउद्बन्धुमनाभवेःतर्हिहरिरिन्द्रोऽन्तरिक्षगामन्तरिक्षगांसतींत्वांततः अन्तरिक्षाद्धरिष्यतिनेष्यतियस्माद्दिविस्थितानांअन्तरिक्षस्थानांपतिःस्वामीप्रथितःख्यातः । हियुक्तमेतत्किंन्यायादनपेतंस्वीयंभाग

मुपेक्षतेनाङ्गीकरोति । अपितुसर्वोप्यङ्गीकरोति । ततइतितद्व्यर्थेवा । न्यायंयंधर्मपथ्यर्थयेत् ॥ ४६ ॥

निवेक्ष्यसेयद्यनलेनलोज्झिता सुरेतदस्मिन्महती दयाधृता ॥ चिरादनेनार्थितयातिदुर्लभं स्वयन्त्व येवाङ्गयदङ्गमर्प्यते ॥ ४७ ॥

निवेक्ष्यसइति । नलेनोज्झिताअपरिणीतात्वंयदिअनलेऽग्नौनिवेक्ष्यसे आत्मानंक्षेप्स्यसितर्हिअस्मिन्सुरेवन्हौत्वयामहतीदयाकृता । यद्य स्मादङ्गहेअङ्गनेसि अनेनाग्निनाचिराद्बहुकालमार्थनयाकृत्वादुर्लभमङ्गंयदेव स्वयमर्प्यतेदीयते । यच्चिरकालयाचितमपिदुष्प्रापमङ्गदात्रास्वयमेवयदि दीयतेतत्रदयैवनिमित्तमितिज्ञायते । स्वयमेवस्वाङ्गदानात्त्वयागुर्वीदया कृतातर्हिवन्हिप्रवेशोपित्वयाकर्तुंनशक्यतइत्यर्थः । कस्मिन्कृतेकिंभविष्य तीतिनजानामीतिउपहासोऽङ्गेतिसंबुद्ध्यासूचितः ॥ ४७ ॥

जितञ्जितन्तत्खलुपाशपाणिना विनानलम्वारि यदिप्रवेक्ष्यसि ॥ तदात्वदाख्यान्वहिरप्यसूनयं प यःपतिर्वक्ष्यसिवक्ष्यतेतराम् ॥ ४८ ॥

जितमिति । हेभैमियदित्वंनलम्विनापूर्वोक्तदोषःद्गनलमपिविना वारिप्रवेक्ष्यसिवारिप्रवेशमनन्यंमरणोपायञ्चेत्करिष्यसितत् तर्हिखलुनि श्चितंपाशपाणिनावरुणेनजितंजितंअतितराञ्जितमित्यर्थः । अमेद्विरु क्तिः । अतिदुर्लभत्वस्यचिरेप्सितस्यस्वतएवागमनात्सर्वोत्कर्षेणाकृतमित्य र्थः । यतोसौपयःपतिस्तदात्वयिवारिप्रविष्टायांसत्यांत्वदाख्यान्त्वन्नाम काज्ञीयानसून्प्राणान्वहिरपिवक्ष्यसिहृदयेइत्यर्थः । वक्ष्यतेतरान्धारयिष्य सितराम् । इदानीमन्तःकरणेतावच्चिरकालंवहत्येवतदानीमालिङ्गनवशा द्बहिरपिवक्ष्यतेतराम् । अतस्तेनजितमित्यर्थः । अत्रपयःपतित्वमेवहेतुः अयमप्युपायःकर्तुंनशक्यतइत्यर्थः । वक्षसिवक्ष्यतेतरामित्यन्वयः । स तोवहिर्योगाभावात्पञ्चमी । अथवक्षोपेतमेववहिष्टं । वक्ष्यतेवहेःस्य रितेत्वात्कर्मण्यर्थेहोढइतिहस्यढत्वे षढोःकःसीतिकत्वे आदेशप्रत्यययो रितिषत्वम् ॥ ४८ ॥

करिष्यसे यद्यत एव दूषणा दुपायमन्यं विदुषी स्वमृत्यवे प्रियातिथिः स्वेन गता गृहान्वधं न धर्मराज श्चरितार्थयिष्यसि ॥ ४९ ॥

मरणोपायान्तरमप्यदूषयति । करिष्यस इति । हे दैमि त्वं अत एव दूषणादुक्तदूषणादिं मरणे इन्द्राद्यधीनत्वविष्यामीतिमत्वाद्दूषणाद्धिदुषी अन्योपायस्फुरणे प्रतिभानवती स्वमृत्यवे अन्यमुपायं कर्पूरभक्षणादिलक्षणं यदि चेत्करिष्यसे तर्हि स्वेन स्वयमेव गृहान्प्रत्यागता प्रिया प्राणेश्वरी अतिथिरूपा त्वं धर्मराजं यमं कथं न चरितार्थयिष्यसि कृतार्थं न करिष्यसीत्यर्थः । यमगृहे पि गन्तव्यमेव । स्वयं गृहागतायाश्च वरणेन दोषः । तस्मान्मरणे उपायान्तरमपि कर्तुं न शक्यम् इति भावः । विदुषि पूर्वोक्ते पक्षे दूषणे उपायान्तरं स्फुरति । गृहाः पुंसि च भूम्न्येवेत्यमरः ॥ ४९ ॥

निषेधवेषो विधिरेष तेऽथवा तवैव युक्ता खलु वाचि वक्रता ॥ विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः ॥ ५० ॥

तवाभिप्रायमजानानेनैव मया इन्द्रादीन्वृणुष्वेत्युक्तं त्वया तु नेति वचनभङ्ग्योक्तं । इदानीं त्वदभिप्रायो ज्ञात इत्याह । निषेधेति । अथवा इन्द्रादीन्न प्रवृणे इति यन्नेतर्वा निषेधो वेषो रूपं यस्य एतादृशो विधिरेव न वृणे इति यथाश्रुतार्थग्राहिणा मया पूर्वं न ज्ञातः । इदानीं वृणे इति विधिरेव ज्ञातः । लौकिकवचनरीतिरप्येवं निषेधे विधिप्रतीतिः कथमित्यत आह । खलु यस्मात्तवैव वाचि वक्रता युक्ता । वक्रोक्तिस्तव वचनविषयैव युक्तेत्यर्थः । एतदपि कुत इत्याशङ्क्याह । खलु यस्माद्यस्य ध्वनेर्ध्वनिसंज्ञकस्योत्तमकाव्यस्येदं निषेधे विधिरूपं किल प्रसिद्धं विजृम्भितं विलसितं तस्याकरः खनिरुत्पत्तिस्थानं विदग्धनारीवदनं चतुरवनितामुखं वक्रोक्त्यादिध्वनिविलसितं वक्तुं विदग्धनार्येव जानाति नत्वन्या त्वादृशी वक्रोक्त्यादि वक्तुं चतुरा नास्तीत्यर्थः । इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथित इति काव्यप्रकाशः । विस्पष्टङ्क्रियमाणाद्दक्लिष्टा स्वरविशेषतो भवति अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिरिति । तथा गार्पीत्यातुमिलोगतासि न पुनस्तत्साधनस्यान्तिकमिति । अत्र स्थाननिषेधे स्थानविधिः प्रियोपसरणविधौ तन्निषेध

इति तथाप्राणेशविश्वस्तिरियं मदीयातत्रैवनेयादिवसाः कियन्तः । कस्मात्प्रयोग्यस्त्विति रेचदेशः कलाहिमांशोरपितापयन्तीति । तत्रैवदिवसानेयाना नागन्तव्यमितिनिषेधोव्यज्यते । सन्निषेधोपिमदृश्याआगमनविधिरेव । यतस्त्वयात्मनोभर्तुर्विरहासहत्वमहृष्यासूचितं । इतिनिषेधवेषोविधिर्ज्ञातव्य । अन्यदपिपद्यान्तरसुधियाज्ञातव्यम् ॥ ५० ॥

भ्रमामि ते भैमि सरस्वतीरस प्रवाहचक्रेषु निपत्य क स्यन्दः ॥ अपाम पाकृत्य मनाक्कुरुस्फुटङ् कृतार्थनी यः कतमः सुरोत्तमः ॥ ५१ ॥

भ्रमामीति । हे भैमि अहन्तेतवसरस्वत्यारसोमाधुर्यन्तत्संबन्धी यश्चोस्माः प्रवाहचक्रेषु मध्येषु आवर्तरूपेषित्यर्थः । निपत्यकति कियन्तङ्कालप्रतियारान्वाभ्रमामि । आन्तोभवामि निषेधरूपेणोच्यतेविधिरूपेणवेतिनिश्चयाभावात् । कियत्कालंमयाभ्रमितव्यमित्यर्थः । अन्योपि नद्यादिप्रवाहावर्तेषु बहुवारंबहुकालम्भ्राम्यति । कुलालचक्रनिपतितोघटादिर्वा अपामअपाम्मनाक्ईषदपाकृत्यनिराकृत्यइन्द्रादिषुमध्येकतमःसुरोत्तमःस्वयम्वरत्वयाकृतार्थनीयः । इन्द्रोग्निर्यमोवरुणोवेति । अतएवस्फुटङ्कुरु । नामग्राहमेकंवृणोद्गतिकथयेत्यर्थः । मना गप्रकटकुर्विलिदा । कतिकालाध्वनोरितिकालवाचित्वेऽत्यन्तसंयोगेद्वितीयाप्रभुवचनान्तम् । सुरोत्तम पुरुषोत्तमवत् । द्विव्यतित्वाच्चतुर्णामपि सुरोत्तमत्व शेमीप्रत्याशिप्रायम्वा ॥ ५१ ॥

मतः किमैरावणकुम्भकैतव प्रगल्भपीनस्तनदिग्धवस्त्वं ॥ सहस्रनेत्रान्नपृथग्मतो मम त्वदङ्गलक्ष्मीमवगाहितुङ्क्षमः ॥ ५२ ॥

कतमइत्युक्ततदेवोपन्यस्यति । मतइति । ऐरावतकुम्भस्थलस्यकैतवेनव्याजेनतत्कुम्भ.वेवप्रगल्भौकठिनौपीनौमांसलौस्तनौयस्याःदिशः प्राच्या धव.पतिरिन्द्रस्त्वमतइष्टिवतः किप्रायेणएवकेवलत्वयाविचारितं स्यादित्यर्थ. । युक्तञ्चैतत् । त्वदङ्गलक्ष्मीन्त्वच्छरीरशोभामवगाहितुंसामस्त्येनेक्षितुंसहस्रनेत्रादिन्द्रात्पृथक् अन्योद्विनेत्रःममसतेक्षमोन । नेत्रद्वयेनत

वसौन्दर्यमिन्द्रष्टुंनशक्यतेइति सहस्रनेत्रत्वादिन्द्रएवतवसौन्दर्यंदर्शनयोग्य इतिममाप्ययमेवआशयइतिभावः तवमतोममतइत्यस्यवर्तमानइति कर्तरिषष्ठी । सहस्रनेत्रात्पृथग्विनेतिपञ्चमी ॥ ५२ ॥

प्रसीदतस्मैदमयन्तिसन्तत
न्त्वदङ्गसङ्गप्रभवैर्जग
त्प्रभुः पुलोमजालोचनतीक्ष्णकण्टकै स्तनून्घनामा
तनुतांसकण्टकैः ॥ ५३ ॥

प्रसीदेति । हेदमयन्तितस्मैइन्द्रायप्रसीदत्वंप्रसन्नाभवतंवृणुइत्यर्थः । अनन्तरंसजगत्प्रभुरिन्द्रस्त्वदङ्गसङ्गात्प्रभवोरेषान्तैःकण्टकरोमाञ्चैःकृत्वातनुंशरीरंसन्ततंसर्वदाघनानिबिडापरिपूर्णांतातनुताम् । किंभूतैःपुलोमजायाइन्द्राण्या लोचनयोरतितरांसोढुमशक्यत्वात्तीक्ष्णकण्टकैः असह्यकण्टकरूपैःसूच्यग्रतुल्यैःक्षुद्रशत्रुरूपैर्वा । त्वयावृतेसतीन्द्राणीपरित्यागेनत्वय्येवानुरक्तोभविष्यतीतिभावः । सपत्नीसुताम्भर्तुरङ्गगतान्क्रीडतोदृष्ट्वाअन्यस्यानेत्रयोःकण्टकविद्धवेदनाभवतीत्युक्तिः । सूच्यग्रेक्षुद्रशत्रौचरोमहर्षेचकण्टकइत्यमरः । तस्मैक्रिययामभिप्रैतिसम्प्रदानम् ॥ ५३ ॥

अबोधितत्वन्दहनेनुरज्यसे स्वयङ्खलुक्षत्रियगो
त्रजन्मनः ॥ विनातमोजस्विनमन्यतःकथं मनो
रथस्तेचलतेविलासिनि ॥ ५४ ॥

वह्निवरणेकारणमाह । अबोधीति । तंस्वयंअप्रवर्तितैवदहनेअग्नौअनुरज्यसेअनुरक्तासीतिमयात्वंपरमार्थोऽबोधिअज्ञाति । हेविलासिनिखलुयेस्मात्क्षत्रियाणाङ्गोत्रेवंशे जन्मयस्यास्तस्यास्तेतवमनोरथस्तमोजस्विनंवह्निंविनापरिहृत्यअन्यतः अन्यस्मिन्पुरुषेकथञ्चलतेअपितुअयोग्यत्वान्नयात्येव । तेजोहितेजस्येवानुरज्यते । त्वन्तेजस्विनीवह्निरपितेजस्वीतिवह्नावनुरक्तासीतियुक्तमितिमयाज्ञातमितिभावः । अन्यस्यापिक्षत्रियकुलोत्पन्नस्यमनश्चशीघ्रगामीरथस्तेजस्विनमन्यङ्क्षत्रियंविहायब्राह्मणादिषुनचलते । अनुरज्यतेश्यनोङित्त्वादपिअनिदितामितिनलोपः । अन्यतःसप्तम्यर्थेतसिः ॥ ५४ ॥

त्वयैकसत्यातनुतापशङ्कया ततोनिवर्त्यंनमनःक

थवचन॥ हिमोपमातस्यपरीक्षणक्षणेसतीपुनृत्तिः शतशोनिरूपिता ॥ ५५ ॥

त्वयेति । त्वादृगन्यपतिव्रताभावात्एकाचासौसतीचतयामुख्यपतिव्रतयात्वयातनोःशरीरस्यतापाद्दाहाद्हेहृदाहमयकुरिष्यतीतिशङ्कयाभियास त्तापभियाच ततस्तस्मादग्नेःसकाशात्कथञ्चनकेनापिप्रकारेणमनोननिवर्त्यंपरावर्तनीयं यस्मात्परीक्षणसमयेसाधुत्वासाधुत्वपरीक्षासमयेऽक्षणांस्फुगमनादिसम्भवेसतीदिव्यपतिव्रतापरीक्षासमयेतस्याग्नेर्वृत्तिः स्थितिः शतशोरामायणादौहिमोपमातुषारसदृशीनिरूपिताचदृष्टा चत्वङ्गादिस्वदीयशसःसतीष्विति ॥ ५५ ॥

सधर्मराजःखलुधर्मशीलया त्वयास्तिचित्रातिथितामवापितः ॥ ममापिसाधुः प्रतिभात्ययङ्क्रमश्चकास्तियोग्येनहियोग्यसंगमः ॥ ५६ ॥

यमवरणेकारणमाह । सधर्मेति । खलुनिश्चयेसम्भावनायांवा । सप्रसिद्धोधर्मराजोयमस्त्वयाचित्रस्यातिथिताङ्गोचरत्वंसमवापितः प्रापितोसितपोधर्मप्रधानंशीलयस्याधर्मशीलयत्यन्यस्यतिवास्वंभूतया धर्मशीलोहिधर्मशीलेएवानुरज्यतइति । अयङ्क्रमइयंपरिपाटीममापिसाधु.सनीचीनाप्रतिभाति । एतन्ममापिसम्मतं । हियस्मात्कुलशील दिभिर्योग्यस्तनेनसहयोग्यस्यैवसङ्गमश्चकास्तिनत्वयोग्येनयोग्यस्यतस्माद्धर्मराजेनधर्मशीलया.सवन्धोयुक्तइतिभावः । ५६ ॥

स्वजातविच्छेदलवैःस्मरोत्सवै रगस्त्यभासादिशिनिर्मलत्विषि॥ घृतात्रधिक्कालममृत्युशङ्किता निमेषयस्तेननयस्वकेलिभिः ॥ ५७ ॥

स्वजातेति । हेभैमि त्व अगस्त्यभासाअगस्त्यनक्षत्रदीप्त्यानिर्मलत्विषिउज्ज्वलकान्तौ सम्भोगयोग्यायांदक्षिणस्यांदिशि तेनयमेनसहनजातोविच्छेदलवोवियोगलेशोयेषुतैःस्मरोद्भवैःकेलिभिः कृत्वायमस्यैवपतित्वादमृत्युशङ्किनीमृत्युभयरहितासतीनिमेषवसंमुखमनुभवेतिभावः । स्मरोत्सवैरितिपाठेस्मरस्योत्सवरूपैःकामसंबन्धिभिरुत्सवैश्चुम्बनादिभिः त्वा

जातोऽविच्छेदलवैश्च स्नानादिनिरन्तरैरित्यर्थः । नयस्वेतिजित्वाःकर्तरयं भिप्रायेक्रियाफलेतङ् । नयेतिवा ॥ ५७

शिरीषमृद्वीवरुणाहकमीहसे पयःप्रकृत्यामृदुग्र गंत्रासवम् ॥ विहायसर्वान्वृणुतेस्मकिंनसा निशापिशीतांशुमनेनहेतुना ॥ ५८ ॥

वरुणवरणेकारणमाह । शिरीषेति । शिरीषमृद्वीशिरीषपुष्पवत्कोमला त्वं वरुणमीहसेइच्छसिकिमभिप्रायेणएवंसंभावयामि । यतःकिंभूतं । पयः प्रकृत्याउदकस्वभावेनपयोलक्षणयात्रकृत्योपादानकारणेनवा मृदुवर्गस्यम् दुवस्तुसमूहस्यवासवइन्द्रस्वामिनमित्यर्थः । किञ्चित्पार्थिवावयवस्याप्यशरीरस्य वरुणस्तोकेविग्रहानन्त्वादुमृदुत्वमतिरयर्थः । त्वमपिमृद्वीसोपिमृदुरिति उभयोर्योग्यत्वम् । दृष्टान्तेनतदेवोपपादयति । सातिशीतातिमृद्वीनिशापिअनेनमृदुतरत्वेनैवहेतुनासर्वांन्देवान्विहायशीतांशुचन्द्रं वृणुतेस्म अपितुवव्रे योग्यत्वादित्यर्थः । हेतुनेतिसर्वनामस्तृतीयाचेतितृतीया ५८

असेविमयस्यकदिवादिवानिशां श्रियःप्रियेणान णुरामणीयकः ॥ सहामुनातत्रपयःपयोनिधौ क्षीरोदरिक्रीडयथामनोरथम् ॥ ५९ ॥

असेवीति । त्वत्प्राचीःस्वर्गीयेन श्रियःप्रियेणनारायणेन अनणुमहद्रामणीयकंयस्यएवंभूतोयःक्षीरोदः दिवानिशांरात्रिन्दिवमसेवि । हेकृशोदरित्वंतत्रपयसोदुग्धस्यपयोनिधौतस्यतिस्वादसुनासहसाईयथा मनोरथं स्वेच्छयाक्रीडक्रीडाकुरु श्रीसहितोविष्णुर्यथातत्रक्रीडतितथात्वमपिअनेनसहेत्यर्थः । दिवानिशङ्कालाध्वनोरितिद्वितीया । यथामनोरथंयथासादृश्यइतिसमासः ॥ ५९ ॥

इतिस्फुटन्तद्वचसस्तयादरा त्सुरस्पृहारोपविडम्बनादपि ॥ कराङ्कसुप्तैककपोलकर्णया श्रुतञ्च तद्भाषितमश्रुतञ्चतत् ॥ ६० ॥

इतीति । कराङ्केहस्तक्रोडेसुप्तःस्थितएककपोलकर्णयस्याएवंविधयातत्तस्यदूतस्यइतिपूर्वोक्तंभाषितंश्रुतञ्चइन्द्रियपाटवात् अश्रुतमुतमनङ्गीका

रान्नश्रुतमितिभावः स्फुटमुत्प्रेक्षायां । अथवा हेतुः तस्य नलाकारस्य दूतस्य प्रादरं तदश्रुतम अथवा हेतुः कुरेषु इन्द्रादिषु स्पृहारोपोऽभिलाषारोपेन दूषा द्विष्वनाद्दूषणाद्श्रुतम् । पतिव्रतायानन्यान्याभिलापारोपवचनदुष्टमिति नाकर्णितमित्यर्थः ॥ ६० ॥

चिरादनध्यायमवाङ्मुखीमुखे ततः स्मसाधासय तिदमस्वसा ॥ कृतायतश्वासविमोक्षणाचतत् क्षणा द्वभाषे करुणं विचक्षणा ॥ ६१ ॥

चिरादिति । ततोनन्तरं सचिन्तत्वाद्वाङ्मुखीविचक्षणाद्वतुरासादन स्वसा भैमी मुखे चिरकालमनध्यायं वचनाभावं वासयतिस्म । मुहूर्तं तूष्णीं भूवेत्यर्थः । अथ पश्चात्कृतमायतं दीर्घं श्वासमोक्षणं यया सा अनन्तरं करुणं मुहूर्तादनन्तरं करुणरसप्रधानं वचनं करुणं यथा तथा वाचभाषे । अकरुणमिति यानिष्ठुरं तथा वचदित्यर्थं अन्तकदूतस्योचितमित्यादि वादस्यनात्वात् । अनादरम् पक्षमौनावाङ्मुखत्वदीर्घनिश्वासकरणादिष्वकर्णनिकाभिप्रायम् । अथवा वैवायीयातिसतितात्कालिकोनध्याय क्रियतं क्षणानन्तरं पुन पठ्यतेत द्वद्वाचेत्यर्थः । सचिन्तस्वजातिःस्वजावोवा । आध्यादन्यायेत्यादिना ध्यायशब्दः साधुः । वासयतेणिचर्थे तितङ् । अणावकर्मकादितिपरस्मै पदम् । अणौचित्तवत्कर्तृकत्वाभावात् अनध्यायस्य कर्तृत्वात् विचक्षणास्म नुदात्तेतश्चहलादेरितियुच् ॥ ६१ ॥

विभिन्दता दुःकृतिनीं ममश्रुतिं दिगीन्द्रदुर्वाचिकसूचिसंचयैः ॥ प्रयातजीवामिवमां प्रति स्फुटङ् कृतन्त्वयाप्यन्तकदूतनोचितम ॥ ६२ ॥

विभिन्दतेति । त्वयापिअतिसुन्दरेणानलतुल्याकारेणापि सताप्रति स्फुटं अन्तकदूतस्योचितं यमदूतोचितकर्मकृतम् । किम्भूतेनअ रोपितदिक्पाला भिलापवाणीसमाकर्णनादुद्दुष्कृतिनीं दुःकर्मकारिणीं श्रुतिः दिगिन्द्रा इन्द्रादिदिक्पालाःतेष दुर्वाचिकानिदुष्टसन्देशवचनानि तद्रूपैः सूचिरूपैः सूचिसङ्घैःकृत्वाविभिन्दतापीडयता अतएव प्रयाजीवामिवगतप्राणा मिव सुसंपापितकर्णसर्वत्र स्वाङ्गं सूचिसङ्घैर्यथायमदूतोयथानिष्ठुरपीडयति

षतुर्णामपिदूतत्वाद्यमदूतोचितमेवत्वयाकृतमित्यर्थः । अतिसुन्दरस्यवि शेषतोनलतुल्याकारस्यसौम्याकारस्यमांप्रतिअतिपीडाकारित्वमयुक्तमिति त्वयापीत्यपिनासूचितम् । अन्योपिबौद्धादिरदुष्कृतिनीन्दोषलेशरहितां श्रेयोरूपांश्रुतिंवेदन्दुष्टवचनैर्दूषयति । प्रयातोयातुमारब्धः प्रशब्दः आदि कर्मणि तत्रैवनिष्ठा ॥ ६२ ॥

**त्वदास्यनिर्यन्मदलीकदुर्यशो मषीमयंसल्लिपिरूप भागिव ॥ श्रुतिंममाविश्यभवद्दुरक्षरं सृजत्यदः कीटवदुत्कटारुजः ॥ ६३ ॥**

उक्तमेवअर्थंसोपस्करमाह । त्वदास्येति । अदोभवद्दुरक्षरन्त्वयोक्तं दुष्टमक्षरंममश्रुतिमाविश्यकीटवदुत्कटा दुःसहाः रुजः पीडाः सृजति । किंभूतं । तवास्यान्निर्यच्छन्निर्गच्छन् इन्द्राद्यनुरागरूपंमदलीकदुर्यशोरूपंम दीयमिथ्यापयशोरूपंमषीमयंमषीचञ्चुरसत् भवत् अतएवलिपिरूपभागि वलेखनस्वरूपंभजदिवसतीचासौलिपिश्चतद्रूपभाग्वा । कीटोयथाकर्णंप्र विश्यदुःसहांपीडाङ्करोति । अन्यदप्यक्षरंमषीभाजननिर्यन्मषीलिखितं लिपिरूपंभवति ॥ ६३ ॥

**तमालिरूचेथविदर्भजेरिता प्रगाढमौनव्रतयैकया सखी ॥ अपांसमाराधयतीयमन्यया भवन्तमाह स्वरसञ्ज्ञयामया ॥ ६४ ॥**

तमिती । अथविदर्भजेरिताभैमीप्रेरिताआलिः सखीतंऊचेदूत इ यंसखीभैमीप्रगाढमौनव्रतयादृढतरमौनलक्षणव्रतया एकयास्वरस्वरसञ्ज्ञ याजिह्वयाअपांसमाराधयतिभजते । अन्ययामयामद्रूपयास्वरसञ्ज्ञयाजि ह्वयाऽथचस्वरसंज्ञैरभिलापविषयज्ञानत्यामयाकृत्वाभवन्तमाह । इयं लज्जावशात्स्वाभिप्रायंत्वांसाक्षान्नबोधयति । तस्मादेतत्प्रेरिताहमेवद भिप्रायमेवब्रवीमितमाकर्णयेतिभावः । मयालक्ष्म्यासहवर्त्तमानस्तत्संबु द्धिःसमअभवन्तंनैमीविशेषणंवा । अन्योपिमौनीभूत्वाकाञ्चिद्देवताभा राधयति ॥ ६४ ॥

**तमर्चितुंमद्गुरुगत्स्वजानुपं स्वयम्वरःसम्भावितापरे**

द्यवि ॥ ममासुभिर्गन्तुमनाःपुरःसरै स्तदन्तरायः पुनरेषवासरः ॥ ६५ ॥ तदद्यविश्रम्यदयालुरेधिमे दिनंनिनीषामिभवद्विलोकिनी ॥ नखैःकिलाख्या यिविलिख्यपत्रिणातथैवरूपेणसमःसमात्प्रियः॥६६॥

किमाहेत्याह । समिति । तदद्येति । मद्वरणलज्जामदीयवरणनधूकमा सयाकृत्वा संनलनामानंनृपंअर्चितुपरेद्यविश्वःस्वयन्वरःसम्यक्भवितारष वासरःपुनस्तस्यस्वयम्वरस्यअन्तरायोविघ्नरूपःएतावानेवविलम्बोस्ति । किंभूतःपुरःएतद्दिवसात्पूर्वमेवगन्तुकामैर्ममासुभिः सहगन्तुमनाजिगमि षुः।अयन्दिवसःकथंनिर्विघ्नोयास्यतीतिचिन्तयाममप्राणाअतिव्याकुलाःय स्मात्तस्मादद्यविश्रम्यमेममत्वन्दयालुरेधिभव।त्वय्यत्रस्थितेसतिममप्राणा अपिस्थास्यन्तीत्यर्थः। नोचेत्तदेवाह । भवद्विलोकिनीभवन्तमवलोकय न्तीसतीयतंमामन्दिवसंनिनीषामिवा । अतिवाहयितुमिच्छामि । त्वदव लोकनवशात्प्राणधारणवशात्त्वयामत्कृपाकृताभविष्यतीतिभावः । पर पुरुषविलोकनेनकथंपातिव्रत्यन्तवेत्यतआह । किलयस्मात्पत्रिणाराजहं सेनमलिनीदलेनखैर्विलिख्य मत्प्रियोनलःतथैवरूपेणसमस्तुल्यस्त्वाहृग्यः सुन्दरःआख्यायिकथितः । तस्मात्तवनलाकारत्वात्तद्बुद्ध्यैवयत्त्वदव लोकनात्ममप्राणधारणम्।त्वद्दर्शनेनपातिव्रत्यक्षतिर्नास्तीत्यर्थः इदंश्लोक द्वयमेकान्वयि । अर्चितुमीवादिकस्यअर्थेतकपन् । सद्यःपरुत्परारीति परेद्यवीतिसाधुः । पुरःसरैःपुरोग्रतोयेप्रस्थितिदः ॥ ६५ ॥ ॥ ६६ ॥

दृशोर्द्वयीतेविधिनास्तिवञ्चिता मुखस्यलक्ष्मीत वयन्नवीक्षते ॥ असावपिश्वस्तदिमांनलाननेवि लोक्यसाफल्यमुपैतुजन्मनः ॥ ६७ ॥

अवस्थितौतवापिकिञ्चित्कार्यंस्यादित्याह । दृशोरिति । विधिनाब्रह्म णादैवेनवा तवदृशोर्द्वयीनेत्रद्वयीवञ्चितास्तीति । कथंयद्यस्मात्तवैवाति सुन्दरस्यलक्ष्मींशोभांनवीक्षते । आत्मनासाक्षादित्यर्थः । आदर्शादौतुप्र तिबिम्बस्यैवदर्शनात् । तस्मादसावपिनेत्रद्वयीश्वोनलाननमिमांत्वन्मु खशोभाम्विलोक्यजन्मनः साफल्यङ्कृतार्थत्वमुपैतु । सुन्दरवस्तुदर्शनेन

नेत्रयोःसाफल्यंभवति । तस्मादद्यात्रस्थित्वात्वन्नलमुखलक्ष्मीविलोकना
न्नेत्रसाफल्यंभविष्यतित्वन्मुखंनलमुखसदृशमितिभावः । अथचाह । अ
थवाहमेवेमांनलाननेदृष्ट्वाजन्मसाफल्यंलप्स्ये इति नकिंत्वसावपिलप्स्यते
इत्यपिशब्दार्थः ॥ ६७

**ममैवपाणीकरणेग्निसाक्षिकं प्रसङ्गसम्पादितमङ्ग सङ्गतम् ॥ नहासहाधीतिधृतःस्पृहाकथ न्तवार्यपुत्रीयमजर्यमर्जितुम् ॥ ६८ ॥**

कारणान्तरमप्याह । ममेति । अङ्गदूत ममपाणीकरणेएवविहायसम
यएव अग्निःसाक्षीयस्मिन्अग्निसाक्षिकंअग्निसमक्षं सङ्गतंमैत्रंअर्थाच्च
लेनसहत्वयाप्रसङ्गसम्पादितमनायासमर्जितंस्यादितिशेषः । अन्यार्थमा
गतेनापित्वयात्रस्थितेनप्रासङ्गिकी अग्निसाक्षित्वाद्दृढामलेनसहमैत्र्यपि
सम्पादितास्यात्तदर्थमप्यत्रस्थातव्यमित्यर्थः । तदीयमैत्र्यासक्तिरयो
जनमित्यतआह । हाखेदे । सहाधीतिधृतोलक्षणयाकुलशीलरूपादिना
सदृशस्तव आर्यपुत्रीयंविशिष्टकुलोत्पन्नवीरसेनसुतसंबन्धीअजर्यंमैत्रंअ
र्जितुंसम्पादयितुंस्पृहाऽभिलाषःकथंनअभिलाषःकर्तुंयुक्तः । सदृशयोः
मैत्रंभवति । श्रेष्ठेनसहमैत्रीप्रयत्नपूर्वंसम्पादनीयाइयन्त्वनायासेनलब्धा
परित्यक्तुंनयुक्तेतिभावः । इतिभिन्नवाक्यतयाऽन्वयः । एकवाक्येतुसङ्ग
तमैत्रमजर्यमविनश्वरमिति । अजर्यविशेषणंसङ्गतशब्दस्येतिवा । व्याख्या
नान्तरंदुर्योजत्वादुपेक्ष्यम् । पाणीकरणइतिनित्यंहस्तेपाणावुपयमनेइ
तिपाणावित्येवंरूपस्यनिपातस्यगतिसञ्ज्ञत्वात्समासः । आर्यपुत्रीयम् । वृ
द्धाच्छः । अजर्यंनञ्पूर्वस्यजीर्यतेःसङ्गतेकर्तर्यजर्यंसङ्गतमितिनिपातनात्सा
धुत्वम् ॥ ६८ ॥

**दिगीश्वरार्थंनकथञ्चनत्वया कदर्थनीयास्मिकृतो यमञ्जलिः ॥ प्रसाद्यतांनाद्यनिगाद्यमीदृश न्दधद्दृशीवाष्पपरयास्पदेभृशम् ॥ ६९ ॥**

पुनर्वागवसरायाह । दिगिति । त्वयाअस्मीत्यहन्दिगीश्वरार्थंकथञ्च
नकेनापि प्रकारेणतद्गुणादिनातेषुमदनुरागाध्यारोपणादिनाचनकदर्थनी

यानपीडनीया । अयमञ्जलिकृतः । प्रसद्यतांममोपरित्वयाप्रसन्नेनभूयतां अद्येदृशंदिक्पालविषयंकिञ्चिन्ननिगाद्यंनवाच्यं इदमेवतवप्रसन्नत्वम् । पूर्वोक्तेनैववाक्येनाह । दृशौभृशंबाष्पवयस्यअश्रुवेगस्यास्पदेआधारभूतेअश्रुवेगपरिपूर्णेइत्यर्थः । दधेधारयामि । विवाहोत्सवेविशेषतोनञ्जलस्याश्रुपातस्यनिषिद्धत्वान्मयाचाधः पतनभीत्यानेत्रयोरेवस्तंभितत्वादतःपरमपित्वयाकिमपिनवक्तव्यमित्यर्थः । निगाद्यंसोपसर्गत्वाद्वदमदेतियद्भावात्यपत् ॥ ६९ ॥

वृणोदिगीशानितिकाकथातथा त्वयीतिनेक्षेनलभामपीडया ॥ सतीव्रतेऽग्नौतृणयामिजीवितं स्मरस्तुकिंवस्तुतदस्तुभस्मयः ॥ ७० ॥

पातिव्रत्यप्रौढिप्रकाशनेनदूत्यानवसरंव्यनक्तिवृणोइति । अहन्दिगीशान्वृणोइतिकाकथावार्तात्वयाप्रवर्तिता त्वतोवृणोइतिमनस्यपिनधारयामीत्यर्थः याऽहंनलभामपिनलकान्तिमपिइहपुरोवर्तिनित्वयिपरपुरुषेवर्तमानाइतिकारणाद्यथानलेइवनेक्षेनपश्यामि । यद्वात्वयिपरपुरुषेनलकान्तिमपितथानलइवदृश्याकटाक्षविक्षेपादिचेष्टयानेक्षे । तथाऽननिर्वाच्यापीडयानइतानुरागेणतथातादृशींहंसलिखितदृष्टांनलभामपिनावलोकेइतिवा तादिगीशान्वृणाइतिकाकथा । एवंविधायाःपुरस्तान्नलसदृशस्यअन्यस्यपुरुषस्यकथाकर्तुंनयुक्ताकिंपुनर्नलासदृशस्य देवविषयंविषयंकिमपित्वयानवाच्यमित्यर्थः । कुमारिकयाकामिन्यास्त्वयानलप्राप्त्यभावेऽन्योपिवरणीयइत्यतआह । सतीव्रतेपतिव्रतरूपेऽग्नौअथवतीव्रतयासहवर्तमानेऽतिदारुणेवन्हौजीवितंप्राणानित्यर्थः । तृणयामितृणवत्करोमि नलप्राप्त्यभावेपिपातिव्रत्यात्यावदायुष्यञ्जीवितंनेष्यामिनत्वन्यं वृणाइति दिगीशान्वृणाइतिकावार्ता । वन्हौपतितंतृणक्षणादेवनश्यतियथातथा नलाभावेपातिव्रत्यवशाज्जीवितमपीतितृणपदेनसूचितम् । मदनप्राबल्यात्कथमन्यनवरिष्यसीत्याशंक्याह । स्मरस्तुपुनःकिम्वस्तुअस्तुकीदृग्वस्तुभवतुकिमितियः कामः हरनेत्राग्निजनितत्वात्प्रसिद्धंभस्मीभावरूपःपदार्थःकिमपिकर्तुंशक्नोति । कामस्तुअभावरूपत्वादन्यस्यापिकिमपिकर्तुंनशक्नोतिकिंपुनः पतिव्रतायाममेतिभावः । यःपुनःस्मरोभस्मतत्किंव

सुखमस्त्विति वा अन्वयः ॥ ७० ॥

न्यवेशि रत्नत्रितये जिनेन यः स धर्मचिन्तामणिरुज्
झितो यया ॥ कपालिकोपानलभस्मनः कृते तदेव भ
स्म स्वकुले स्तुतं त्वया ॥ ७१ ॥

मदनाधीनत्वे दोषमाह न्यवेशीति । जिनेन बुद्धेन यो धर्मचिन्तामणिर्ध र्मरूपश्चिन्तामणिः सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्रलक्षणे रत्नत्रितये न्यवेशि । चारित्रशब्दवाच्यो यः प्रक्षिप्तः सकलाभिलाषपूरकत्वात् पालितः स्थितः स धर्मरूपश्चिन्तामणिः यया स्त्रिया कपाली हरस्तस्य कोपलक्षणः अनलः अग्निः तस्य भस्मनः कामस्य कृते कामनिमित्तं उज्झितः परित्यक्तः तया स्वकुले तद्भस्मैव स्तुतं विस्तारितं धर्मत्यागो नाम स्वकुले तद्भस्मप्रक्षेपतुल्य इत्यर्थः । धर्मद्रोहिणा वात्स्येनापि यो धर्मः अङ्गीकृतः स मदनपीडितत्वेन यया परित्यज्यते तया स्वकुलं सकलङ्कमेव क्रियत इति मदनभीत्या पालिव्रत्यं परित्यक्ष्यामीति दुराशां माकृथा इति भावः । उन्मत्तेनापि भस्मार्थे चिन्तामणिर्न त्यज्यते । तथा यया त्यक्तस्तया स्ववंशे भस्मैव क्षिप्तमिति युक्तम् । तदुक्तं ज्ञानवृत्तानि धर्मं च सैव्यराजगुरिति बौद्धसिद्धान्ते रत्नत्रयमुक्तम् ॥ ७१ ॥

निपीय पीयूषरसौरसीरसौ गिरः स्वकन्दर्पहुताश
नाहुतीः ॥ कृतान्तदूतं न तया यथोदितं कृतान्तमेव
स्वममन्यतादयम् ॥ ७२ ॥

निपीयेति । असौ नलः पीयूषरसस्यौरस्यः पुत्र्यो मृतरसोत्पन्नाः तद्वदतिम धुराः अत एव स्वस्य नलस्य कन्दर्प एव हुताशोऽग्निस्तस्य आहुतीः उद्दीपकाः गिरः निपीय सादरमाकर्ण्य स्वमात्मानं तया भैम्या यथा येन प्रकारेणोदितमु क्तं कृतान्तदूतं यमदूतं न अमन्यत । किंतु अदयं निष्कृपं स्वं कृतान्तं यममे व अमन्यत । अनयोक्तं यमदूतत्वं तया प्रकटीकृतं इति तत्स्वरूपमुक्तं किंतु निर्दयत्वात् यम एवाहमित्यमन्यत । मादृशः कोऽपि निर्दयो नास्तीति स्वमा त्मानं निन्दितवानित्यर्थः । इन्द्रादिदूत्ये कृतेऽपि इन्द्रादिष्वननुरागात् अस्मिं स्तत्सत्त्वात् कामोद्दीपनत्वं युक्तं । औरसीः उरसा निर्मिता इत्यर्थे उरसोऽण् च इ त्यणन्तात् ङीप् ॥ ७२ ॥

सभिन्नमर्मापितदार्तिकाकुभिः स्वदूतधर्मान्नविर
न्तुमैहत ॥ शनैरशासीत्तु भृशं निःश्वसन्विचित्र
वाक्चित्रशिखण्डिनन्दनः ॥ ७३ ॥

सइति । तदर्ति स्तस्याव्यथातयाव्यथयाकाकुभिर्दीनवाक्यैर्भिन्नमर्मापि
सत्यकामोपिसःनल स्वदूतधर्मात्विरन्तुंनैहतनऐच्छत् । धीरोदात्तत्वा
त्स्वयमेववरीतुंनऐच्छदित्यर्थः । तर्हिकिंचकारइत्याह । भृशंतन्त्रयानशात
मितिगुरुंयथातथाकामपीडितत्वाद्विनिःश्वसन्शनैः पीडितत्वादेवमन्दं
अशासत्अबोधयत् ।यतोविचित्रवाचिनानाविधस्फूर्तियुक्तवाग्विषयेचित्रशि
खण्डिनन्दनोबृहस्पतिरिव । वाचस्पतिश्चित्रशिखण्डिजइत्यमरः ॥ ७३ ॥

दिवोधवस्त्वांयदिकल्पशाखिनह् कदापियाचेत
निजाङ्गणालयम् ॥ कथम्भवेरस्यनजीवितेश्वरा न
मोघयाच्ञःक्षितिभीरुभूरुहः ॥ ७४ ॥

दिवइति ॥ पूर्वसर्गेतैम्यान्देवानुरागप्रतिपादनेनसामोक्तास्मिन्सर्गे अ
हेनभस्त्वेत्यादित्रिःसप्तभिःश्लोकैर्देवानुग्रहज्ञापनेनदानमुक्तंयदिरुन्द्र
मित्यादिश्लोकचतुष्केणमदंप्रग्रथ्यंभेदंदण्डौप्रतिपादयिषुः उपायचतुष्टय
योगमाह । दिवइत्यादि श्लोकचतुष्टयेनभेदःप्रतिपाद्यते । हेभैमिदिवः
धवइन्द्रः निजाङ्गणमेवालयःस्थानंयस्यएवंभूतङ्कल्पशाखिनयदिचेत्कदा
पित्वयाभैमीमह्यन्दातव्येतियाचेततदाहेभीरुभयशीले अस्यइन्द्रस्यजीवि
तेश्वराप्राणेश्वरीकथंनभवेः । अभीष्टदःस्वामिनात्वयाचितःसदासन्निहित
श्चोस्मैत्वान्दास्यत्येवेतिभावः । हियस्मात्सभूरुहःकल्पवृक्षोमोघानिष्फला
याच्ञायस्यएवंभूतोनभवति । याचितमवश्यन्ददात्येव । निजाजिरालय
मितिवापाठः जीवितेश्वरेतिसमासोदिनेश्वरवज्ज्ञेयः । भीरुभियःक्रुक्लु
कनौ । ऊङुतइतिऊङ् ॥ ७४ ॥

शिखीविधायत्वदवाप्तिकामनां स्वयंहुतस्वात्मह
विःस्वमूर्त्तिषु ॥ कृतंविधत्तेयदिसात्वंकामिकङ् क
थंसमिथ्यास्तुविधिस्तुवैदिकः ॥ ७५ ॥

शिखीति । शिखीवह्निः त्वदवाप्तिकामनात्वत्प्राप्त्यभिलाषमभिधाय

स्वमूर्तिषुस्वावयवेष्वाहवनीयादिषुस्वयमात्मनैवहुतं अग्नयेस्वाहेत्यादि मन्त्रेणान्यैर्यजमानैर्दत्तंस्वांशभूतंहविर्येनैवंविधःसन्सार्वकामिकसर्वकामप्र योजनकंसर्वकामदातारमित्यर्थः। ऋतुंयदिविधत्सेवैदिकोविधिस्तुपुनर्मि थ्याऽसत्यःकथमस्तु। अन्येनानुष्ठितःयज्ञस्तस्मैसर्वान्कामान्ददातिकिंपुन र्वह्निनाऽनुष्ठितः तेनवह्नेस्त्वत्प्राप्तिर्भविष्यतीतिभावः। सार्वकामिकंप्र योजनइतिठञ् ॥ ७५ ॥

सदोतदाशामधितिष्ठतःकर म्बरंप्रदातुञ्चलिता द्बलादपि ॥ मुनेरगस्त्याद्वृणुतेसधर्मराड् यदित्व दाप्तिम्भणकातदागतिः ॥ ७६ ॥

सदेति । सधर्मराट्यमःअगस्त्यान्मुनेःसकाशाद्वर्गं नौमह्यन्देहीतित्व दाप्तिन्त्वत्प्राप्तिंयदिवृणुतेतदाकागतिःकःप्रकारः भणवदअपितुनकोपि किम्भूतात्सदोतदाशांयमदिशमधितिष्ठतः। तथातएववरमभीष्टलक्षणाश्रे ष्ठम्वाकरंराजग्राह्यं भागंयमायप्रदातुम्बलादपिस्वयमेवचलिताप्रवृत्तात्। यमदिशिवसतास्मैराज्ञेराजभागोऽवश्यन्देयइतिस्वयमेवविधायस्वयमेव दातुमागतेवत्वांयाचमानाययमायमुनिस्वारिकिञ्चिद्दातुंसमर्थेनागस्त्येनत्व मवश्यन्दातव्या। अगस्त्यनिवारकःकोपिनास्तीत्यर्थः। त्वदाप्तिमपिव लाद्यदिवृणुतेइतिवा। तदाशाअधिश्रीकितिकर्नत्वम् ॥ ७६ ॥

क्रतोःकृतेजाग्रतिवह्निकःकति प्रजोरपाम्वेश्मनि कामधेनवः ॥ त्वदर्थमेकामपियाचतेसचे त्प्रचेत सःपाणिगतेववर्त्तसे ॥ ७७ ॥

क्रतोरिति । इहैमेमिच्छपाम्पतेर्वरुणस्यवेश्मनिक्रतोःक्रतयागहविरर्थङ्क तिकतिसङ्ख्याकाःकामधेनवजाग्रतिसन्तीतिकोवेत्ति । अपितुइयत्तया ताःकोपिनजानातीत्यर्थः। ततःकिमतआह । सवरुणःभैमीमह्यन्दात व्येतित्वदर्थन्तासुमध्येएकामपिकामधेनुम्वेद्याचतेतर्हिप्रचेतसःवरुणस्यपा णिगतेवहस्तप्राप्तेवत्वंवर्त्तसे तस्माच्चतुर्षुमध्येसर्वथाएकोवरणीयोनान्यः प्रकारोस्तीतिभावः ॥ ७७ ॥

नसन्तिधात्रीयदिविघ्नसिद्धये पतिव्रतापत्युरनि

च्छयाशची ॥ सएवराजव्रजवैरसात्कृतः परस्प रस्पर्धिवरःस्वयम्वरः ॥ ७८ ॥

दयहमाह । नेति शचीइन्द्राणीभर्तुरन्यासक्तत्वेपिपतिव्रतापत्युरनि च्छयास्वकृतेनइन्द्राणादरेणइन्द्राण्याव्यतिरेकेणेत्यर्थः । विघ्नसिद्ध्येयदि नसन्निधात्रीनसन्निहिताभवेत् । नैमीस्वयम्वरेमत्नागमनात्विघ्नोभव तुइतितर्हिसतथस्वयम्वरएवराजव्रजस्यतदर्थंअन्योन्यस्पर्द्धन्द्वयुक्तस्यराज समूहस्यवैरसात्कलहात्मरणहेतोःकुतः । यतःपरस्परमन्योन्यंस्पर्धि नःवराः वरयितारोराजानोयत्रस्वयम्वरमभविष्यएवतिमत्प्राप्तिस्तुदूरतो निरस्तेत्यर्थः । विवाहेगौर्याःसान्निध्यंस्वयम्वरेशच्याःसान्निध्यमितीति हासात् ॥ ७८ ॥

निजस्यवृत्तान्तमजानतांमिथो मुखस्यरोषात्परु षाणिजल्पतः॥ मृधक्रिमच्छत्रकदण्डताण्डवं भु जाभुजिक्षोणिभृतान्दिदृक्षसे ॥ ७९ ॥

तमेवार्थंसप्रपञ्चमाह । निजस्येति । त्वक्षोणिभृतांराज्ञांभुजाभ्यांभु जाभ्यांप्रहृत्येदंयुद्धंप्रवृत्तंभुजाभुजि भग्नानांछत्राणांअच्छत्रकाणांदण्डानां तान्ताण्डवंयस्याक्रियायांएवंयथातथायुद्धंकिन्दिदृक्षसेद्रष्टुमिच्छसि । किं भूतानांराज्ञांरोषात्मिथोन्योन्यंपरुषाणिजल्पतःआक्रोशंकुर्वतः निजस्य स्वीयस्यमुखवृत्तान्तव्यापारंअजानतांकुंप्रतिकिमहंब्रवीमीतिअविदुषां । प्रायेणराजयुद्धदर्शिन्येवत्वंनतुस्वयम्वरार्थिनीत्यर्थः । शचीसन्निधानाभा वाच्छत्रभङ्गाश्वराजव्रजवैरसमेवभवेन्नतुस्वयम्वरइत्यर्थः । भुजाभुजितत्रते नेदमितिसमासेइच्कर्मव्यतिहारइतिइच् । अन्येषामपीतिदीर्घः । इच कत्तिष्ठद्वादिषुपाठादव्ययत्वम् । दिदृक्षसेज्ञाश्रुस्मृदृशांसनइतितङ् ॥७९॥

अपार्थयन्याजकफूत्कृतिश्रम ज्ज्वलेद्धुषाचेद्वपुषा पिनानलः ॥ अलंनलःकर्तुमनग्निसाक्षिकं विधिं विवाहेतवसारसाक्षिकम् ॥ ८० ॥

अपेति । अनलोग्निःयाजकानांपुरोधसांवन्हिसन्धुक्षणार्थंफूत्कृतिश्रमं अपार्थयन्व्यर्थीकुर्वन्स्वत्परुषाक्रोधेनैववेज्ज्वलेत् नतुवपुषाज्वालारूपेण

दीप्तोभवेत् । फूत्कृतेपित्वयानादृतत्वात्क्रोधवशात्सधूमएवभवेत्ज्वाला दीप्तस्तर्हिहेसारसाक्षिकमलनयने नलःअनग्निसाक्षिकंवह्निहलब्धसाक्षिरहितङ्कंविधिंलाजाहोमादिकङ्कर्तुंअलंसमर्थोभवेत् । एवंसतिकस्त्वंवरिष्यसीतिभावः । वैवाहिकोविधिरग्निसाक्षिकोनतुधूमसाक्षिकइत्यर्थः । सारसाक्षिकिमितिपाठेविधिङ्कर्तुंकिमलंअपितुनेत्यर्थः । अपिरेवार्थः ॥ ८० ॥

पतिम्वरायाःकुलजम्वरस्यवा यमःकमप्याचरिता तिथिंयदि ॥ कथंनगन्तात्रिफलीभविष्णुतां स्वयम्वरःसाध्विसमृद्धिमानपि ॥ ८१ ॥

पतिमिति । यमःपतिम्वरायाःतवकिमपिकुलजन्मवंशजंबधुवरस्यनलस्यवाकुलजंयदिचेत्अतिथिंआचरिताकश्चिन्मारयेदित्यर्थः । हेसाध्विपतिव्रतेतर्हिसमृद्धिमानपिस्वयम्वरोविफलीभविष्णुतांनिष्फलीभवनशीलत्वङ्कथंनगन्तानप्राप्स्यतिअपितुप्राप्स्यत्येव । मृतकाशौचमिनिमित्तात्प्रतिकूलाचनभवेदेवततःकस्त्वंवरिष्यसीतिभावः । पतिंवृणीतेपतिम्वरासञ्ज्ञायांनृतृवृजीतिखः । अरुर्द्विषदितिमुम् । भविष्णुःपूर्ववत् ॥ ८१ ॥

अपःप्रतिःस्वामितयाऽपरःसुरः सतानिषेधेद्यदि नैषधक्रुधा ॥ नलायलोभात्ततपाणयेपिते पिता कथन्त्वाम्वदसम्प्रदास्यते ८२ ॥

आपइति । अपरःअन्यःसुरःवरुणःअपःप्रतिलक्षीकृत्यस्वामितयाप्रभुत्वेनजलपतित्वेनत्वयास्वस्यानादरत्वान्नलस्यवावृतत्वात्किमित्तेनैवनलरोषेणकृत्वानलस्यत्वयान भवितव्यमितिबुद्ध्याभवतीभिस्सहनगन्तव्यमितिताःआपःयदिनिषेधेत्निवारयेत्तर्हितेपिताभीमः त्वदभिलाषेणत्वत्प्रतिग्रहायलोभात्ततपाणयेप्रसारितहस्तायनलायत्वाङ्कथंकेन प्रकारेणसम्प्रदास्यतेवदकथयनल न्तुलाभेनजलम्विनापित्वाम्प्रतिग्रहीष्यति सकथन्दास्यतीत्यपिशब्दार्थः । केनापिप्रकारेणतवनिस्तारोनेतिभावः । अपाम्पतिरित्यपिपाठः । गान्धर्वादिविवाहेतुकन्यादानेजलपूर्वत्वेस्मृत्यानिषिद्धेसत्यपिनैमी प्रतारणार्थंमेवमुक्तमितिज्ञेयम् ॥ ८२ ॥

इदंमहत्तेभाहितंमयाहित म्विहायमोहन्दमय

न्तिचिन्तय ॥ सुरेषुविघ्नैकपरेषु कोनरः करस्थ मप्यर्थमवाप्तुमीश्वरः ॥ ८३ ॥

इदमिति हे दमयन्ति मया इदन्ते तव महत् हितम् अभिहितं उक्तं । त्वमोहं विहाय चिन्तय । अनेन हितमुक्तं अभिहितमित्यादि विचारय । प्रतीकारा भावस्त्विवृणोति । कः नरः सुरेषु विघ्नैकपरेषु सत्सु करस्थं हस्तस्थितमपि अर्थं वस्तु अवाप्तुमीश्वरः समर्थो भवेत् । मनुष्येपि विघ्नपरे अन्येन प्रतिकर्त्तुं न शक्यते किं पुनर्देवेषु इति त्वं विचारयेति उत्तरार्धेनायोजना । एकशब्दः केवल पर्यायः ॥ ८३ ॥

इमागिरस्तस्यविचिन्त्यचेतसा तथेतिसम्प्रत्यय माससादसा ॥ अवारितावग्रहनीरनिर्झरे नभो नभस्यत्वमलंभयद्दृशौ ॥ ८४ ॥

इमाइति । सा भैमी तस्य नलस्य इमाः पूर्वोक्ताः गिरः चेतसा विचिन्त्य तथेति सुरेषु विघ्नैकपरेषु इत्यादि सत्यमेवेति सुसंप्रत्ययं विश्वासमाससाद प्राप यथा दृशौ नेत्रे नभो नभस्यत्वं बहुजलत्वात् श्रावणभाद्रपदत्वन्तु अलम्भयत् । प्रा पयामास । किंभूते । निवारितो निषिद्धोऽवग्रहो वर्षप्रतिबन्धो यस्य एवंविधो प्रतिहतप्रसरः नीरनिर्झरः जलप्रवाहो ययोः । बहुरोदनमित्यर्थः । श्राव णभाद्रपदयोर्वर्षप्रतिबन्धे जलवृष्टिर्न भवति तदभावे भवतीत्यनेन रोदनं सू- चितम् ॥ ८४ ॥

स्फुटोत्पलाभ्यामलिदम्पतीव त द्विलोचनाभ्याङ्कुचकुड्मलाशया ॥ निपत्यबिन्दूहृदिकज्जलाविलौ मणीवनीलौतरलौविरेजतुः ॥ ८५ ॥

स्फुटेति । कज्जलाविलौ कज्जलकलुषितौ अश्रुबिन्दू कुचकुड्मलाशयात् कुचरूपकलिकाभिलाषेण अलिदम्पतीव भ्रमरस्त्रीपुंसाविव स्फुटोत्पलाभ्यां विकसितकमलरूपाभ्यां सकाशात् हृदि निपत्य तरलौ स्फुरन्तौ हारमध्यवर्ति त्वयोग्यौ मणीव इन्द्रनीलमणीव रेजतुः । कज्जलकलुषितत्वात् स्थूलत्वाद्वर्तुलत्वात् स्फुटोत्पलतुल्यत्वम् नेत्रनिर्गमनात् कुचकोरकौ प्रत्यागमनाच्च पूर्वं बिन्दोरलिस्त्रीपुंसतुल्यत्वं । हृदिस्थितत्वाच्च हारसान्निध्यात् पश्चान्नीलमणि

तुल्यत्वंयुक्त नेत्रयोर्विकसितोत्पलतुल्यत्वम् । कुचयोः कुड्मलतुल्यत्वंस्वा भाविकम् । अलिश्रीपुंसीविकसितंकमलमुपभुज्यविकसिष्यत्कलिकाभि लाषिणौभवतः । अलितुल्यौइन्द्रनीलतुल्यौवाश्रुबिन्दूद्वंद्विनिपतिताबि तिभावः । द्वंदूदेहितिप्रगृह्यत्वस्यमणीवादेनेतिनिषेधात्सन्धिः । वस्तुत स्तद्वार्तिकमुनित्रयानुक्तत्वादप्रामाणिकमिति इवार्थकमवाशब्दयोर्विद्य मानत्वाद्त्रवशब्दस्याश्रयणम् ॥ ८५ ॥

धुतापतत्पुष्पशिलीमुखाशुगैः शुचेस्तदासीत्सर सीरसस्यया॥रयायबद्धादरयाश्रुधारया सनालनी लोत्पललोललोचना ॥ ८६ ॥

धुतेति ॥ सार्जेमीआपतन्तःआगच्छन्तःपुष्पशिलीमुखस्यकामस्याश्र शुगावाणास्तैःधुताकम्पितापीडितेतियावत् एवंभूतासतीतदाशुचेःरस स्यविप्रलम्भशृङ्गाररसस्यसरसीआसीत् । किंभूतारयायनिरन्तरप्रवृत्तयेबद्धा दरयाकृताभिनिवेशयाश्रुधारयाकृत्वा सनालंयन्नीलोत्पलंतद्वल्लोलायथो रेवंविधेलोचनेयस्या.सा अथचशुचेर्ग्रीष्मसंबन्धिनीरसस्यउदकस्यसरसीआ याश्रविवा । किंभूतासरसी । आपतन्तिआगच्छन्तिपुष्पाणियैस्तेशिली मुखाःभ्रमराःआशुगायायवस्तैर्धुताकम्पिता यद्वापतद्भिःपक्षिभिःहंसा दिभिःपुष्पसंबन्धीभिःपुष्पेषुस्थितैर्वाशिलीमुखैर्भ्रमरैः आशुगेनवायुनाच धुता । तथाग्रीष्मर्तावुदकस्याल्पत्वाद्दृश्यमाननालनीलोत्पलाजवति । अथचशुचेर्निर्मलस्यरसस्यग्रीष्मकालीनासरसीवभूव । अथकामवाणपीडि तत्वाच्छुचःशोकस्यरसस्यनदीवभूव । बहुरोदेतिभावः । नेत्रयोःस्वभा वेनचनीलोत्पलतुल्यत्वम् । अच्छिन्नाश्रुधारायाःनालद्वयतुल्यत्वम् । ग्रीष्म र्तावल्पजलत्वाद्वायुवशाच्चोद्दृश्यनीलोत्पलासरसीभवति । शुचिःशुद्धे ऽनुपहतेशृङ्गाराषाढयोःस्मृतः । ग्रीष्मेहुतवहेपीतिविश्वः । शुचेःशोकस्येति पक्षेशुकधातुनिर्देशे । रयायरयेणनिर्गन्तुंतुमर्थेतिचतुर्थी । रयेणायोनिर्गम नंतत्रबद्धादरयेति ॥ ८६ ॥

अथोद्भ्रमन्तीरुदतीगतक्षमा ससंभ्रमालुप्तरतिः स्खलन्मतिः ॥ व्यधात्प्रियप्राप्तिविघातनिघ्रया न्मृदूनिदूनापरिदेवितानिसा ८७ ॥

अथेति । अथसाभैमी कृदूनिश्रोतु करुणोत्पादकानिपरिदेवितानिवि लापवचनानिव्यधात् किंभूताप्रियस्यनलस्यप्राप्तेर्विघातःममनलप्राप्तिःस र्वथानभवित्रीतिनिश्चयात्दूनादुःखिता । तथाउन्मत्तोउन्मादवतीतथा रुदतीतथागताक्षमासहनशक्तिर्यस्याः साकिमपिरोदुधुनसमर्थाक्षणमपि जीवितुमसत्वातथासमन्नाऽधुनाममजीवननस्यात्दुःखरूपंवाभवेत्इति भयसहिता तथालुप्तरतिर्गतसुखा । तथास्खलन्तीकिङ्कर्तव्यतामूढामतिर्बु द्धिर्यस्याःसा । विप्रलम्भाख्यशृङ्गाररसपोषकंवचनमुवाचेत्यर्थः ॥ ७७ ॥

त्वरस्वपञ्चेषुहुताशभस्मन स्तनुप्लमद्भस्ममयंय शश्चयम् ॥ विधेपरेहाफलभक्षणव्रती पताद्यत्व प्यल्पसुभिर्ममाफलैः ॥ ८८ ॥

त्वरस्वेति । हेअतिसन्तापकत्वात्पञ्चेषुहुताशनकामाग्नेत्वन्त्वरस्व । सवेगोभव । मान्दग्धमानङ्गस्मरूपंआत्मनोयशश्चयंकीर्त्तिसमूहंतनुविवि स्तारयशीघ्रंमारयमास्मपीडयइतिभावः । कीवधेनत्वनन्वहाशोऽभविष्य तीतिसोपहासम् हेविधेधातःपरस्येहाइच्छातद्विपर्ययःफलंअभीष्टन्तस्यभ क्षणंअन्तरायकरणादनिष्टादमस्तदेवव्रतमस्यास्तीतिपराभिलाषहननेप्रव णशीलस्त्वं अद्यनलप्राप्तेरभावात्फलैर्व्यर्थैःममासुभिस्तृप्यन्मतअधोगच्छन रकंयाहीत्यर्थः । तवपरभक्षणव्रतनतुप्राणाप्रक्षणव्रतम् । कीवधजनिता त्पातकात्स्वर्गात्पतितोभवेत्याक्रोश । स्वलोपेनपतितोभवति । एतन्नान र्थकत्वात्प्रलापरूपम् ॥ ८८ ॥

भृशंवियोगानलतप्यमानकिं विलीयसेनत्वमयो मयंयदि ॥ स्मरेषुभिर्भेद्यनवज्रमप्यसि अवीषि नस्वान्तकथंनदीर्यसे ॥ ८९ ॥

भृशमिति । हेभृशंसुतरांस्वियोगानलतप्यमानस्वान्तहृदय-वंयदिअयो मयलोहरूपन्तर्हिकिंनविलीयसे । द्रवीभवसि । वह्निनाभृशन्तप्यमानं लोहंविलीयते । त्वन्तेतर्हिकिमितिनविलीयसे । नचविलीयसेतस्माल्लो हादपित्वमतिकठिनःत्य ।ः । हेस्मरेषुभिर्भेद्यत्वंवज्रमपिनासि । त्वन्तु पुष्पवाणैर्भेद्यत्वात्कथंनदीर्यसेनअवीषि । अपितुकथयेत्यर्थः । त्वयादिव

अमपि नासितदात्वङ्गत्र स्फुटमिति । तस्माद्गच्छमेवत्वमिति वा । दीर्घस्वरनेकृतंरितङ् ॥ ८९ ॥

बिलम्बसेजीवितकिन्द्रवद्रुत ज्वलत्यदस्तेहृदयं निकेतनम् ॥ जहासिनाद्यापिमृषासुखासिका मपूर्वमालस्यमहीतवेद्रुशम् ॥ ९० ॥

बिलम्बसइति । हेजीवितजीवकिम्बिलम्बसेकालक्षेपङ्करोषि । अपि तुमाकार्षीः । द्रुतंशीघ्रन्द्रवगच्छअदस्तेतवनिकेतनंनिवासस्थानंहृदयं ज्वलति । मदनाग्निनादह्यते । अद्यापिगृहेदह्यमानेपिमृषासुखासिकां सुखासनंनिश्चिन्तावस्थानंनजहासिनत्यजसि । अपितुत्यज । इंदृशेगृह ज्वलनेपिसुखासनरूपअपूर्वंलोकोत्तरन्तवेदमालस्यम् । अन्यस्तोप्यन्योगृ हेदह्यमानेसुखासनंहित्वापलाय्यगच्छति । त्वन्तुज्वलत्यपिगृहेबहिर्नति र्गच्छसि अन्तरेवतिष्ठसिएतत्तवलोकोत्तरकारिआलस्यमित्यर्थः । त्वयि निर्गतेममपीडानभवेत्तस्माच्छीघ्रंनिर्गच्छेतिभावः । आसिकात्यात्वर्थे निर्देशेण्वुल्वक्तव्यइतिण्वुल् ॥ ९० ॥

दृशौमहापातकिनोमनोरथाः कथंपृथूत्रामपिविप्रलेभिरे ॥ प्रियःश्रियःप्रेक्षणघातिपातकं स्वमश्रुभिःक्षालयतांशतंसमाः ॥ ९१ ॥

दृशाविति । हेदृशौ पातकिनःसर्वदालोकानांप्रतारकत्वात्पातकयु क्ताःमनोरथाःपृथूअपिवांयुवाअलीकेनकथंविप्रलेभिरेवञ्चितवन्तः युव योर्नलोस्माभिःप्रदर्श्यतइति असत्यरूपपातकोपेतावामपीतिवा । यु वाव्यर्थावामनोरथावा । अतिविशालयोरपियुवयोस्तैःप्रतारणाकृतेतिच्छ नुचितङ्कृतमित्यर्थः । विप्रलम्भकरणादपितेषांपातकित्वम् । पातकीह्यव श्यंपरम्प्रतारयति । अल्पोपिप्रतारयितुमनर्हःकिंपुनर्महानिति नलदर्श नयोग्यत्वञ्चपृथूइत्यनेनसूचितं । अणुत्वान्मनसोमनोरथैःप्रतारणायुक्ता युवान्तुपृथूअतःप्रतारणानुचितेतिवा । इदानींयुवाम्प्रियश्रियोनलशोभा याःप्रेक्षणघाति अवलोकनविघ्नकारिस्वंस्वीयंसहजंपातकंमनोरथसंसर्गज नितञ्च शतंसमायावज्जीवमित्यर्थः । अश्रुभिःक्षालयतांयावन्पातकन्ना यन्नलदर्शनंनेतिपातकंसर्वथानिराकुरुतमित्यर्थः । अन्यदपिमलिनमुदके

नबाल्यते । नलदर्शनंविनायावज्जीवंरोदनमेवयुवयोःप्राप्तमितिभावः । मृषानिकारखक्रीडास्विनाकथविप्रलेभिरे क्रीडायांविप्रलम्भोयुक्तइति वायोजनीयम् । यतंसमा-अत्यन्तसंयोगेद्वितीया ॥ ९१ ॥

प्रियञ्चमृत्युंनलभेत्वदीप्सित न्तदेवनस्यान्ममयत्त्वमिच्छसि ॥ वियोगमेवेच्छमनःप्रियेणमे तवप्रसादात्तभवत्वसौमम ॥ ९२ ॥

प्रियमिति । हेमनः अहन्त्वदीप्सितंप्रियंनलंनलभेतदभावेत्वदीप्सितं मृत्युञ्चनलभे किमितित्वंयन्ममेप्सितंइच्छसितदेवेप्सितंममस्यात् नैवम वेदितिवा । तस्मात्त्वप्रियेणनलेनसहमेवियोगमेवेच्छ एवंसतितवप्रसा द।न्ममासौवियोगोनभवतु । त्वंममाभिलषितंयद्यद्वाञ्छसितन्नभवति। एवंसतिवियोगमेवेच्छयथासन्नभवेदितित्वांप्रार्थये । असौममपूर्वायाः प्रथमायाविभाषेतिविकल्पान्मनादेशोन ॥ ९२ ॥

नकाकुवाक्यैरतिवाममङ्गज न्द्विषन्तुयाचेपवनन्तुदक्षिणम् ॥ दिशापिमद्भस्मकिरत्वयन्त्वया प्रियोयथावैरविधिर्वधावधिः ॥ ९३ ॥

नेति । द्विषन्तुविरहवैरिषुचन्द्रादिषुमध्ये काकुवचनैः कत्वाअङ्गजङ्ग मनयाचेनार्थये । यतोतिवाममतिसुन्दरमतिवक्रञ्च अतिक्रान्तावामाः स्त्रियोयेन स्त्रीवचनाकारिणञ्च वैरिणामनेकत्वेपिअतिप्रगल्भत्वात्द्वाव तीयाचनयोग्यत्वेमवस्मावितो कामोदक्षिणवायुश्चेति तत्रयाचनेदक्षिण त्वमेवउपयोगिनतुसौन्दर्यं मचप्रतिकूलत्वं मचस्त्रीकृतयाज्ञायांस्त्रीवचना कारित्वतिमिवैयाघ्र्यं मियाकामोयाचितुमयोग्यः । अथचरति-वामास्त्री यस अपचरतीप्रीतौवामंवक्रंविरहितत्वात्प्रीतिविरोधिनमित्यर्थः । त स्मात्काममनार्थये । तुपुनःकिन्तुदक्षिणंपवनंयाचे । यतःपरच्छन्दानुवर्ति नमुदारञ्चसरलमृजुगामिनञ्चमलयानिलन्दीनवचनैर्याचेदाक्षिण्येनोरन्म स्वारपरवचनकारित्वात्त्वयंवातत्वादृजुमार्गगामित्वात्पथिप्रत्वाञ्चमलया निलएवयाचितुंयोग्यइत्यर्थः अथचाङ्गजः पुत्रोपिअतिवक्रोनयाचितुमर्हः द्विषन्नप्येतैर्गुणैर्दक्षिणोयाचितुमर्हः दक्षिणहस्तस्यदानार्हत्वात्याचनयो ग्यत्वंवामहस्तस्यदानानर्हत्वान्नयाचनयोग्यत्वं यथातथाप्रकृतेपि । या

श्वगमाह । अयमलयानिलोयथादिशाप्रिशोनलोलक्षितश्चातः। यस्मान्दिशि वर्त्ततेतयादिशोपलक्षिनन्तस्यान्दिशिमङ्गस्यापिकिरतुक्षिपतु । दक्षिणानिलः कुण्डिनपुरादुत्तरस्यान्दिशिवर्त्तमानांनलराजधानींप्रतिमङ्गस्मनयत्वित्यर्थः । मरणानन्तरंमङ्गस्मनोनलसम्बन्धकुर्विति मलयानिलंप्रार्थयइत्यर्थः । एतच्चकामेनकर्तुमशक्यम् । वैरीत्वद्वचनंकथङ्करिष्यतीत्याशङ्क्याह यतोवैरविधिर्वैरकरणंबधावधिर्मरणावधिः । वैरंमरणपर्यवसायि । एतच्चक्रारेणांसर्वत्रसाधारणम् । दक्षिणात्वन्त्वसाधारणंइतिज्ञेयम् । मङ्गस्मनः नलेनसम्बन्धेसतिममधन्यत्वंस्यादितिभावः । दिशापीति यथास्थितैवयोजना । अङ्कजंरुधिरेऽनङ्गेकेशेपुत्रमदेङ्गजेइतिविश्वः ॥ ९३ ॥

अमूनिगच्छन्तियुगानिनक्षणः कियत्सहिष्येनहि
मृत्युरस्तिमे ॥ नमान्तुकान्तःस्फुटमन्तरुज्झिता
नतन्मनस्तन्नकायवायवः ॥ ९४ ॥

अमूनीति । अमूनिक्षणरूपाणियुगानिगच्छन्तिमत्यङ्गक्षणएकएवःकालः । अमूनियुगानिदुःखरूपाणिगच्छन्तिनक्षणएवरूपाणिगच्छन्तीति वा । एकएवक्षणःबहुयुगरूपतयागच्छतीत्यर्थः । सोपिनगतोवक्तएवेतिलटासूचितम् । कथयुगरूपत्वमित्याशङ्क्याह । कियत्किंपरिमाणदुःखमहसहिष्येअपितुतस्यावधिर्नास्तीत्यर्थः । जीवितावधिर्भविष्यतीत्यत आह । हियस्मान्मे मृत्युर्नास्ति । अतश्चदुःखावधेरभावात्क्षणस्यापियुगरूपत्वंयुक्तम् । मरणाभावःकथमित्यतआह । स्फुटयस्मान्निश्चितमाकान्तो नलस्तुपुनःअन्तःस्थूलशरीरमध्येअहंशब्दवाच्यंमामोज्झितानत्यजतिमनस्तंनलनत्यजति प्राणाख्याःकायवायवःतन्मनोनत्यजन्ति । एतावत्याः परम्परायाःअविच्छेदेकथंमरणंस्यादित्यर्थः । उज्झिताउज्झिष्यन्तिवा । बुद्धीन्द्रियाणिखलुपञ्चतथापराणिकर्मेन्द्रियाणिमनआदिचतुष्टयञ्च । प्राणादिपञ्चकमथोवियदादिकञ्चकामश्चकर्मचतमः पुनरष्टमीपूरितिवचनात् लिङ्गशरीरस्यचपलक्षकंसमस्तञ्चावल्लिङ्गशरीरन्तावत्स्थूलशरीरंनत्यजति । जीवेत्युत्क्रामतिइन्द्रियाण्युत्क्रामन्तिलिङ्गेचोत्क्रामतिस्थूलशरीरघाटक्षीणिकविच्छिद्यते । तथाचश्रुतिः । तमुत्क्रामन्तप्राणोनूत्क्रामति । प्राणमनूत्क्रामन्तंसर्वेप्राणाउत्क्रामन्तीति । ततश्चैतत्परम्परोत्क्रमणाभावेसर्वेषामनू

रक्षमण्यासावान्मरणाभावादित्यर्थः । अन्तरन्तःकरणे विद्यमानः कान्तोमां त्यजति अन्तःकरणस्थसंनत्यजतीति वा । यावज्जीवंनलेच्छानपगमान्मम प्राणत्यभावाच्चक्षणोपिमयादुरतिक्रमइतिभावः । उक्तिवात्मनुष्टुप् ॥ ९४ ॥

मदुग्रतापव्ययजन्मशीकरः सुरासवः केन पपे कृपा
र्णवः ॥ उदेति कोटिर्न मुदे मदुत्तमा किमाशु संकल्प्य
कणश्रमेण वः ॥ ९५ ॥

मदिति । हे सुरा वः प्रसिद्धः योयुष्माकंकृपार्णवः केनपपेपीतः । किंभूतः । ममउग्रतापोमलविरहजन्यः तस्यव्ययेनाशेन जन्मशीकरोबिन्दुमात्रंयस्य सः । एकोर्णवः अगस्त्येनपीतः अयमपि केनपीतः एतावन्मात्रकृपात्वमपिनास्ति कुरुधे इति कथयते इतिभावः । वोयुष्माकं नकृपकणश्रमेणापि इच्छालेशरूपेणश्रमेणाशु मदुत्तमा मत्सकाशाद्रूपादिभिरुत्तमा सुन्दरी अथवा स्त्रीणां कोटिर्नुदे युष्माकंप्रीतये किन्नोदेति जायते वर्धयतीत्यर्थः । भवतां कृपकणश्रमेण मत्तुल्यो नलवतमपिपर अताः स्त्रियः सुलभाइतिकारणान्मदभिलाषे निर्बन्धो नकार्यः भवद्भिरियमेवमदुपरिमहतीकृपा । स्त्रीलोभात्माकुरुतापमपरयेत्यर्थः ॥ ९५ ॥

ममैव चाहर्दिवमश्रुदुर्दिनैः प्रसह्य वर्षासु कृतीप्र
सज्जिते ॥ कथं न शृण्वन्तु सुषुप्य देवता भवत्वर
ण्येरुदितं न मे गिरः ॥ ९६ ॥

ममैवेति । अहर्निशंप्रत्यहंममैवाश्रुदुर्दिनैर्वा अविच्छिन्नाश्रुधारारूपमेघच्छन्नैर्दिवसैः प्रसह्यबलाद्वर्षासु कृतौवर्षर्तौप्रसज्जितेऽवर्तितेसतिदेवता इन्द्रादयोदेवाः स्वनिद्राकालत्वात्सुषुप्यसुप्त्वामेगिरः कथंनशृण्वन्तु । अत एवअरण्येरुदितंनभवतुमद्वाक्यमितिशेषः । अपितुभवत्वितिकाकुः । तेषांनिद्रितत्वात्मत्कोकादिवाक्यमरण्यरुदिततुल्यत्वाद्व्यर्थमेवेत्यर्थः । वर्षन्तु देवरजनीतिज्योतिःशास्त्रम् तस्यांचनिद्रायुक्ता यदिमयारोदनंनकृतंस्यात्तर्हिदुर्दिनत्वाभावाद्वर्षर्तुर्नस्यात् तस्मान्ममैवापराधइत्येवकारेणसूचितम् वर्षामुकृताविति अत्यकइति प्रकृतिभावः । सुषुप्यसुविनिदुष्वपइतिपत्व। अरण्येरुदितमित्यलोपइतिसमासः तत्पुरुषेकृतिबहुलमित्यलुक् ९६

इयंनतेनैषधदृक्पथातिथि स्त्वदेकतानस्यजनस्य
यातना ॥ हृदेहृदेहानकियन्नवेषितः सवेधसाऽ
गोपिखगोपिचक्रिय: ॥ १७ ॥

श्लोकद्वतुष्टयेनननसंप्रतिप्रलपति । हेनैषधत्वदेकतानस्यत्वदेकनिष्टस्य त्वदेकजीवनोपायस्येत्यर्थः । मममास्यजनस्यइयंयातनातीव्रवेदनातेदृक्पथातिथिर्नदृग्गोचरोनेतिप्रश्नकाकुः । हाकष्टम् । यइमांमदीयांवेदनांत्वांप्रतिचक्रिसखगोपिइंसोपिवेधसाब्रह्मणाऽगोपिआच्छादितः । गोपनेहेतुमाह । यतोहृदेहृदेकियत्कतिवारंनगवेषितोऽपितुबहुवारमन्विष्टोपिनदृश्यते । कुत्रचित्त्वयानगन्तव्यमितिब्रह्मणानिषिद्धःकदाचिन्मदीयावस्थान्तुभ्यन्नेत्कथयेत्तदातवदयोदयोभवेत् समास्त्वितिवेधसोवैधर्म्यमितिभावः । एकतानोनन्यवृत्तिरित्यमरः ॥ ९७ ॥

ममापिकिंनोदयसेदयाधन त्वदङ्घ्रिमग्नंयदिवे
त्यमन्मनः ॥ निमज्जयन्सन्तमसेपराशयं विधि
स्तुवाच्यःक्कतवागसःकथा ॥ १८ ॥

ममेति । हेदयाधननल त्वंममनोयदित्वदङ्घ्रिमग्नंत्वच्चरणशरणंयदिवेत्यजानासि । तर्हिममापिकिनोदयसेममाप्युपरिकृपाङ्किंनकरोषि । दयाधनत्वात्कुर्वित्यर्थः । कृपाकरणेतवापराधोनास्तीत्याह । तुपुनः । परस्याशयमन्तःकरणंसन्तमसेअज्ञानेनिमज्जयन् विधिर्दैववाच्यउपालब्धव्यस्तवागसोऽपराधस्यकथाक्व । तवापराधोनास्तिसनैवअदृष्टंतथाविधमित्यर्थः । तवान्तःकरणेहंसनिषेधद्वारामदु खबोधङ्कुर्वन्ब्रह्मैवोपालब्धव्योनतुत्वमित्यर्थंइतिवा । ममेतिअधीगर्थेतिकर्मणिषष्ठी सन्तमसमितिअवसमन्धेभ्यस्तमसइत्यच् ॥ ९८ ॥

कथावशेषन्तवसाकृतेगते त्युपैष्यतिश्रोत्रपथङ्क
थंनते ॥ दयाणुनोमांसमनुग्राहृष्यसे वदापितावद्यदिनाथनाधुना ॥ ११ ॥

कथेति । साजैमीतवकृतेकथावशेषंगतात्वयिअनुरक्तासतीत्वत्प्राप्त्याज्जन्मान्तरेपित्वत्प्राप्त्यर्थंमृतेतितेश्रोत्रपथङ्कथंनोपैष्यति । जनमुखा

ष्यसपिश्रोष्यस्येव । तदाश्रुतेपिकिमित्यतआह । हेनाथप्राणेशयद्यप्य
धुनामांनगृह्णासितथापितदापितस्मिन्नपिसमयेतावत्त्वयाणुनाकृपालेशो
नमासमनुग्रहीष्यसे । तावच्छब्दःसंभावनायाम् । मामदर्थंमृतेतितदायद्व
दिष्यसितेनैवकृपालेशेनाहंधन्याभविष्यामीतिभावः । अन्योपिस्वामीपू
र्वमननुगृह्णन्नपितदर्थंकृष्टान्दयांप्राप्तमनुगृह्णाति । ग्रहीष्यसेस्वरितेत्यात्त
त्र् ग्रहोलिटीतिदीर्घः ॥ ९९ ॥

ममादरीदस्त्विदरीतुमान्तर न्तदर्थिकल्पद्रुमकिं
चिदर्थये ॥ भिदांहृदिद्वारमवाप्यमेवमे हतासुभिः
प्राणसमःसमागमः ॥ १०० ॥

ममेति । ममेदमान्तरंहृदयंविदरीतुंस्फुटितुंयस्मात्त्वादरिसादरन्तत
स्मात्हेअर्थिनांकल्पद्रुम अहङ्किंचिदर्थयाचेकल्पवृक्षत्वात्त्वयातद्दातव्य
मित्यर्थः । किंतदित्याह । हृदिभिदांस्फुटनलक्षणान्द्वारंमार्गमवाप्य
मेहतैर्विनष्टैरथचनिष्फलैरसुभिःप्राणैःसमंसार्धंप्राणसमः प्राणप्रियःसत्वं
मागमः । प्राणानहृदयान्निष्क्रान्तुत्वंमागमः । जन्मान्तरेपिममत्वमेवप्राप्त
स्याभवितव्यमितित्वांप्रार्थयेइतिभावः । विदरीतुंवृतोवेतिदीर्घः ॥ १००

इतिप्रियाकाकुभिरुन्मिषद्भृश न्दिगीशदूत्येनहृ
दिस्थिरीकृतः ॥ नृपंसयोगेपिवियोगमन्मथः
क्षणन्तमुद्भ्रान्तमजीजनत्पुनः ॥ १०१ ॥

इतीति । दिगीशानान्दूत्येनहृदिअस्थिरोप्येतावन्तंस्थिरीकृतःतदर्श
नलक्षणेयोगेसत्यपिभैमीविषयोनलमन्मथइतिपूर्वोक्तैः प्रियायाःकाकुभि
र्दीनवचनैःकृत्वाभृशमुन्मिषन्नतितरामुद्बुद्धः सन्क्षणंतंनृपंपुनरुद्भ्रान्त
मतिशयेनभ्रान्तं अजीजनत्चकार । पूर्वमनेकवारंभ्रान्तःकृतएवेतिपुनः
शब्दार्थः । उन्मादवशात्सोपिप्रलपतिस्मेतिभावः सन्निहितामपिभैमींना
ज्ञासीदित्यपि ॥ १०१ ॥

महेन्द्रदूत्यादिसमस्तमात्मन स्ततःसविस्मृत्यम
नोरथस्थितैः ॥ क्रियाःप्रियायालपितैःकरम्बिता
विकल्पयन्नित्यनलीकमालपत् ॥ १०२ ॥

महेन्द्रेति। पूर्वमेवार्थं सोपस्कारमाह। स नलः ततोऽनन्तरं आत्मनः समस्तं महेन्द्रदूत्यादिस्वकर्तृकमिन्द्रदूत्यमादिशब्दाद्वरुण्यादिदूत्यं विस्मृत्य पूर्वं विप्रलंभावस्थायां मनोरथस्थितैर्मनोरथकल्पितैः करम्बिताभिर्मिश्रिताः प्रियायाभैम्याः क्रियाविलापचेष्टाः वितर्कयन्नानाप्रकारैरूतर्कयन् संभावयन्नुत्थं वक्ष्यमाणप्रकारेणालीकमबुद्धिपूर्वकमालपत् अवोचत्। उन्मादवशात्प्रणयकलहादिसंभावयन्भैमीं प्रतिप्रलपति स्मेति भावः ॥ १०२ ॥

अयि प्रिये कस्य कृते विलप्यते विलुप्यते हा मुखमस्रुविन्दुभिः ॥ पुरस्त्वया लोकि न मन्नयं नकि न्तिरश्चलल्लोचनलीलया नलः ॥ १०३ ॥

अयीति। अयि प्रिये कस्य कृते किमर्थं त्वया विलप्यते। अस्रुविन्दुभिः कर्तृभिः करणैर्वा कस्य कृते मुखं विलिप्यते व्याप्यते हा कष्टं अनङ्गलक्ष्मेणत्माका र्षीरित्यर्थः। तिरश्चलन्ती सदा कटाक्षावलोकनाभ्यासेन वक्रगामिनी लोचनलीला यस्याः एवंभूतया त्वया पुरोऽग्रे नमस्त्वत्पुरतः स्थितोऽनवमयं नलो नालोकि किमिति प्रश्नः। लोचनयोर्लीलया विलासेन कटाक्षेणेति वा। रोदनवशात्त्वया हं न ज्ञातः किमित्यर्थः। प्रणयकलहं परित्यज्य वरणपत्रितं नामवलोकनेनानुगृहाण। रोदनं मा कार्षीरिति भावः। अत्र कुपितत्वादेव रोदनं नेत्रयोर्वक्रगामित्वञ्च ॥ १०३ ॥

चकास्ति विन्दुच्युतकातिचातुरी घनास्रुविन्दुस्रुतिकैतवात्तव ॥ ससारतारास्त्रि ससारमात्मना तनोषि संसारमसंशयं यतः ॥ १०४ ॥

चकास्तीति। घनाः येऽस्रुविन्दवस्तेषां स्रुतिः स्रवणं तस्य कैतवात् व्याजात् तव विन्दुच्युतकाख्यस्य शब्दालङ्कारविशेषस्य विषया ऽतिचातुरी महती चातुरी चकास्ति। विन्दुच्युतकाख्यमलङ्कारं त्वं सम्यक् जानासि। अथ च विन्दूनां च्युतमेव च्युतकं तद्विषया ऽतिचातुरी घनास्रुविन्दुस्रुतिकैतवाच्छोभते। त्वादृशी कापि सम्यगलीकं रोदितुं न जानातीत्यर्थः। तदेवाह। हे ससारवदिन्द्रनीलवन्नीले स्निग्धे तारके कनीनिके ययोरेवंभूते अक्षिणी नेत्रे यस्याः तत्संबुद्धिः। यतो कारणात् त्वं असंशयं निश्चितं ससारं सकलं जगदात्मना ससारं तनोषि। विन्दो

रनुस्वारस्यच्यवनचातुर्योद्विलासानुस्वारस्यसंसारस्यससारत्वमनुस्वाररहि त्यङ्कथंकर्तुं शक्यमित्यमित्यर्थः अथचआत्मनासंसारंश्रेष्ठंवस्तुसहितङ्करोषि। अस्मिन्संसारेत्वादृशीकापिकुशलानास्तीतिअलीकरोदनङ्कर्त्तुंत्वमेवजाना सिनान्येत्यर्थः। अलीकरोदनेप्यतितराशोभसेइतिभावः। अनुस्वारच्य वनादर्थान्तरप्रतीतिर्यत्रतद्विन्दुच्युतकङ्कान्तोनयनानन्दीवालेन्दुःखेनभव तिसदेतितदुदाहरणम्। च्युतंनपुंसकेभावेक्तः। स्वार्थेकन्॥ १०४॥

अपास्तपाथोरुहिशायितङ्करे करोषिलीलाकम नङ्क्रिमाननम्॥ तनोषिहारङ्किंयदश्रुणःस्रुतै रदोषनिर्वासितनूपणेहृदि॥ १०५॥

अपास्तेति। अपास्तम्बिरहवशात्त्यक्तंपाथोरुहलीलाकमलंयेनएवंवि धेकरेशायितचिन्तावशात्स्थापितमाननंलीलाकमलक्किमितिकरोषि। नु खमेवलीलाकमलस्थानेजातमित्यर्थः। तन्माकुरु। लीलाकमलंगृहाण चिन्तामाकार्षीरितिभावः। तथाऽदोषाणिश्रासादिदोषरहितानि अथवा पराधनविनैवविरहवशान्निर्वासितानिभूषणानिमुक्ताहारादीनियेनतादृ शेहृदिअश्रुणःस्रवैरश्रुविन्दुभिः कियत्किंपरिमाणङ्कियंतत्कालंहारंमुक्ता हारन्तनोषि। अपितुबाससतानीः। अश्रुविन्दवःहारस्थानेभवन्तीत्यर्थः। तन्माकुरुभूषणान्यङ्गीकुरु। रोदनंमाकार्षीरितिभावः। अन्यत्रसापराधो ह्निर्वास्यतइतिदृष्टम्। कियत्क्रियाविशेषणत्वा॥ १०५॥

दृशोरमङ्गल्यमिदंमिलज्जलङ्करेणतावत्परिमा र्जयामिते॥ अथापराधम्भवदङ्घ्रिपङ्कजद्वयी रजोभिःसममात्ममौलिना॥ १०६॥

दृशोरिति। हेप्रेमिअहन्तावत्प्रथमतःकरेणकत्वातेतवदृशोर्नेत्रयोर्मि लत्सम्बद्धं निरन्तरङ्गलतइदममङ्गल्यं अशुभरूपञ्जलवाष्पंपरिमार्जयामिप्रो ञ्छामीत्यर्थः। अथपश्चाद्भवत्याअङ्घ्रिपङ्कजद्वय्याःरजोभिःसमंसहआत्म मौलिनास्वमस्तकेस्वीयंअपराधमपिप्रोञ्छामि। मत्कृतादपराधाद्यदिरो दिषितस्य मङ्गलरोदनंआदावपनेष्यामि। पश्चान्मस्तकेतवचरणरजोयाव ल्लगिष्यतितावत्तवचरणौशरणंप्रविश्यअपराधमप्यपनेष्यामि। प्रसन्नाभ

वेतिभावः । मङ्क्ष्यं अर्हार्येयत् । परिमार्जयामि । वर्त्तमानसामीप्येल ट् ॥ १०६ ॥

ममत्वदच्छाङ्घ्रिनखामृतद्युतेः किरीटमाणिक्यम यूखमञ्जरी ॥ उपासनामस्यकरोतुरोहिणी त्य जत्यजाकारणरोषणेरुषम् ॥ १०७ ॥

ममेति । हेजैमि ममरोहिणीरक्तवर्णा किरीटमाणिक्यमयूखानांमञ्जरी तुल्यादीर्घाकारादीप्तिः अस्यपुरोवर्तिनस्तवाच्छाङ्घ्रिनखलक्षणस्यअमृत द्युतेश्चन्द्रस्योपासनांसेवाङ्करोतु । हेजैमिनिष्कारणंरुष्यसीत्यकारणरोषणे प्रियेरोषन्त्यजत्यज । यदाऽहन्त्वच्चरणसेवकोस्मिकोपंमुञ्चमुञ्चेतिभावः । सौम्यस्यस्वामिनःसेवाकर्तुं शक्यानरोषणस्य । चन्द्रप्रियारोहिणीनामता रकाचन्द्रंसेवतेसमीपवर्तिनीचभवतीत्युचितमेव । रोहिणीतिवर्णादनुदा त्तादितिङीप्प्रत्ययः । त्यजत्यजेतिसंभ्रमेणनित्यवीप्सयोरितिद्विरुक्तिः रोष णेतिक्रुधमण्डार्थेभ्यश्चेतियुच् ॥ १०७ ॥

तनोषिमानंमयिचेदनागसि त्वयिप्रयेतद्बहुमान मानतः ॥ विनम्यवक्रंयदिमन्यसेकिय न्मामिते चापिहतदापदावधि ॥ १०८ ॥

तनोषीति त्वंमयिमनागपिअल्पमपिमानंचेत्तनोषिकरोषितर्हिंआ नतोनम्रःसन्नहंत्वयि बहुमानंमहतींपूजांमानापनयनार्थंप्रयेक्ष्ये स्त्रीणामी र्ष्याकृतः कोपोमानोऽन्यासंङ्गिनिप्रियेइति चपिहकोपनेरोषवशाद्वक्रंकिय दल्पमेवविनम्यनम्रीकृत्ययदिचेद्वर्त्तसेतदातर्हिंतेतवपदावधिचरणपर्य न्तंनमामिदण्डवन्नमस्कारेणरोषशेषमपनेष्यामि बहुमानेन अल्पंमानंब हुमाननमनेनचाल्पंनमनमपनेष्यामीतिभावः । विनम्यविनमय्येत्यन्तर्भावि तण्यर्थेद्रष्टव्यम् ॥ १०८ ॥

प्रभुत्वभूम्नानुगृहाणवानवा प्रणाममात्राधिगमे पिकःश्रमः ॥ कृयाचताङ्घ्रिपल्लतासिमांप्रति क्षिट् ष्टिदानेतवबद्धमुष्टिता ॥ १०९ ॥

प्रभुत्वेति । मज्जीवितस्यत्वदधीनत्वान्मांप्रतितवप्रभुत्वसद्भावात्प्रभु

त्वस्यप्रभुत्वयस्तेनूनंबाबहुत्वे नअनुगृहाणममानुग्रहंकुरु । अथवामांअनुगृहाण । परंप्रणाममात्राधिगमेपिमदीयकेवलप्रणामाङ्गीकारेपितवकःश्रमःप्रयासःप्रजु स्वेच्छयासेवकङ्कदाचिदनुगृह्णातिकदाचिन्नेतियद्यप्यस्तितथापिप्रणाममङ्गीकरोतिस्वन्तुनेतिमयाकिमपराद्धमितिकथयेतिभावः । स्वंयाचतोअभिलाषपूरणासमर्थत्वात्कल्पसतासीतिक्वमां प्रतिदृष्टिदानेपिअवलोकनमात्रेपितवबद्धमुष्टिताकृपणत्वंइतिक्वापितुउभयमेतन्मिथोविरुद्धम् । कटाक्षावलोकनमात्रेणमामनुगृहाणेतिभावः ॥ १०९ ॥

स्मरेषुमाथं सहसेमृदुःकथं हृदिद्रढीयःकुचसंवृतेतव निपत्यवैसारिणकेतनस्यवा व्रजन्तिवाणाविमुखोत्पतिष्णुताम् ॥ ११० ॥

स्मरेष्विति । हेमैमीमृदुरतिमृद्वीत्वंस्मरेषुनाथक्लानवाणव्यथाङ्कथंसहसिकामपीडाअसह्येतिकत्वाअतिमानन्त्यजेतिभावः वापूर्वपक्षापरितोषे । अथवावैसारिणकेतनस्यमकरध्वजस्यकामस्यवाणास्तवद्रढीयांसौदृढतरौकुचौताभ्यांसंवृतेहृदिनिपत्यलगित्वातत्रानिमज्यैवविमुखाश्चतेउत्पतिष्णवश्चतेषांभावस्तत्ताताम्पराङ्मुखोत्पतनशीलत्वंव्रजन्ति । पाषाणादौबाणोनिपत्यतत्रानिमज्यैवपराङ्मुखस्सन्नुच्छलतिसद्वत् । तवकामबाणपीडानभवतीतियुक्तमितिभावः । कुतस्त्वाहस्त्ववाणपीडानभवति । मीनोवैसारिणोझषइत्यमरः । विसारिणोमत्स्यइतिअण् ॥ ११० ॥

स्मितस्यसंभावयसृक्किणाकणान्विधेहिलीलाञ्चलमञ्चलंभ्रुवः ॥ अपाङ्गरथ्यापथिकीञ्चहेलया प्रसद्यसन्धेहिदृशंममोपरि ॥ १११ ॥

स्मितस्येति । हेमैमित्वंसृक्किणाओष्ठप्रान्तेन स्मितस्यहासस्यकणान्लेशान्संभावयधन्यान्कुरु । तथाभ्रुवोञ्चलंप्रान्तंलीलयाविलासेनचलम्विधेहि । तथाअपाङ्गरथ्यायाःनेत्रप्रान्तवर्गस्यपथिकीनित्यचारिणींदृशम्प्रसद्यप्रसन्नीभूयहेलयाविलासेनममोपरिसन्धेहि । स्मितभ्रूचलनपूर्वंप्रसन्नामांसविलासङ्कृपाकटाक्षैर्विलोकयेतिभावः । पथिकीपथकन्षित्वान्ङीप् उपर्युपरिष्टादित्यतसर्थत्वादुपरियोगेषष्ठ्यतसर्थेतिममेतिषष्ठी ॥ १११ ॥

**समापयप्रावृषमस्त्रुविप्रुषां स्मितेनविश्राणयकौमुदीमुदः ॥ दृशावितःखेलतुखञ्जनद्वयी विकासिपङ्केरुहमस्तुतेमुखम् ॥ ११२ ॥**

समापयेति । त्वं अविच्छिन्नत्वावित्वादश्रुविप्रुषांअश्रुविन्दूनांप्रावृषंसमापय । तथाअत्युज्ज्वलत्वादत्याह्लादकत्वाच्चस्मितेनकौमुदीमुदःचन्द्रसंबन्धिनोहर्षान् विश्राणयसद्य वितर तथातिचञ्चलत्वात्खञ्जनाकारत्वाच्चदृशावेवखञ्जनद्वयीइतोमत्सम्मुखेऽस्मिञ्जनेखेलतु समीपरिक्रीडतु । तथालक्ष्मीस्थानत्वाद्वर्तुलत्वाच्चतेमुखंविकासिविकस्वरंपङ्केरुहंकमलमस्तुभवतु । रोदनन्त्यक्त्वाप्रसन्नीभूत्वास्मितपूर्वककटाक्षविलोकनपूर्वकंकिंचिद्ब्रूहीतिभावः । प्रावृषिगतायांशरदिकौमुदीमुदःखञ्जनक्रीडाकमलविकासश्चभवति ॥ ११२ ॥

**सुधारसोद्वेलनकेलिनक्षरः स्रजासृजान्तर्ममकर्णकूपयोः ॥ दृशौमदीयेमदिराक्षिकारय स्मितश्रिया पायसपारणाविधिम् ॥ ११३ ॥**

सुधेति । हेभैमि ममकर्णकूपयोरन्तर्मध्येअक्षरस्रजावर्णमालयावाक्यरचनयाकृत्वा सुधारस्यामृतरसस्योद्वेलमर्यादातिक्रमःकेलिःक्रीडातांसृजरचय । अतिमधुरवागमृतपूर्णाविधेहि । किमपिब्रूहीतिभावः । कूपश्चब्दोत्रजलाशयाभिप्रायः । ततश्चवाप्यादौस्वादूदकेनयथातीरमतिक्रम्यतेतथाक्रीडाक्रियतेइतिचोक्तिः मदयतइतिमदिरेउन्मादजनकेअक्षिणीयस्यास्तत्संबुद्धिर्हेमदिराक्षि मदीयेदृशौस्त्वीयस्मितश्रियाकृत्वापायसेनदुग्धसंस्कृतपायसेनकृत्वायापारणाउपवासानन्तरंभोजनन्तस्यविधिङ्कारय । स्मितस्यशुक्लत्वात्पायसत्वम् । उपोषितस्यपायसपारणयायथातृप्तिस्तथात्वदीयस्मितशोभावलोकनेनमन्नेत्रयोरितिस्मितपूर्वकिमपिब्रूहि । मामनुगृहाणेतिभावः । उद्गतोवेलामुद्वेलांअत्यादयइतिसमासः । तस्यकरणमुद्वेलनम् । मदिरेत्यत्रइषिमदीत्यादिनाऔणादिकःकिरन्प्रत्ययः। रामायणेनायौमदिरलोचनाः । दृशौदृक्शोरन्यतरस्यामित्यणौकर्तुर्णौकर्मत्वम् । परमान्नन्तुपायसमित्यमरः संस्कृतार्थेऽण् ॥ ११३ ॥

ममासनार्धंभवमण्डनंभव प्रियेमदुत्सङ्गविभूषणं भव ॥ प्रमादप्रमादालपमङ्गमृष्यतां त्वयाविनाममा रःकृतमन्तआसनम् ॥ ११४ ॥

ममेति । हेप्रियेममासनार्धेसिंहासनार्धेमण्डनंअलङ्कारणंभव । आसन स्यार्धेत्यर्थात् । एवंननअविचार्यमयैतदुक्तंकिंतुत्वंमदुत्सङ्गविभूषणंभवम माङ्कमण्डयेत्यर्थः । अङ्कापेक्षयाअर्धासनस्यनिकृष्टत्वात्तवचातिप्रियत्वा न्ममाङ्कएवउपवेशनयोग्यइतिभावः । भोअङ्गअहंइतिएतदुन्नमादुन्मादव शादालपम् । त्वयामृष्यतांक्षम्यताम् । यतोममस्मरोविनाकृतमन्तअङ्कन्त वासनंभवितुंयुक्तोऽपितुनकिमपि । अङ्कापेक्षयापिवक्षसउत्कृष्टत्वात्तत्रै वोपविश्यतामितिभावः । क्षमायाचनोपराधःक्षन्तुमर्हः । अङ्गेतिकोमल । स म्बोधने । न्मनादुन्मनमितिचपाठः । मतुन्मनादुन्मनादितिसंज्ञनेद्विरुक्तिः ॥ ११४

अधीतपञ्चाशुगबाणवञ्चनौ स्थितामदन्तर्बहिरेषिचेदुरः ॥ स्मराशुगेभ्योहृदयंविभेतुन प्रविश्यतत्वन्मयसंपुटेमम ॥ ११५ ॥

अधीतेति । हेकामपीडायाअदर्शनादधीताऽभ्यस्तापञ्चाशुगस्यकामस्य बाणवञ्चनायस्यास्त्वबुद्धिः । मदन्तःमन्मनसिस्थितात्त्वयहिर्देशेपिउरश्चेत् एषिप्राप्नोषितर्हिकृतमदनबाणवञ्चनायास्तवोभयत्रवर्तमानस्वात्त्वन्मय सम्पुटेत्वद्रूपेसम्पुटेप्रविश्य ममहृदयंस्मराशुगेभ्योनाविभेतु । चिरकालंम नसिस्थितापिहृदयंबहिस्खेदालिङ्गितहिंस्वदालिङ्गनवशान्मम कःसकलरोपिशान्तिमुपेष्यतीतिभावः ॥ ११५ ॥

परिष्वजस्वानवकाशताणता स्मरस्यलग्नेहृदयद्वयेस्तुनौ ॥ दृढामयत्वत्कुचयोःकठोरयो रुरस्तटीयंपरिचारिकोचिता ॥ ११६ ॥

परीति । हेभैमीत्वंमांपरिष्वजस्वआलिङ्ग्यकिमितिनौआवयोर्गाढा लिङ्गनवशान्निरन्तरंमिथोलग्नेमिलिते हृदयद्वयेवेध्येस्मरस्यानवकाशता णतानिरवकाशताणत्वंअस्तुनिबिडसंलग्नेवस्तुद्वयेह्यवकाशलेशोपिनलभ्यं तइत्यर्थः । ममदृढातिकठोराविशालाचेयमुरस्तटीवक्षस्तटीकठोरयोस्त्व

रकुचयोः परिचारिकासेवाकर्त्रीसमुचिता । तुल्ययोरेवसेव्यसेवकभावोघट तइत्यर्थः । आलिङ्गनयोग्यत्वमेवसूचितम् । द्वयोरपियथाकामपीडानम्र वलितयाविधेयम् । गाढालिङ्गनदेहीतिभावः । परिव्रजस्वेतिपरिनिवि श्यइतिपत्वम् ॥ ११६ ॥

**तवाधरायस्पृहयामियन्मधु स्रवैःश्रवःसाक्षिक माक्षिकागिरः ॥ स्त्रधित्यकासुस्तनयोस्तनोतुते ममेन्दुलेखाभ्युदयाद्भुतंनखः ॥ ११७ ॥**

तवेति । हेभैमितस्मैअधरायस्पृहयामित्वदीयमधुरमभिलषामि ।तव गिरोयन्मधुस्रवैः यस्यअधरस्यमधुराणिक्षरैःकृत्वाश्रवसीकर्णौसाक्षिणौयस्य तच्छ्रवःसाक्षिकंमाक्षिकंमधुयासुएवंभूताःसन्ति ओष्ठस्यामृतरूपत्वात्तदुत्प न्नावाचः कर्णयोरमृतरूपाभवन्तीत्यर्थः । तथाममनखस्तेस्तनयोरधित्य कासुऊर्ध्वदेशेषुइन्दुलेखायाअभ्युदयउदयस्तेनयदद्भुतंआश्चर्यंतत्तनोतुक रोतु । नखक्षतस्यार्धत्वाच्चन्द्रकलाकारत्वाच्चन्द्रोयमचन्द्रकलोदितेतिवि स्मयादेवंद्विभवत्वित्यर्थः । ओष्ठपानमखक्षतेच्छुरस्मीतिभावः । अधित्य केतिस्तनयोरुदयशैलत्वंचन्द्रकलायास्तत्रोदयात् । कलोदयमस्तयोरस्माभ वति । अधरायस्पृहेरीप्सितइतिसंप्रदानत्वम् ॥ ११७ ॥

**नवर्तसेमन्मथनाटिकोकथं प्रकाशरोमावलिसूत्र धारिणी ॥ तवाङ्गहारेरुचिमेतिनायकः शिखाम णिश्चद्विजराड्विदूषकः ॥ ११८ ॥**

नेति । हेभैमिप्रकर्षेणकाशतेशोभतेप्रकाशाशोभमानारोमावलिरेव सूत्रं धारयत्येवंशीलात्वमन्मथनाटिकाकामस्यउन्मादयित्रीकथंनवर्तसे अपितु कामंहर्षंकरोषिअङ्गसम्बोधनेभवहारेमुक्तावलिहारेनायकोमध्यमणिःरुचिं एतिदेदीप्यते । अपरंउज्वलत्वाद्वर्तुलतरत्वादाल्हादकत्वाच्चद्विजराड् विदूषकश्चन्द्रतिरस्करणशीलः शिखामणिर्मुकुटमणिःशिखायांचडोमणिर पिरुचिमेति । द्विजराड्विदूषकत्वंउभयोरपिचा । तवविलोकनान्मदीयः कामःसहर्षोभवतिवर्धतेतरामितिभावः । नाटिकापक्षेप्रकाशरोमावलिरेसू त्रधारोनान्दीश्लोकानन्तरंसञ्चारीकथाप्रस्तावकःपात्रविशेषः सश्चस्यअस्ती

तथातवअङ्गहारेअङ्गविक्षेपनृत्येनायकःसभापतिःरुचिरांप्रीतिमितेति । त याद्विजराड्व्राह्मणएवविदूषकस्तपरिहासकंमित्रंरुचिमितेति । शिखायांसखि रस्यविदूषकस्यववासः । अङ्गहाङ्गविक्षेपवृत्यनायकंस्मरःरो । पीठमर्दो विटश्चैवविदूषकइतित्रिधा । हासकृच्चविदूषकश्चतिस्त्रालङ्कारिकाः ॥११८॥

शुभाष्टवर्गस्त्वदनङ्गजन्मन स्तवाधरेलिख्यतयत्र लेखया ॥ मदीयदन्तक्षतराजिरञ्जनैः सन्नूर्जता मर्जतुविम्बपाटलः ॥ ११९ ॥

शुभेति । हेभैमितवानङ्गस्यकामस्यजन्मनःउत्पत्तेःशुभसूचकःअष्टवर्गः ज्योतिःशास्त्रेप्रसिद्धः सलेखयायत्रतवाधरेआलिख्यतज्योतिर्विदाप्रस्ताणीवे त्यर्थः । बिम्बफलवत्पाटलवर्णःसःअधरःमदीयायादन्तक्षतराजिस्तयाक्र त्वारञ्जनानितैःकृत्वाभूर्जतांभजतु । नाङ्गजन्मानङ्गजन्मामानस.पुत्रस्त स्योत्पत्त्याप्तज्जन्मपत्रिकाज्योतिर्विदाभूर्जपत्रेएवलिख्यते । पुत्रेजातेज्यो तिर्विदातस्यजन्मकालीनःशुभाष्टवर्गोलिख्यते । त्वदोष्ठोष्ठाधररेखावान् । दन्तक्षतसुन्दरोभूर्जपत्रेणउपनीयते । अष्टकवर्गस्तुज्योतिःशास्त्राज्ज्ञात व्यः । लेखयालेखाभिरित्यर्थः ॥ ११९ ॥

गिरानुकम्पस्वदयस्वचुम्बनैः प्रसीदशुश्रूषयितुंम याकुचौ ॥ निशेवचान्द्रस्यकरोत्करस्यय न्ममत्वमेकासिनलस्यजीवितम् ॥ १२० ॥

गिरेति । त्वङ्गिराऽनुकम्पस्वअनुगृहाण । चुम्बनैर्दयस्वानुकम्पस्व । मयाप्रयोज्येनकृत्वाकुचौशुश्रूषयितुंप्रसीद । यद्यस्मात्त्वमेकाकेवलामस्य ममजीवितमसि । कस्यकेवचान्द्रस्यकरोत्करस्यकिरणसमूहस्यनिशेवरा त्रिरिव । तस्यजीवनंनान्यत्तथेतिपूर्ववत् । त्वदधीनजीवितएवाहम्ब्रु म्बनादिनामामनुगृहाणअन्यथाजीवनमेवनभविष्यतीतिभावः ॥ १२० ॥

मुनिर्यथात्मानमथप्रबोधवान् प्रकाशयन्तंस्वम सावबुध्यत ॥ अपिप्रपन्नांप्रकृतिंविलोकयता म वाप्तसंस्कारतयासृजाद्गिरः ॥ १२१ ॥

मुनिरिति । अथप्रबोधवान्गतभ्रान्तिरसौनलःनलोहमितिनलत्वेनप्र

काशयन्तङ्कथयन्तंस्वमात्मानंप्रबुध्यतजानातिस्म । आत्मानङ्कथयतामया दूतधर्मःपरित्यक्तःअनुचितङ्कृतमित्यजानादित्यर्थः । नलत्वकथनमात्रेण तान्वनैसर्गींप्रकृतिंरोदनात्पूर्वावस्थाम्प्रपन्नांप्राप्ताम्विलोक्यजातबोधत्वाद्दूतोहमितिप्रवाप्तसंस्कारतयाप्राप्तबुद्धितया वक्ष्यमाणागिरःअप्यसृजत् । नलत्वनिश्चयेनत्यक्तरोदनान्तांदृष्ट्वात्मानमेवोद्दिश्यदूतधर्मोचितमाह स्मेतिभावः । नलत्वनिश्चयेनगतमोहत्वन्तेनप्राप्तबोधयाकृत्वाप्रकृतिप्रपन्नाद्दतिवाअन्वयः । उद्बुध्यदूत्यसंस्कारत्वेनप्राप्तामागतान्तांदूतधर्मयुक्तांस्वामेवप्रकृतिम्विलोक्यदूतधर्मोचितमेवाबोधदितिवा । मुनिर्यथाय तिरिव । वेदान्ताभ्यासेनशमदमादिद्वाराप्रबोधवान् संसारविनाशसमर्थःप्रकृष्टज्ञानयुक्तोयतिःस्वप्रकाशंसच्चिदानन्दैकरसं आत्मानंअहंब्रह्मास्मीतिबुध्यतेबुद्ध्वाचउद्बुद्धजन्मान्तरीयसंस्कारतयाप्राप्तब्रह्मज्ञानतयावा तां प्रसिद्धांसंसारजनिकासत्वरजस्तमःसाम्यावस्थारूपांप्रकृतिमनादिमविद्यां प्रकर्षेणापन्नांपृथग्भूतांज्ञात्वाऽहंमनुरभवंसूर्यश्चाहङ्कक्षीवान् ऋषिरस्मि विप्रः । अहङ्कुत्समार्जुनेयंन्यृञ्जेहङ्कविरुशनापश्यतामेत्यादिवामदेव ऋषिवदित्यर्थः । मुनिरप्यात्मानंप्रकृतिम्वविवेकेनज्ञात्वामुक्तःप्रबोधवान्संसारविनाशसमर्थःप्रकृष्टज्ञानयुक्तोयति सन्वागादिदिव्यव्यवहारान्सृजति मुञ्चतीतिकेचित् ॥ १२१ ॥

अयेमयात्माकिमनिह्नुतीकृतः किमत्रमन्तासतुमांशतक्रतुः ॥ पुरःस्वभक्त्याथनमन्ह्रियाविलो वि
लोकिताहेनतदिङ्गितान्यपि ॥ १२२ ॥

अयेति । मयानलोहमितिआत्माकिमितिअनिह्नुतीकृतःप्रकटीकृतः । अयेखेदेमहदनुचितङ्कृतमित्यर्थः । अत्रआत्मप्रकटनविषयेसशतक्रतुस्तुपुनःमाङ्किंकिंप्रकारंमन्ताज्ञास्यति । ममअसाधुत्वमेवब्रूयादित्यर्थः । शापदानसामर्थ्यद्योतनायशतक्रतुरितिपदम् । पुरःपूर्वंस्वभक्त्यानमन्सन्अथपश्चाद्ध्रियाअकृतकार्यत्वाल्लज्जयाआविलःकलुषितःसन् अतितरांनमन्नित्यर्थः । तदिङ्गितान्यपिकोपाविष्टस्येन्द्रस्यभ्रूभङ्गादीन्यपिनविलोकिताहेनविलोकयिष्यामि । प्रसादत्वानिदूरतः । अन्योप्यपराधीस्वामिनःकोपचिन्हंभ्रूकुट्यादिनाविलोकयति ॥ १२२ ॥

स्वनामयन्नाममुधाभ्यधामहो महेन्द्रकार्यंमहदेत
दुज्झितम् ॥ हनूमदाद्यैर्यशसामयापुन र्द्विषांहसै
र्दूत्यपथः सितीकृतः ॥ १२३ ॥

स्वनामेति । नामप्रकाश्येहेदेवाः अहंयत्स्वनाममुधाव्यर्थमेवाभ्यधा
यितन्महन्महेन्द्रकार्यमुज्झितन्त्यक्तंविनाशितमित्यर्थः । अहोमहदनु
चितमेतत् । अनुचितत्वमेवाह । हनूमदाद्यैः श्रीरामादिदूत्यकारिभिः
दूत्यपथःयशसाकीर्त्यासितीकृतःकार्यस्यसाधितत्वात्मयापुनर्द्विषांहसैर्हा
स्यैःसितीकृतः । तैस्तुयशोलब्धंमयाइन्द्रादिदूत्यार्थंकृतःस्वीयमेवदूत्यंकृत
वानित्यादिवैरिहासरूपमयशोलब्धम् । शितीकृतइतिपाठेशितीकृतः
श्यामीकृतश्चेतिव्याख्येयम् ॥ १२३ ॥

धियात्मनस्तावदचारुनाचरं परस्तुतद्वेदसयद्वदि
ष्यति ॥ जनावनायोद्यमिनञ्जनार्दनङ्क्षयेजग
ज्जीवपिवंशिवंवदन् ॥ १२४ ॥

धियेति । अहंआत्मनोधियाबुद्ध्यातावदचारुइन्द्रादिप्रतिकूलंनाचरं
नकृतवान् किंतून्मादादेवस्वनामकथितमित्यर्थः । सःप्रसिद्धःपरोन्योदुर्ज
नोवातुपुनर्यद्वदिष्यतितदहंवेद । दुर्जनोहियथावृत्तंनवदतिकिन्तुविप
रीतमेववदतीतिख्यातमित्यर्थः । तदेवविशेषणेनाह । किंभूतःपरःजना
नामवनायपालनायउद्यमिनमुद्युक्तंजनार्दनंपालिपीडयतीत्येवंशीलंव
दन्तथाक्षयेप्रलयेजगज्जीवपिवंजगत्प्राणहरंमहादेवंशिवंमङ्गलंवदन् । अ
नर्गललोकइत्यर्थः । लोकोक्तेर्निवारणेकवनप्रतीकारोनास्तीतिभावः ।
नन्द्यादित्वाज्जनार्दनः । जीवपिवंपाघ्रादिनाशः ॥ १२४ ॥

स्फुटत्यदःकिंहृदयन्त्रपाभरा द्यदस्यशुद्धिर्विबुधै
र्विबुध्यताम् ॥ वदन्तुतेतत्वामिदन्तुदन्तुर जना
ननेकःकरमर्पयिष्यति ॥ १२५ ॥

स्फुटतीति । आत्मप्रकाशनादकृतकार्यत्वाच्चत्रपाभरोलज्जातिबाहुल्यन्त
स्मादहोहृदयकिमर्थंस्फुटति । यद्यस्माद्विबुधैर्देवैरस्यहृदयशुद्धिर्विबुध्य
ताञ्ज्ञायतां । तुपुनःतेविबुधाःइदन्दन्तुरंविषमन्तत्त्वंमयाबुद्धिपूर्वंकृतंअनु

द्धिपूर्वकस्येतिविदन्तु । लोकाजानन्तुवामाजानन्तु । अत्रलौकिकस्राभ शकमाह । जनाननेकःकरंहस्तंअर्पपिष्यति । त्वयाएवंनवक्तव्यमितिमु खहस्तदानेनलोकंप्रतिमेदृधृक्कुःशक्नोत्यपितुनकोपि । लोकोयत्किञ्चिद्व दतुनामेतिभावः। हृदयस्फोटनाजाबेपितेदेवास्तत्वंयथार्थंजानन्तु। अन्य दपिसन्दिग्धंप्रमेयंपण्डितेनपरीक्ष्यतत्वतोनिर्णीयतेनतुसामान्यलोकैः १२५

ममभ्रमश्चेतनयानयाफली बलीयसालोपिचसैवबे धसा नवस्तुदैवस्वरसाद्विनश्वरं सुरेश्वरोपिप्रति कर्तुमीश्वरः ॥ १२६ ॥

ममेति । अनयाचेतनयादूतोहमितिदूतत्वप्रतिपत्त्याकृत्वाममभ्रमःदूत लक्षणःफलीसफलोजातःस्यात् बलीयसावेधसादैवेनसैवचेतनालोपि नाशिता । दैववशाद्भ्रान्त्यात्मकथनात्प्रसोव्यर्थएवजातइत्यर्थः ॥ चेत नारक्षणेत्वयायत्नःकिमितिनकृतइत्यतआह । स्वप्रासौरसश्चस्वरसःस्वे च्छादैवस्यस्वरसात्स्वेच्छयाविनश्वरंविनाशितंवस्तुप्रतिकर्तुंव्यिकित्सितुंसुरे श्वरःशक्रोपिईश्वरोनसमर्थोनकिंपुनःरन्यः । मयाऽबुद्धिपूर्वमेवआत्मप्र काशनकृतमितिभावः । तस्मान्ममापराधोनास्तीत्यर्थः ॥ १२६ ॥

इतिस्वयंमोहमहोर्मिनिर्मितं प्रकाशनंशोचतिने षधेनिजम् ॥ तथाव्यथामग्नतदुद्दिधीर्षया दया लुरागाल्लघुहेमहंसराट् ॥ १२७ ॥

इतीति । निषधेश्वरेनलेस्वयमात्मनैवमोहमहोर्मिनिर्मितंभ्रान्तिबाहुल्य वशात्कृतंनिजंस्वीयंप्रकाशनंप्रकटनंइतिपूर्वोक्तप्रकारेणशोचतिनिन्दतिस तितद्विषयेपश्चात्तापङ्कुर्वतिसति दयालुःहेमहंसानांराजा तथानिर्वचनीया व्यथापीडातस्यांमग्नश्चासौसचतस्यउद्दिधीर्षयाउद्धरणेच्छयालघुशीघ्रं अ गाञ्चलम्प्रतिप्राप्तवान् ॥ १२७ ॥

नलंसतत्पक्षरवोर्ध्ववीक्षणं सएषपक्षीतिभणन्त मभ्यधात् ॥ नयादयैनामतिमानिराशता मसूञ्चि हातेंयमतःपरंपरम् ॥ १२८ ॥

नलमिति । सहंसःतस्यहंसस्यपक्षरवःपक्षवातभवःशब्दःतेनकिमेतदा

यातीतिवुद्ध्याऊर्ध्ववीक्षणंउपरिविलोकनंअनन्तरञ्च इतिभणन्तंनलम स्यधात् । इतिकिम् । कुतोमहोपकारःसएवएषपक्षीहंसइति । हेअदय निष्कृपनलएनांभैमींनिराशतांआशारहितांअतितरांमानयमास्मनैषीः । स्वप्रकाशनकृतस्त्वन्निन्दयाभस्यस्याअनुरागोनत्रियतइतिप्रतीत्याएषानिरा शाभविष्यतितथामाकार्षीरितिभावः । अतेरुपसर्गत्वात्तेप्राग्धातोरितिनि यमात्पूर्वमेवप्रयोगस्यऔचित्येपिमहाकविप्रयोगाद्व्यवहितानामपिप्रयोगः साधुः । आविश्चसुपोऽत्रयत् । विलोलजिह्वायुगलीढोभयसृक्कभागमित्या दय प्रयोगाः । अतिशयितामाशोभाराज्यलक्ष्मीर्वायस्याः इयमित्यस्यविशे षणं समासनिराशतांनयइत्यन्वयः । हेअतिमअतिशयितामाशोभाराज्यल क्ष्मीर्वायस्येति अतिसुन्दरत्वाद्बहुधनत्वाच्चत्वमेवअस्यायोग्योनान्यइतिन् चितमितिवा । अतिक्रान्तामामतिमा सुन्दरीकेवलंअत परंप्राणांस्त्यक्ष्य तित्वद्विनाएवंविधंसुन्दरंवस्तुवृथाएवयास्यतीतिसूचितम् ॥ १२८ ॥

सुरेषुपश्यन्निजसापराधता मियत्प्रयस्यापितद र्थसिद्धये ॥ नकूटसाक्षीभवनोचितोभवा न्सतां हिचेतःशुचितात्मसाक्षिका ॥ १२९ ॥

सुरेष्विति । हेनलभवान्तेषान्देवानामर्थसिद्धयेप्रयोजनसिद्धयेइयदेता वत्प्रयस्यापिबहुतरंप्रयासङ्कृत्वेत्यर्थः । सुरेषुदेवविषयेअनुचितमेतन्मया कृतमितिनिजसापराधतांस्वीयमनुचितकारित्वंपश्यन् जानन्कूटसाक्षीभ वनोचितोनभवति । कूटोऽसत्यश्चासौसाक्षी सत्येपिपरकीयेऽर्थेऽलीकं भाषतेसकूटसाक्षीअकूटसाक्षिणः कूटसाक्षिणोयद्भवनन्तत्कूटसाक्षिभवनन्त दुचितोनभवतीत्यर्थः । हियस्मात्सताञ्चेतःशुचिताआत्मैवसाक्षीयस्यामेवं विधामतुपरसाक्षिकीभयानिष्कपटत्वत्यंकृतमितितत्वन्ताव ज्जानासि । स त्तश्वालीकंभाषितुमपिस्वचेतसैवलज्जन्तेतवचसत्यत्वंइलोकत्रयप्रसिद्धन्दे वाअपिसर्वसाक्षित्वात्स्वयमेवत्वदीयं शुद्धत्वंजानन्तिकिमनेनलोकेनेति भावः । आत्मसाक्षिकेतिशेषाद्विभाषेतिकप् ॥ १२९ ॥

इतीरिणापृच्छ्यनलभ्विदर्भजा मपिप्रयातेनखग गेनसान्त्वितः ॥ मृदुर्वभाषेभगिनीन्दमस्वसुः प्र णम्यचित्तेनहरित्पतीन्नृपः ॥ १३० ॥

इतीति । सनृपः चित्तेनहरित्पतीन्प्रणम्यअतःपरंममकरणीयङ्किमपि नावशिष्टम् । क्षम्यताइतिमनसैवदेवान्नमस्कृत्यमृदुःसदयःसन्दमस्वसुर्भ गिर्नीवजाये किन्नुतइतिपूर्वोक्तं हरिणाग्रुवाणेनलम्बिदर्भजामपिञ्चापृ च्छप्रयातेनयातुमारब्धेनखगेनहंसेनसान्त्वितः । प्रयातेनेत्यादिकर्मणिक्तः कर्त्तरिचेतिक्तः ॥ १३० ॥

ददेपितुभ्यहुंकियतीःकदर्थनाः सुरेषुरागप्रसवोव केशिनीः ॥ अदम्भदूत्येनभजन्तुवादया न्दिशन्तु वादण्डममीममागसा ॥ १३१ ॥

ददेपीति । हेभैमिअहन्तुभ्यंअपिअतिनिर्दयदूत्यकरणजनिताःकियतीः कतिसङ्ख्याकाःकदर्थनाःपीडाःददे ददामि । अतःपरन्तद्विषयङ्किम पिनवदिष्यामीत्यर्थः । यतःसुरेषुरागोनुरागःतल्लक्षणस्तस्यवाप्रसवोङ्कुरः उत्पत्तिर्वा । तस्यावकेशिनीनिष्फलाअनुरागानुत्यादिकाइत्यर्थः । उद्यमः कार्यजनकश्चेद्भवतितर्हिदुःखमपिदातुमुचितम् । प्रकृतेएतावतिदूत्येकृत पितवतेषु अनुरागाङ्कुरोपिमोत्पन्नस्तस्मात्तवपीडाकरमतःपरङ्किमपिमव दिष्यामीतिभावः । अत्राङ्कुरोत्पत्तिरपिनोदेतितत्रफलाशाकुतस्त्या । तव पीडादानेनममापिपीडाजातेतिअपिशब्दार्थः । गर्हायांवापिरनुचितमे तदित्यर्थः । एवंसतिअमीदेवाःअदंभदूत्येननिष्कपटदूत्येनकृत्वादयांम मकृपांवाभजन्तुकुर्वन्तु । कार्यासाधनरूपेणआगसाअस्मदीयङ्कार्यम्विना श्यस्वीयकृतमितिअपराधेनदण्डंशासनंवादिशन्तुकुर्वन्तु । तत्कृतंदण्ड मपिसहिष्येपरन्तुत्वंदुःखन्दातुंनोत्सहेइतिभावः ॥ १३१ ॥

अयोगजामन्वभवंनवेदनां हितायमेभूदियमुन्म दिष्णुता ॥ उदेतिदोषादपिदोषलाघवङ् कृशत्व मज्ञानवशादिवैनसः ॥ १३२ ॥

अयोगजामिति । इयंउन्मदिष्णुतामेमह्यं हितायअभूत्यतोहंअयोग जाम्विरहजनितास्वेदनांपीडांनान्वभवंउन्मादेन सुखवशान्मयाविरहपी डाविस्मृतातस्मादियमुन्मादताममगुणायैवजातेतिभावः । अथवानयोगः अयोगः तज्जांसंसारजन्मिनींपीडांनान्वभवङ्किन्तुपरमानन्दमन्वभवमित्य

